पादः । तत्पादरजःकणोल्लसितोत्तमांगः सद्यःस्तवनेन हृदयकुहरादुद्गिरता प्रबोधयामि विरुवन्नुच्चैः स्वरेणासंप्रज्ञातसमाधिस्थमिव करस्फालनेन इति रुदन्नेव निःसरद्वर्णपदवाक्यघटितभक्तिरसभासुरपीयूषप्रवाहधुन्या मनसि कृतां गुरुराजस्य मनोज्ञमूर्ति तप्तकांचनसंकाशामक्षमालाकमण्डलुधारिणी श्रीमन्मूलरामचंद्रपदकमलवंभ्रमरायमाणां ध्यानमुद्रांकितविकसितप्रफुल्ललोचनां प्रपूजयामास विगतबाह्यचेष्टः ननर्त च ग्रहग्रस्तः प्राकृतपुरुष इव । तथैव धावन् क्रोशद्वयं स्तुवन् गुरुकारुण्यं महिमान चानितरसाधारणं प्रपेदे वृन्दावनतटं प्रत्यग्रनिर्मितशिलाफलकसंघटिताकृतिम् । गुणगणगणनानिगीर्णवाणीसरणिरवधूतशिरोमणिरप्पणाचार्यो भक्ताग्रणीः सद्यश्चरमवर्णमुदीरयन्नाह "यो भक्त्या गुरुराघवेंद्र चरणद्वंद्व स्मरन्यः पठेत् । स्तोत्रं दिव्यमिदं सदा न हि भवेत्तस्यासुखं किंचन ॥ किंत्विष्टार्थसमृद्धिरेव कमलानाथप्रसादोदयात् कीर्तिर्दिग्विदिता विभूतिरतुला, तदेवांतर्वृंदावनात् निःसृता वाणीरोचिष्क्रपाणी संसारदुःखांधतमसस्य "साक्षी ह्यास्योऽत्र हि" इति । तच्छ्रुत्वा निकषा विषीदन्मुग्धो जनस्तोम गुरुराड्ध्वनिरयं परिचितरवघटितः कर्णकुहरनभस्तटमताडयन्मञ्जुलस्पर्शेनेति बहुमन्यमानः वृन्दावनादधिगताभयवचन गुरुपादप्रपन्नमप्पणार्यवर्यमस्तौपीन्मुक्तकण्ठं विवृतवदनं नूनमसौ गुरुभरुकरुणाभरणभाजनं सफलवाग्विसर्गः सिद्धपुरुषः इति ।

जनस्तोमात्कविरेकः उद्धृतबाहुरुच्चैः स्वरेणागायत संगीतकेन गुरुमहिमानमनूनकुशलनिधानं ।

द्रुहिणचरणसक्तः शंकुकर्णः पुरा यो ।
नृहरिकरुणयासीद्दिव्यसंपत्सुभोक्ता ।
अदितिसुतसुबालो व्यासयोगी च योऽभूत् ।
स ननु गुरुवरः श्रीराघवेंद्रप्रथाभाक् ॥३७॥

यन्नामग्रहणं सुपापदलनं सच्छास्त्रविज्ञानदं ।
यन्मूर्तिग्रहणं गुणार्णवहरेः मांगल्यधामप्रदम् ॥
यत्कीर्तिश्रवणं पुराणपठनं सन्मन्त्रवर्णाहृतं ।
तं पुण्यप्रथिमानमप्पणमुनिर्वाचा तुतोषाद्भुतम् ॥३८॥

निषीदति चिरं गुरुरसौ वरमंदिरेऽत्र ।
न सीदति जनोऽत्र रतिकृत् हरिवायुधाम्नि ।
रवौ वियति भास्वति भृशं क्व च रात्रिभीतिः ।
विधौ हसति मंगलभूम्नि क्व दरिद्रतार्तिः ॥३९॥

वंदेऽहं करुणासिंधो राघवेंद्र वरप्रद ।
दीनं मां शरणं यातं वीक्षस्व मृदुवीक्षणैः ॥४०॥

अद्यापि बाभाति गुरुर्विशाले सन्मन्त्रधामन्यतुलप्रभावः ।
यं सेवमानः सृतिसंगदूरः प्रयाति मुक्तिं हरिसंगपूताम् ॥४१॥

—इति ।

श्री सुयमींद्रगुरुवरेण्याः

पूज्यपादानां तत्रभवतां सानुग्रहाज्ञां शिरसि वहन् कलियुगकल्पतरुरिति प्रथितयशसां देवस्वभावाना देवेंद्रसभासु सनृत्यगीतवाद्यैः सुरैः संगृह्य कीर्तनीयां शुभसंपत्प्रदां कथां संक्षेपेण निरूप्य पूज्यपादचरणकमलयोः भक्त्या समर्पयामि । इतः परं गुरुवराणां श्रीराघवेंद्रतीर्थमुनींद्राणां प्रतिहायनं श्रीमन्त्रालयक्षेत्रे ससंभ्रमं सकलविद्वद्वरेण्यैः षट्शास्त्रावगाहनपटुभिः अन्यैः सकलधर्माभिमानिभिः श्रद्धालुभिः आविपालगोपालं समनुष्ठीयमानं सप्तरात्रोत्सवप्रसंगं वर्णयितुकामः श्रीपादानां अनूनानुग्रहमपेक्षमाणः संप्रार्थये सांजलिबंध श्रीपादपदरेणुधूसरितापादतलमस्तकांगः अनुज्ञाप्रदानेन मां कृतार्थीकुर्वंत्विति ।

श्रीपादा अपि श्रीसुयमींद्रसंयमींद्राः श्रीगुरुसार्वभौमचरितं आमूलावतारसंदर्भपरिष्कृतं मृदुमधुरललितविशदपदभासुरबंधेन सुबंधुरांगं भक्तिरसपरिप्लुतं काव्यमयं चंपूप्रबंधं समादरोन्मेषमालोड्य निशम्य मंदहासोल्लसितकपोलाः सानंदाश्रूणि कांतिमन्मुक्ताफलनिभानि विमुञ्चंतः तैरवनतस्य मम मूर्धानमासिचंतः भास्वत्तेजःस्यंदिभिः कमलपत्रायतविशालनेत्ररश्मिभिः कनीनिकाकालिम्ना धावल्येन च पिशंगैः कटाक्षैः स्मितसुधामधुरैः मामवलोकयंतः जगदुः सूनृतया गिरा ।

वत्स राघवेंद्र, धन्योऽसि कृतकृत्योऽसि प्रबंधस्यैतस्य साहित्यवेदांतालंकाररसगुणभूषितस्य निर्माणेन श्रीगुरुसार्वभौमराघवेंद्रतीर्थचरणानां निरौपधं गुरुसपर्यां विधास्यन् । स्थाने खलु भक्तिरसस्य परिपाकः सुषमां वहति श्रीहरिवायुभक्ताग्रगण्यश्रीराघवेंद्रतीर्थ-

कथानुवादे । परितुष्टा वयं सप्तरात्रोत्सवमहिमानमपि निर्वर्णयितुमतीव कुतुकिनः । तमपि कथानकं रसभावपोषं भक्तिरसादर्शं प्रबंधवपुषं श्रोष्यामस्तव मुखाद्विशदासंकीर्णवर्णच्चारणपाटवात् । इत आगच्छ स्वीकुरु अस्मदाशीर्भिरंकिताः पुष्पफलमृत्तिकासनाथाः अक्षयशुभोदर्काः मंत्राक्षताः । इति ।

तत्रैव समासीनाः श्रीपादपुत्राः प्रहसितवदनाः प्रफुल्लोर्ध्वपुण्ड्रगंधाक्षतांगाररेखाभिः भास्वद्विशालफालफलकाः नीलमाणिक्यं हैममणिनिचिततुलसीमणिहारैः आनाभ्यालंबिभिः समलंकृतग्रीवावक्षस्तटाः अनर्घसौवर्णतंतुखचितकौशेयवासः परिदधानाः चित्रवर्णकक्षौमोत्तरीयपरिच्छन्नवृषस्कन्धाः सौवर्णतंतुघटितौर्णवाससोत्तरीयेणालंवितोरस्कन्धाः ससंभ्रममुत्थाय सकरास्फालनं मामभिनदंतः अभिरूपमणिभूयिष्ठे सदसि मामेवं जगदुः । भो वयस्य, अवितथफलं खलु महात्मनां वदनारविंदान्निःसृतं वचनामृतम् । धन्योऽसि । फलिताऽद्य तवाकुटिला गुरुभक्तिः । आजीवमनुष्ठितं सात्विकं तपः गुरुतोषकारि संजातं । इतोऽभ्यधिका कृतकृत्यताऽस्य जन्मनः सप्तरात्रोत्सवकथानुवादेन चंपूप्रबन्धेनाऽवश्यंभाविनी निरीक्ष्यतेऽस्माभिः परिषत्सदस्यैः । इति ।

**श्रीमन्मध्वमताब्धिवर्धनविधुः श्री संयमींद्रो गुरुः ।**
**निर्वर्ण्याद्भुतवाक्प्रबन्धलसितं श्री सप्तरात्रोत्सवं ॥**
**तुष्टः श्रीसुयमींद्रपूज्यचरणः निर्मातुमाज्ञां ददौ ।**
**शिष्टं पुष्टिकरं गुणं श्रुतिमतस्यालंबनं वाक्चयैः ॥४२॥**

**शंकूकर्णकथां नृसिंहचरितं प्रह्लादविज्ञानदं ।**
**श्रीव्यासस्य मुनेः कृतीरनुपमाः सत्तत्वमार्गप्रदाः ॥**
**प्रह्लादांशजराघवेंद्रगुरुराटचारित्रमत्यद्भुतम् ।**
**चक्रे पंचमुखीत्युपाधिगुणभाक् श्रीराघवेंद्रः कृती ॥४३॥**

**॥ श्रीगुरुसार्वभौमाणामवतार कथामृतम्—३ इति षष्ठ उल्लासः ॥**

॥ श्रीः ॥

॥ श्रीराघवेंद्रः प्रसीदतु ॥

# सप्तम उल्लासः

## श्रीगुरुसार्वभौमसप्तरात्रोत्सवे प्रथमदिनोत्सवः

अहो नु खलु फलति पचेलिमासुकृतपरिपाकस्य संचितस्य प्राक्तनजन्मसु यद्गुरुवरेण्यैः श्रीसुयमींद्रतीर्थपूज्यपादैः निरपवादमधुरभावभावितकृपापारावारैः भक्तानुग्रहैकप्रवणचित्तैरादिष्टोऽहं श्रीगुरुसार्वभौमसप्तरात्रोत्सवसंकथाऽनुवादकर्मणि सुभर्मणि। कथंकारमिममादेशमविकलमाहर्तुमलंभवेयमसन्नद्धपरिकरप्रकारः अनधिगतविद्यावैभवः अनुपासितगुरुपद पङ्कजकिंजल्कः। न हि कोऽप्यनुन्मत्तः विततमपरिच्छिन्नमाकाशं वितस्त्या परिच्छेत्तुमीहते। न ह्यपारतीरवारिधि वाहुनौकया सततु प्रभवति परिमितबलो मानवो वराकः। त्रैविक्रमः पराक्रमः कथं संजाघटीति एकमपि क्रममाक्रान्तुमक्षमे दीनेऽणुपरिमाणे मयि। एवं हास्यपदभाजनमप्ययमात्मा विस्रंभेण प्रवर्ततेऽस्मिन् गुरुवरे दुरधिरोहकर्मणि नूनं केवलं गुरुकारूण्यैकसरणिशरणः। क्षाम्यंतु महांत. इममविनयमुदारहृदयाः। एतत्कर्मनिर्वाहिक्षमांतःसत्त्वस्पर्शनेनानुगृह्णन्त्विति संप्रार्थये।

अहो ! किमिदं जोघुष्यते पटहाभिघातेनानारतमुच्चैःस्वनेन। किमिति ?

अक्षीणमक्षमनिरक्षरकुक्षिभिः क्ष्मा-।<br>
कक्षो भृशं क्षुभित इत्यनुदारदृग्भिः॥<br>
दैत्यैः स्वयं वृजिनकर्मभिरात्तसत्वाः।<br>
देवाः स्वपक्ष बलसंहतिमर्थयंते ॥१॥

अद्य प्रभृत्यनुदिनं दिनसप्तकेऽत्र।<br>
सत्रे निबद्धकटयः खलु पापहत्यै ॥<br>
भूत्यै महीसुरवराः दिविजेंद्रभक्ताः।<br>
आयांतु सत्वनिधयस्त्वरयाऽविलंबम् ॥२॥

मन्त्रालये नृहरिभक्तसुपूतदेशे
श्रीराघवेंद्रगुरुपादकृताधिवासे ।
प्रत्यब्दमाश्रितजनैर्हरिभक्तपूगै-
रातन्यते गुरुसभाजनकर्मजातं ॥३॥

तस्मिन्महामहे पूज्यः सुयमींद्रगुरुर्गुरुम् ।
सप्तरात्रोत्सवे दीक्षाबद्धः संतर्पयिष्यति ॥४॥

देवा अप्युत्कवदना विमानावलिभिर्मुहुः ।
वाह्यमाना व्योमदेशे प्रचरंति दिदृक्षया ॥५॥

इति त्रिविष्टपमास्पृशद्भिः निनादैः मेघनिर्घोषैरिव प्रतिरवेण मुखरिते दिगतराले ससंभ्रममुत्थितोऽहं सपरिग्रहं सपरिवारं श्रीमन्त्रालय क्षेत्रमुपस्यातुमुद्यत. समुत्सुकचेताः प्रतस्थे । प्रातरेव निर्वर्तितस्नानाह्निकदेवतासपर्य. विगतविपर्यय. कदर्यभावमुत्सार्य निर्ममो निरहंकारः पादयात्रा निरपवादहरिपादनिकटनेत्रीति दृढ मन्यमानः निरागाः निराहारः निरगच्छं पृथुपूटिकासंभारमुद्वहन् विशालस्कंधफलके । प्रातरेव श्रीमन्त्रालयक्षेत्रमुपयात' क्षेत्रयात्रिकमंदिरे विशाले परिहारधनव्ययेनादावात्मसात्कृते प्रावरके सकलत्र पुत्र. निवासमुपाकल्पयम् । सुभगसलिललसितप्रवाहे तुङ्गातरङ्गिण्या' पुनरपि कृतस्नानाह्निकः श्रीगुरुसार्वभौमश्रीराघवेंद्रतीर्थाधिष्ठितं भव्यंवृन्दावनं सदृश्य पूतांतरंग. आविष्ट इव विभूतिविशेषेण विस्मृतस्वपरभाव' कुसुमितलोध्रद्रुम इव हृष्यत्पुलकितगात्रयष्टि मरकतमणिनिचयखचिते त्रिकूटपट्टिकाविभूषिते भव्ये वृन्दावनावसथे निषण्णं दरनिमीलितलोचनं नृहरिरामकृष्णवेदव्यासरूपेण स्वहृदि संनिहितं श्री हरिं ध्यायंतं करधृताक्षमालाकमण्डलु कृशानुसतप्तपुरटपु टवत्प्रकाशमान योगिवर्य मौनिमणींद्रं श्री राघवेन्द्रगुरुभरं वरदहस्तेन भक्तानाकुर्वतमिव प्रसन्नवदनमपश्य मानुषवेषधारिणं देवांशसंभूतं बहुतिथनिचितप्राक्तनजनु.पुण्यपरिपाकेन । दण्डवत्प्रणिपत्य भूप्रदेशे बहोः कालादनागमनापराधं क्षमापयन्नविरताश्रुधारया धरादेवीमभिषिञ्चन् उत्थितः प्रणतकंधरः साञ्जलि बंधं तद्गतदृष्टिः प्रस्तोतुमारेभे स्खलद्गद्गद स्वरेण ।

स्वामिन् प्रदेहि दयया तव पादसेवां ।
मुक्त्यर्थिनोऽकृतमतेः प्रथितप्रभाव ।।
नम्रं नयेममनवद्यगुणार्णवं श्री- ।
लक्ष्मीपतिं भुवनभूषणमादिदेवम् ।।६।।

अज्ञानसंतमसदूषितनष्टदृष्टि ।
ज्ञानार्करश्मिगणशोधितशुद्धसत्त्वम् ।।
तथ्यार्थदर्शनपटुं कुरु मां यथाऽहं ।
मध्वाध्वगो हरिपदं शरणं व्रजेयम् ।।७।।

आयुर्गतं परधनाहरणेहयाऽसद्वु ।
र्दांतमत्तजनसेवनया वृथाऽहं ।।
कुक्षिंभरः स्वगुरुबन्धुजनातिदूरः ।
नष्टोऽस्मि हंत कमियां शरणं विना त्वाम् ।।८।।

त्वं ज्ञानशेवधिरनूनघृणार्णवोऽसि ।
भक्ताश्रयः परहितार्पितचित्तवृत्तिः ।।
संसेवया च नृहरेर्वरमाप्य भूयः ।
राज्यं चिराय वहसि श्रितसाधु भूत्यै ।।९।।

स्वामिन् निशामय ममार्तिरवं मुरारे ।
मार्गं प्रदर्शय गुरो वरवायुधामन् ।
प्राप्तोऽस्मि ते चरणपङ्कजरेणुधूतः ।
पूतः प्रसादजसुखं समियां यथाऽहम् ।।१०।।

इति प्रकामं प्रफुल्लभक्त्युत्तंभितहृत्कुसुमहारेणाजस्रस्रवदश्रुकण-मुक्ताफलनिचितेन पदतलन्यस्तशीर्षफलेन यतिसार्वभौमप्रथमदर्शनो-पहारमुपायनीकृतवान् । उत्थितश्चार्चकमचर्चिकाकृतकुशलाभाषणः सादरमावर्जितशेषाक्षततुलसीपुष्पफलखण्डः खण्डिताहंममतामोहः पुरतः साधयन्नपश्यं श्री वादींद्रगुरुवरेण्यावसथं कलाकृतिचमत्कार-निदर्शन भव्यम् । समनुष्ठितसाष्टांगप्रणतिस्तद्गौरवं श्रीगुरुसार्वभौम-प्रसादभाजनं गुरुगुणस्तवनकीर्तिमहिम्ना संवर्णयन् तदनुज्ञातः सप्रद-क्षिणं गत्वा वहिः प्राकारे श्रीसुधर्मेंद्रश्रीसुव्रतींद्रगुरुन्नत्वा कृतकृत्य-मात्मानं मेने ।

तत्रांतरे परःसहस्रं दिगंतरालात् यात्रिकवृंदं वीचीतरंगन्यायेन

संघशः परापतत् अविच्छेदं । अतिलापातसंघातेन जनाः सम्मिलिताः परस्परं नूतनसंघट्टनकुशलप्रश्नानाभाषमाणाः उत्सवावधिदिनसप्तकमवस्थातुं । दैनंदिनशुल्कसंविदा प्रावरकाणि मार्गयंतः इतस्ततः संचरंतो दृश्यंते ।

एक आहः—प्राप्तमनुकूलव्यावहारौपयिकं गृहं मूल्याल्पकेन ?

अपरः—नितरां दुर्घता स्थलसौकर्यस्य । यत्रकुत्रापि संभारमूटिकामवस्थाप्य श्रीसुयमीद्रमौनीद्रानवलोक्य प्रणामसंभाषणैः संभावयामः । ततः संपादितनियताह्निकसपर्यासंभाराः श्रीतुंगभद्रासरितं मंगलतरंगमालावाहिनी शुभवाहिनी संभाव्य श्लक्ष्णेक्षणैः संप्रोक्ष्याऽऽत्मानं तीरस्थिता. तदनु संकल्पविधिना स्नानमाचरामः । इति अन्योन्यमालपंतः विशंकटतटनिकटे एकस्योपरि अपर इत्यनुक्रमेण प्रातराह्निकं बृहच्छिलाखण्ड एव निषण्णा निरवर्तयन् ।

अद्य ऋग्वेदिनामुत्सर्जनोपाकर्म प्रतिसंवत्सर अनुष्ठीयमानं श्रीगुरुसार्वभौमाणां सन्निधौ याज्ञिकैः पुरोहितैः सविधि निर्वर्तितम् । त्तच्छाखीयब्राह्मणाः तत्तद्देशादागताः सप्तरात्रोत्सवपर्वनिर्वर्णनार्थमस्मिन्नुपाकर्मणि यज्ञोपवीतधारणायोपस्थिताः वेदानुत्सृज्याऽग्नौ आहुतिप्रदानेन शाखाप्रवर्तकर्षीस्तर्पयित्वा नूतनयज्ञोपवीते ब्रह्मविष्णुमहेश्वरान् दोरकाधिष्ठितान् संपूज्य ध्यायंतः साक्षान्नारायणावतारं बटु वामनं चिंतयंत. दक्षिणकुक्ष्यवलंबिसूत्र मन्त्रसस्कृतं स्कंधे धारयामासु. । हव्येन पूतगात्राः पुनः उत्सृष्टान् वेदान् गुरुमुखेनानूदितान् पुनरगृह्णन् उपाकर्माख्यसंस्कारेण । आसहस्रं मिलिता. ब्राह्मणापुरोधसे यथेष्टदक्षिणां दत्त्वा हौमशेषं गृहीत्वा स्वावासस्थान प्रतिजग्मु. ।

अत्रांतरे कृतप्रातराह्निकाः श्रीमत्परमहंसेत्यादिविरूदावलीविभूषिताः श्रीमत्सुयमीद्रतीर्थपूज्यपादाः श्रीगुरुसार्वभौमवृन्दावनाभ्यर्णमाजग्मुः यष्टिहारिद्वारपालकेन जनसम्मर्दं विच्छिद्य दत्तपथेन पार्श्वयोः रक्षकैः बाहाबंधेनाऽऽरक्षितेन । अर्चकाः संपादितसमग्रपचामृतसंभाराः सपदि संकल्पपूर्वकं गुरुसार्वभौमस्य पंचामृताभिषेकं प्रारेभिरे । यात्रिकसंघादनेके परःशताधिका भक्ताः स्वस्वनाम्नाऽभिषेकं कारयितारः संकल्प पठनं अर्चकानूदितमुच्चरंतः समत्राक्षतां वारिधारामवासृजन् । श्रीपादानामाध्यक्ष्ये श्रीगुरुसार्वभौमाणां क्षीर-दधि-आज्य-मधु-शर्करा-कदलीफल-खण्डपूग-नारिकेलसीधुभिः समंत्रकमभिषेकमकार्षू रर्चकाः

महता वैभवेन प्रत्येकमार्तिक्यनीराजनसेवया श्रीपूर्णबोधेति श्रीमदप्प-णाचार्यकृतगुरुस्तोत्रपठनपूर्वकम् । मन्त्रध्वनिस्तु भक्तस्तोमकंठपटलं विनिर्भिद्य निःसृतः चतुर्दिक्षु भित्तिघातैः बहुलीकृतः स्तनयित्नुनिर्घोष-मधरीकृत्य नाकिनायकलोकमाटीकत । तदकाल-मन्त्रघोषश्रवणेन चकितचकिताः लेखाः आलेख्ये इव निष्टब्धांगचेष्टा. अहो, भूलोके दैत्य-बालकप्रह्लादराजस्य श्रीगुरुराड्रूपेणावतीर्णस्य भूसुरैरभिषेकः निर्व-र्त्यते। वयमपि अस्मत्कुलपति प्रह्लादमकुंठनरकंठीरवदासमभिनद-यामः कुसुमासारवर्षैः गीतनृत्यातोद्यसनाथैः इति संमंत्र्य विमानावली-भिरागत्याकाशकोष्ठे प्रत्यपालयन् कुतूहलनतकंधराः लोचनलालसाम पूरयंश्च विस्फारितनेत्रावलोकैरनिमिषद्भिः । श्रीपादाश्च वृंदावनकक्षा-यामुपस्थिताः देवगणानागतान् निर्वर्णयंतः वैहायसपथे सपुष्पफलमंत्रा-क्षतादिभिः संभाव्य धूपदीपनीराजनादिभिः पूजयामासुः गौरवभासुर-हृदयसुमहारभरोपहारैः। सम्मिलिताश्च गुरुराजभक्ताः केचिदवलोक्य देवताऽऽगमनं विस्फुरत्तेजःप्रादुर्भावेण सूचितं करताडनेन दिगंतराणि मुखरितान्यकुर्वन् । धन्या वयमद्य श्रीगुरुभरुसुयमीद्रमौनींद्रप्रसाद-महिम्ना नाकावकाशे नाकिनिकायः प्रकाममवलोकगोचरतां नीतः। इति जगुश्च स्निग्धमुग्धहृद्यपद्यैः अर्चकसमर्पित नीराजनसंभ्रममव-लोकयंतः।

किं प्रागभूत्सुकृतमाचरितं गुरूणां।
सद्यः समागमनमेव शुभं पुपोष ॥
प्रायः प्रसूनगुरुकुंभसुवासिनी गो-
विप्रादिदैवतकुलं शुभशंसि दृष्टम् ॥११॥

मेघावृतं नभ उरुक्रमदूततेजः- ।
प्राकट्यतो धवलितं सपदि प्रकामम् ॥
दृष्ट्वा विहायसपथे वरयानयाताः ।
देवाः स्फुरत्पुरटगात्रवरांगनाभि ॥१२॥

स्वस्त्यस्तु सद्भ्यो गुरुराट्सखेभ्यः ।
प्रह्लादसातीर्थ्यमनुस्मरद्भ्यः ॥
मित्राणि सत्रेषु मिलंति धन्य- ।
मात्मानमावेदयितुं जगत्याम् ॥१३॥

तत श्रीपादाः किंचिद्विश्रम्य स्नानगृहं प्रति निवृत्ताः। जनास्तु यात्रिका. श्रीराघवेंद्रगुरुप्रासादस्य विशालप्रांगणे उपविष्टाः श्रीमदप्पणाचार्यकृतगुरुस्तोत्रमंत्रस्य अष्टोत्तरशतवारं जपमेकरवेण कर्तुमारेभिरे। केचिन्मौनेन केचिदुच्चैःस्वरेण अन्ये पुनः प्रत्येकश्लोकस्य तात्पर्यं विवृण्वानाः। सप्तघटिकावधौ जपः संपूर्तिमगमत्। तस्मिन्नवधौ कृतमाध्याह्निकस्नाना पूजामण्डपमागत्य श्रीमूलरामचंद्रपूजामारेभिरे श्रीसुयमींद्रमस्करिमणींद्राः।

भव्यस्वरूपः सुयमींद्रमौनी- ।
श्रीमूलरामार्चनबद्धदीक्षः ॥
सत्तंत्रसारोक्तविधानतः श्री ।
घंटादराभ्यर्चनमाचचार ॥१४॥

घंटारवत्रस्तहृदः पिशाचाः ।
दैत्याः प्रतीपग्रहराक्षसाश्च ।
पलायिता मण्डपसंन्निकर्षात् ।
पीठाधिदेवाः सगणाः समास्थिताः ॥१५॥

क्षीराभिषेकेण शिलाः समुष्टीः ।
प्रत्यर्च्य शुद्धोदसपर्यया च ॥
वस्त्रेण धुत्वा कलधौतसंपुटे ।
न्यधापयन् शालशिलाः पृथक् पृथक् ॥१६॥

ततस्तत्रभवत. श्रीपादा गंधाक्षतार्पणादिपूजामर्पयित्वा प्रत्यग्रानीतकोमलतुलसीदलै. सजातिकेतकीमल्लिकासुमहारैः सुमनोहरैः समर्चत. ब्रह्मसूत्राणि विष्णुसहस्रनामानि च पठंतः श्रीमूलराम-दिग्विजयराम-जयराम-प्रतिमा. सादरभक्तिभासुरस्तोत्रपदैः स्तुवंत शिष्यवृन्दै मन्त्रपाठकै उच्चै स्वरेण गायद्भि साक महांतमानदभर मन्वभवन् सगद्गदस्वरेण हर्षनिर्भरेण। तदर्वाक् परिमलधूमाघ्राणनेन देवतामुखविकासमवलोकयंत. दीपावली पार्श्वयोः प्रज्वाल्य सुभक्ष्य भोज्यलेह्यपेयादिक षड्रसोपेत चतुर्विधान्नं सुमृष्टमार्पयामासुर्द्वादशस्तोत्रपठनपुर.सरम्। नारायणप्रणवमूलमन्त्रान् जपित्वा तत्पाकविशेषे खण्डाखण्डरूपेण व्यूहरूपेण सन्निहित भगवद्रूपं चिंतयित्वा 'न स्थान-

तोऽपि परस्योभयलिगं' 'स्थान विशेषा प्रकाशादिवत्' इत्यादि सूत्रेषु 'नेहनानास्ति किंचन' इत्यादि श्रुतिषु उपदिष्टरीत्या श्रीहरेः निरकुश-प्रभुत्वं स्वातत्र्यं सर्वथैकरूपत्वमुपजीव्यत्वं जीवानामुपजीवकत्वं च चितयित्वा द्रव्यैक्यभावैक्यक्रियैक्यानुसंधानेन भागवतोक्तद्रव्याद्वैत क्रियाद्वैतभावाद्वैतचिंतनया 'सर्व समाप्नोषि ततोऽसि सर्वः' इति 'नाहं कर्ता हरिः कर्ता' इति स्वाहंकारखण्डनेन सर्वार्पणबुद्ध्या नैवेद्यं समर्पयामासुः । दृष्टिदोषविघातार्थं त्रिवारं शङ्खभ्रमणेन शंखोदकं पात्रातरे निधाय रमाब्रह्मादिदेवताश्च परिवारत्वेन 'अंगावबद्धास्तु न शाखासुहि प्रतिवेदं' इत्युक्तप्रमाणेन पूजयित्वा नैवेद्य शेषं समर्पयामासुः । ततः महानीराजनं सवैभवं वहुप्रकारेण पंचार्तिक्येन मत्स्याद्यवता-राकृतिराजतफलकेषु कुभे मंत्राक्षतकलशे च आर्तिक्यैः नीराजयतः हसन्मुखविकसितनयनं सुभगं देवतामुखं दर्श दर्श स्वावरत्वं मर्श-मर्श श्री हरिदास्यमनवरतं वर वत्र्ुः भक्तिभरेण बद्धांजलिना । मंत्रपुष्पादिकं संगीतनृत्यवाद्यछत्रचामरस्तोत्राद्युपचारैः समर्पयांबभूवुश्च ।

सम्मिलिताश्च भक्तयात्रिका भव्यामिमां सवैभवश्रीमूलराम-पूजां सकौतुकं निरीक्षमाणाः साक्षाच्चतुर्मुखब्रह्मैवादिशेषशय्या-शायिनं श्रीलक्ष्मीनारायणमात्मार्पणेन पूजयांचकारेति विभावयंतः नितरां धन्यमात्मानममन्वत ।

ततः श्रीपूज्यपादा व्युत्क्रमेण तत्वन्यासमातृकान्यासादिकं देवता-प्रतिमासु कृत्वाऽऽत्मनि तज्ज्योतिरावास्य स्वयं तत्वन्यासादिकं पुनः कृत्वा श्रीमूलराम-दिग्विजयरामजयरामप्रतिमा लीलादेवी करार्चित-श्रीभूदुर्गासमेतवैकुठवासुदेवप्रतिमां च पीत-नील-रक्त-पिशंगक्षौमांशुकैः प्रावृताः तत्तत्संपुटे रौक्मे कृष्णाजिनावृते तत्र तत्र पेटिकाया पृथक्-पृथक् स्थापयित्वा सपुटानि पंचफणायुक्तशेषप्रतिनिधिभि पंचीकृतरज्जुगणैः सुभद्रं निबद्धानि कारितानि पूजापरिचारकवर्गेण । संपुटचतुष्टय रंग-वल्याद्यलकृते निकटदारुपीठे निधाय पार्श्वयो दीपं प्रज्वाल्य गुरुभिः प्रदक्षिणसाष्टांगप्रणतित्रय अपराधक्षमापनस्तोत्रपुरःसरं समर्पितम् ।

तत श्रीपादा सतीर्थगंधाक्षततुलसीपुष्पमालाकलशहस्तैः परि-चारकैः साक श्रीगुरुसार्वभौमाणां वृन्दावनमाजग्मुः हस्तोदकभिक्षा-प्रदानकामा । तत्रार्चकैः सन्नाहितसामग्रीभरेण वृंदावनावसथं श्री-

गुरुसार्वभौमं भक्त्या पादपूजया सतुलस्यर्चनया मन्त्राक्षतादिभिश्च सत्कृत्य गुरुभ्यस्तीर्थगंधाक्षतापुष्पमालातुलसीहारानर्पयित्वा परिचारकानीतं रजतपात्रे परिवेषितं मृष्टान्ननैवेद्यशेष भैक्ष्यं भक्त्याऽर्पयामासुः। हस्तप्रक्षालनाद्युपचारानतरं पुनस्तीर्थं दत्वा महामगलार्तिक्यं श्रीपादाः स्वयमेव दर्शयामासु· प्रभूतभक्तवृदसंदानितामदजयघोषनिर्घोषे। तदनु क्रमेण श्रीवादीन्द्र-सुधर्मेंद्र-सुव्रतीद्रगुरुवृंदावनानि संपूज्य हस्तोदकभिक्षामंगलार्तिक्यान्यर्पयित्वा धृतराजतयष्टि-मुष्टिपुष्टप्रैष्यैः निबिडजनसंमर्दे मार्गं विच्छिद्य दत्तगमनपथाः मुहुर्मुहुः पराक्पठनेन गुरुचित्तविक्षेपं प्रतिक्षिपद्भिर्नीयमाना· श्रीपादा· तीर्थप्राशनमण्डपमाजग्मुः। तत्र विशालफलकदारुपीठे शंखचक्राकितपृष्टपीठसनाथे निषण्णा· यतिवेषभूपणे दण्डकाष्ठे ब्रह्मादिदेवता आवाह्य तीर्थपूजानैवेद्यादिक समर्प्य कोमलतुलसीदलमिश्रितं तीर्थं त्रिवारं प्राश्य कर्णविवरे एकैकदलं नाभिकुहरे एकं मस्तकोपरि एकं च तुलसीदलं धृत्वा आदौ नित्यालंकार ब्राह्मणेभ्यः पंच संख्याकेभ्यस्तीर्थगंधाक्षतादिकं दद्युः तदनु भद्रासने पृथगुपविश्य सम्मिलितायोपदशसहस्रपरिमिताय भक्तविप्रवृंदाय तीर्थं सपुष्पतुलसीदलं दातुमुपचक्रमिरे। केचिच्छिष्याः 'काताय कल्याण गुणैकधाम्ने' इत्यादि सुमध्वविजय सर्गानुसर्ग हृद्यस्निग्धसगीतध्वनिना अन्ववोचन्। पोडशापि सर्गाः समापिताः पठनेन नाऽद्यापि तीर्थवितरण समाप्तिमगात्। असंख्यपृथग्जनजनकूटे केचिदेव तीर्थमण्डपमनुद्रुताः पालीपङ्क्तौ निविष्टाः स्वस्वपर्यायं परिपालयंतः आतिष्ठत। बहवो यात्रिकाः भोजनपङ्क्तौ सुभगस्थलमन्विष्यंतः भोजनकदलीपत्रागमनमेव निरीक्षमाणास्तूष्णीं स्थिता·। कियंत एव तीर्थप्राशनानंतर गुरुसार्वभौमवृंदावनमंदिरं प्रविश्य कौशेयशाटीच्छटापरिधानपरिष्कृत कलधौतमुखकरचरणादिकवचविग्रहसमलंकृतं तुलसीहारकदंबकैः पृथुगुणितकमलकल्हारजातिकेतकीमल्लिकागुच्छनिचिताभिः पुष्पमालाभि· गलावलंबिभिः समं शोभमानं सुदरवृंदावन अनिमिषद्भिर्लोचनै· दीर्घावलोकनैः पिबंत इव पश्यतः द्विगुणितभक्त्युन्मेषितकुतूहलेन पुरत·-पुरतः प्रसरतः वृंदावनाभ्यर्णमुपसर्पतः हर्षरोमाञ्चै· कंटकितगात्रयष्टयः सानदाश्रुकणान्निपातयंतोऽक्षिपटलात् सुस्वरमगायन् हृद्यगद्यपद्यनिचयैः। कविरेकस्तत्राहः—

यः प्राक् सन्यसनात्सुधींद्रगुरुतः सच्छास्त्रपारावरम् ।
तीर्त्वा सम्यगधीत्य मन्त्रनिचयं संप्राप्तवेदांतधीः ।।
स्वग्रामे निवसन् गृहस्थविधिना दारिद्रयतप्तः स भा- ।
र्यापुत्रश्च स आस भक्तिसुदृढस्तृप्तः सदा धीरधीः ।।१७।।

चोरैर्निर्दयवृत्तिभिर्मुहुरपाहृत्याप्यमत्रं स्वकं ।
न त्रस्तं दृढचित्तमद्भुतबलं कृष्णे रतं श्रीपतौ ।।
यो न द्वेष्टि न रज्जते भुवि जने त्यक्तैषणोऽनन्यधीः ।
तं मौनींद्रसुधींद्रवाक्यबलतः सन्यस्तमीडे मुदा ।।१८।।

दारिद्रये जडधीर्नियंतृरतधीर्वेदांतविद्यासुधीः ।
प्रह्लादात्मनि तप्तमद्य फलितं वेदांतराज्ये ध्रुवं ।।
भक्तिज्ञानदृढा विरक्तिरनघा सत्सौख्यसंपत्प्रदा ।
इत्थं वेदवचः प्रसिद्धमिति स ब्रूते स्वदृष्टांततः ।।१९।।

दिशिदिशि जनपूगैः स्तूयते स्फीतवाग्भिः ।
ननु वरहरितोषादाप्तसाम्राज्य एषः ।।
कलियुगसुरधेनुः कल्पवृक्षः प्रजानां ।
वदति भज मुकुंदं वायुसेव्यं विभूत्यै ।।२०।।

धन्योऽस्मि कृतकृत्योऽस्मि दर्शं दर्शं गुरुं मुदा ।
यः सदा दृश्यते स्वप्ने तत्त्वमार्गं प्रबोधयन् ।।२१।।

इति कविताविलासलास्यलहरीहृत्प्रकाशः कविरयं जगौ प्रकाममानदमनुभवन् ।

तदनु सुमृष्टभक्ष्यभोज्यसेवनानंतरं यात्रिकाः दशविंशतिसंख्यया संघशः मिलित्वाऽपराह्णे तत्र तत्र हरिदासदाससाहित्ये पदसुळादिगीतस्पर्धायां दासकूटप्रमेयचर्चायां च वद्धादराः परितः सम्मिलितजनानां चित्तमाकर्षयामासुः ।

एको जगौ वरपुरंदरदासगीतं ।
अन्यस्तदर्थमवदद्धरिचित्तमत्तः ।।२२।।

एको मुहुर्विजयदाससुळादि भागम् ।
गायन्ननर्त मुमुदे लयतालवेत्ता ।।२३।।

आहुश्च व्यासकूटदासकूटवार्तास्थितिमेवम् ।

शीनप्पनायक इति प्रथया पृथिव्याम् ।
धन्यो धनाढ्यकुलजः प्रथितः कदर्यः ॥
भक्तप्रियो जठरवेषत आर्त एत्याऽऽ ।
याचनार्थमनुरुक्तधियं निसर्गात् ॥२४॥

तं कठोरहृदयं स्वमायया सद्य एव गतरागमातनोत् ।
विष्णुरद्भुतकृतिः स तुष्टहृत् निर्ययौ च सकलत्रपुत्रकः ॥२५॥

व्यासतीर्थगुरुराट्प्रसादतः ।
दिव्यदासमनुमाप्य धन्यधीः ॥

संचरन् वरदतीर्थमंदिरा-
ण्याजगौ नृहरिनामकीर्तनम् ॥२६॥

व्यासतीर्थवरमौनिशिष्टधीः ।
नारदाचरितकार्यमुद्वहन् ॥
नारदोऽयमिति कीर्तिमातनोत् ।
विष्णुचेंणवकृतीरथातनोत् ॥२७॥

तद्वंश्यैर्विजयार्याद्यैः भक्तिमार्गः प्रसारितः ।
हरिकारुण्यसरणिः जनतायै प्रदर्शिता ॥२८॥

- भोजनोत्तरं श्रीपादाः प्रथमदिनोत्सवस्य कार्यभागं संचालकैः साधं समालोच्य अंगप्रत्यंगेषु साधुतासंपादनाय विशिष्टाधिकारिण. नियोजयामासुः । तस्मिन्नेव दिने सायाह्ने ध्वजारोहणं कार्यमिति पूर्वमेव निर्धारितं । तत्कार्य संपादयितु श्रीपादाः वहिर्द्वारप्रकोष्ठके शिष्यपरिकरैः साकमुपस्थिताः । विशाल चत्वरप्रांगणमध्ये स्थापित-स्यात्युच्चशिलामयस्तंभस्य चतुर्दिक्षु फलकचतुष्के रेखाभिर्निखातराम-कृष्णनृहरिवेदव्यासविग्रहस्योर्ध्वपटले हिमशीकरवाहिना वर्षर्तुभवेन वायुना विचाल्यमान संजीवनहारिवानरालेख्यप्रसाधनभूपितः कपि-ध्वज निवद्ध आसीत् । तद्बंधकरज्जु शिथिलीकृत्य श्रीस्वामिन कपि-ध्वज फट्फट्रवेणाऽऽकाशे उड्डीवयांचक्रिरे । वायुरेवाऽस्मद्गुरु कपि-रूपेण ध्वजे सन्निधाप्यऽऽस्मानं अस्मिन् सप्तरात्रोत्सवे श्रेयांसि नः

भूयांसि आतनोत्विति संप्रार्थ्य नैवेद्यदीपदर्शनाद्युपचारेण समभ्यर्च्य मिलितभक्तजनेभ्य. मंत्राक्षतादिकं व्यतरन्परमानुग्रहविधित्सया। तत्र कविरेकः कपिध्वजमेव वर्णयामास—

य: प्रेम्णा जगतीतले कृतमतिः ज्ञानं व्यतानीन्मुदा।
व्यासाज्ञां शिरसा निधाय मणिमत्प्रोक्त मतं नीरसं॥
धिक्कुर्वन् निजगाद विष्णुपरतां चिच्चेत्ययोर्निघ्नतां।
भेदं सत्यमथाखिलं जगदिदं मध्वः स जीयाच्चिरं॥२९॥

ब्रह्माणमथादिदेश जगतीनिर्माणकर्मण्यथो।
विष्णुर्भावि चतुर्मुखं च जगतीरक्षैकदक्षं व्यधात्॥
त्रेतादित्रियुगेऽवतीर्य हनुमद्भीमात्ममध्वात्मना।
सोऽव्यान्नः कपिरूपवायुरनघः राराज्यमानो ध्वजे॥३०॥

त्रेतायां प्रभुरामचंद्रवचसा सीतां स लंकां गताम्।
संतोष्याद्भुतरंहसाऽब्धिमलघुं संतीर्य रामाय त-॥
च्चूडारत्नमदाद्दशास्यभयदः प्रध्वस्य लंकासदः।
सोऽयं वानरमूर्तिरस्तु भयहा नः सौख्यसंपत्प्रदः॥३१॥

द्वापरे भीमरूपेण दुष्टान् दुर्योधनादिकान्।
जरासंधं कलिं हत्वा कृष्णं संसेव्य बाबभौ॥३२॥

राघवेंद्रगुरुवर्यसेवितः।
प्रीत आगत इहार्तिहा हरिः॥
राघवेंद्रमहवृद्धये सदा।
शिष्यमूतिकृदनंतधीर्ध्वजे॥३३॥

तदनु सायं श्रीपादा यथासंकल्पं गोपूजां धान्यकोष्ठे अन्नपूर्णापूजां प्रार्थनोत्सवं च निर्वर्तयितुं सशिष्यपरिवारं पण्डितैरास्थानविद्वद्भिश्चानुगम्यमानाः प्रतस्थिरे मठीयगोष्ठपरिसरम्।

प्रस्फुरद्ब्रह्मतेजसा जाज्वल्यमानवदनः शिखासूत्रोपलसित. पृथुकायः पंचकच्छबंधेन धौतश्वेतवाससा आच्छादिताधोगात्रः क्षौमौत्तरीयांशुकोत्तरीयेणावृतोत्तरांगः महाविप्रः बहुक्षीरामपीनभारोद्वहविनम्रगात्रां कलधौतपट्टखचितखुरपुटभासुरां सौवर्णकटकवेष्टितश्रृंगमूलां

विचित्रनानावर्णकस्थासकभूषितकौशेयवाससाऽपिहितपृष्टफलकां बृहत्कायां धेनुं गलवेष्टितदाम्ना हस्तेन बालतृणग्राससनाथेनानयन् श्रीपादानां पुरतः आनयत् पृष्टं दक्षिणहस्तेनाऽऽस्फाल्य रदच्छदनिपीडनेन चीत्कारं शब्दयन् पादौ स्पृष्टवा नमस्कृत्याऽअब्रवीदंगुल्यग्रेण महीतलं संस्पृशन् आनतकंधरः प्रणम्य श्रीचरणान् स्वामिन् इयं कामधेनुः श्रीगुरु सार्वभौमसप्तरात्रोत्सवपूजां विनांऽतराय निर्वर्तयितुं त्वरितगतिरासन्नाऽस्मिन् पुण्यक्षेत्रे देवेन्द्रनिदेशेन प्रह्लादसेवाव्याजेन नाकलोकाविकलसंपद्भूमिः। साक्षाद्देवेंद्रसभाभामिनी शोभायमानशुभकाया देवताकुलनंदिनी नंदिनी सौरभेयी श्रीपादानां हस्तस्पर्शेन द्विगुणितभूतिशक्तिः भूतिकामान् प्रदातुमुत्सुकते। श्रीचरणा एव प्रमाणमिति। भक्त्या पुनस्तां सास्नायां पृष्ठे ककुदि सर्वांगेषु हस्तेन संवाहयितुमारेभे। श्रीचरणाः संतुष्टचित्ताः शिष्यं सादरप्रेम्णाऽवलोकयंतः धन्योऽसि आपीच्यमानां मूधोभरपरिक्लिष्टां पुष्टकायां भव्य संहननामिमां गोमातरमदितिमिवदेवमातरमवलोक्याऽस्मन्मनः भक्त्युद्रेकेण समुत्तंभते। नूनमियं सौरभेयी स्वर्गलोकादागता प्रह्लादावातारस्य-गुरुसार्वभौमस्यास्मिन्महोत्सवेऽविकलवैभवारंभोत्सवं परिरक्षितुमृक्षेशसहोदरी जगदानंदसेचनिकाऽनवरतकल्याणपरंपरां वितरति सहृदया मंगलांगी शुश्रूषुजनाय। इति अभिनंदंतः कपिलां गंधमाल्यादिभिः पूजयित्वा तृणपिण्डिकाकवलं ग्रासाय ददुः तण्डुलप्रस्थं शर्करामिश्रगोधूमपिष्टं स्वहस्तेन खादयामासु भक्तिभासुरहृदयेन "चुप् चुप्" इति रसनाग्रान्निःसरताऽऽनुनयरवेण। दीपं प्रज्वाल्य धूपमाघ्राप्य पंचार्तिक्येन नीराजनमकुर्वन् शंखतूर्यनिस्सालमृदंगवीणावेणुवादननिनादसंभ्रमेण।

कविरेकः रसप्रसरविशारदो जगौ बंधुरबंधश्लोकं।

या दिव्यज्ञानदात्री सुरनरदयिता मण्डनं नाकभूम्योः।
पुण्यांगी हव्यकव्यैः दिविजपितृकुलं पोषयंती नितांतं॥
भूरूपा या पुरा श्रीविभु पृथुवचनात् सर्वसंपत्प्रदा सा।
दद्यान्नो भक्तिभाग्यं गुरुवरचरणे दीनरक्षैकदक्षे॥३४॥

गोमातर्गोपवंद्ये कलिबलकलने त्वत्प्रसादाद्गुरुर्नः।
नित्यं दातेप्सितार्थं मुदिर इव जलं वीप्सयाऽऽर्तार्तिहारी॥

जेता त्वत्सेवयाऽसौ रविमपि महसा दानकर्मण्यतंद्रः।
देवि त्वां शरणं गतोऽस्मि कुरु मे कारुण्यमूर्ते घृणाम् ॥३५॥

गुरवोऽपि भद्रमुखाः कामधेनु चरणरजःस्पर्शेन संभाव्य स्वैरं गमनाय विससृजुः गोष्ठकाष्ठायै।

ततस्ते सशिष्याः पण्डितैः साकं धान्यकोशमाराधनामहोत्सवसामग्रीभाण्डागारे व्यवस्थया सज्जीकृतामपश्यन् हसन्मुखाः। तत्र एकत्र तण्डुलमूटकाः राशीकृताः अन्यत्र गोधूमादिनवधान्यसंघातः नानाविधशाकाः पक्वापक्वफलमूलनिचयः नारिकेलतैलभाण्डानि कुसुंभस्नेहकुंभाः नारिकेल-जम्बीर-पलाश-चूत-दाडिम-खर्जूर-द्राक्षादिनानाविधफलकुलं पर्वतीभूय राशीकृताः मञ्जु रञ्जयंति मनोनयनानि जनानामवलोकयताम्। न किंचिदप्यवशिष्टं सामग्रीसंकलने गुरुवरमहोत्सवसंपादनाय। उत्कटैकदेशे मध्यभागे फल-शाक-धान्य-पिष्टफलसंकुले श्रीमदन्नपूर्णादेवी क्षौमदुकूलप्रावृतांगी हरिद्राकुंकुमरंजितफालफलका वरदहस्ता सदाऽन्नदानेन पूर्णभोगा राराज्यते भक्ताभीष्टवर्षयित्री मृणालमेदुरगात्री। पुरोहितपंचाननः पंचोपचारैः संभाव्य पुष्पफलानि समर्प्य निवेद्य महार्तिक्यनीराजनेन तामानर्च वेदघोषेण समभ्यनंदच्च महता संभ्रमेण। सम्मिलिताश्च जनाः श्रीसुयमीद्रमौनीद्राणां वरदहस्तात् फलमंत्राक्षताः स्वीकृत्य कृतार्थमात्मानं मेनिरे। स्वस्वावसथं च जग्मुः। तत्रैकः शीघ्रकविः धान्यादिसमुच्चयं अन्नपूर्णां चैवं सुभगसरसपद्यैरवर्णयत्—

अन्नपूर्णहरिभामिनि प्रिये सज्जनाय वरभक्ष्यभोज्यदे ॥
अद्यतेऽस्ति हरिरेव गीयते ह्यन्नमित्युपजीव्यता श्रुता ॥३६॥

पूर्णमन्यमनवेक्ष्य वेदवाक् ब्रह्म पूर्णमिति विष्णुमाह हि ॥
सैव भाति कृषिसंपदाऽवनावन्नदात्र्यतिपवित्रगोत्रजा ॥३७॥

यत्कटाक्षबलतश्च सा बभौ लोकमातृपदभाङ्निरत्यया।
स्रुक्स्रुवौ करधृतौ मुहुर्मुहु र्दास्यतो विपुलमन्नमादरात् ॥३८॥

श्रीहरिस्त्र्यंबकः ख्यातः फालमध्यैकलोचनात्।
नमस्ते त्र्यंबके गौरि नारायणि वरानने ॥३९॥

धान्यराशिरथ सर्वतोऽवनौ पर्वतीभवति भाति नेत्रयोः ॥
शाकपुष्पफलमूलजालकान्यत्रतैलघृतपूर्णकुम्भकाः ॥४०॥

सप्तरात्रमहसत्रतर्पणे दैवतैः कृतसभाजनैर्जनैः ॥
आहृतं विपुलहव्यसंचयं चाऽऽजुहोति गुरुराण्मुखे गुरु ॥४१॥

अन्नपूर्णापूजा समाप्य श्रीपादा. स्वकोष्ठमागत्य किंचिद्विश्रम्य सायंपूजार्थं स्नानगृहमनुप्रापयु । तत्र स्नात्वा शाटीयुग्मं परिधाय पूजामण्डपमागत्य गोपीचंदनेन गधाक्षतादिभिश्चात्मानमलंकृत्य स्वस्थचित्ताः श्रीहरिगुरुस्तोत्रं मनस्यालोडयंत श्रीरामचद्राधिष्ठितसौवर्णमण्डपमाजग्मु । परिचारकैरानीतार्चनासंभारैः मण्डपे यथास्थानमवस्थापिता रामचंद्रादिविग्रहपेटिकां कौशेयाशुकेनावेष्टिता समर्हणेन भक्त्या पंचोपचारैः संमान्य धूपदीपनैवेद्यादिकमर्पयामास श्रीमूयमीद्रतीर्थपूज्यपादा । तदनु ते यतिप्रवेका यष्टिहारिप्रतीहारिप्रदर्शितपथेन श्रीगुरुसार्वभौमवृन्दावनमुपसृत्यार्चकमुखेन गुरुभ्य सायं नीराजनं प्रदर्शयामासु यात्रिकभोक्तघोषैर्मुखरितदिग्वलये खद्योतवद्दीपपुंजसिंजरिताभोगे। श्रीपादा सशिष्या सप्तरात्रोत्सवोपन्यासमण्डपं प्रति प्रस्थिताः। पूर्वेद्युरेव प्रकटितं कार्यक्रममनुरुद्ध्य महोपन्यास प्रवर्त्यते ।

## वेदनित्यत्वोपन्यासः

सप्तरात्रोत्सवमहोपन्यासशालायां श्रीपादानामाध्यक्ष्ये पण्डितानां वाङ्मुखपीयूषस्रवपरिवेषणं प्रावर्तत। चतुर्वेदपण्डिताः वेदवाङ्मयविवेचनपटुधिषणाः वेदनित्यत्वमधिकृत्य न्यरूरुपन्विषयविशेषान् सभ्यजनसामान्यसुखाववोधाय। तथाहि।

वेदास्ते नित्यविन्नत्वात् श्रुतयश्चाखिलैः श्रुतैः। आम्नायोऽनन्यथापाठादीशबुद्धिस्थिताः सदा। इत्यादि प्रमाणवलात् वेदानां नित्यत्वं पाठेऽर्थेचाविपर्यस्तत्वं ज्ञायते। ईशबुद्धिस्थितत्वान्नियतानुपूर्वीकाः क्रमव्यत्यासरहिता' अत एवापौरुषेया इति व्यपदिश्यते वेदाः। पुरुषनिर्मितप्रवंधास्तु पुरुपवुद्धच्युपाधिकत्वादनित्याः पौरुपेया इत्युच्यंते। तत्रापि प्रमाणभूताः पौरुषेया ग्रंथाः साक्षान्नारायणेन तदवतारेण वा निर्मिताः महाभारत-मूलरामायण-पंचरात्र-पुराणादिग्रंथाः युगभेदेन शब्दक्रमव्यत्यासेऽपि अर्थव्यत्यासरहिताः गणनामर्हंति। तदनुकूलाश्च मन्वादिप्रणीता ग्रंथाः प्रमाणमेव।

ऋग्यजुःसामाथर्वाश्च भारतं पंचरात्रकं।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ।।
यच्चानुकूलमेतस्य तच्चशास्त्रं प्रकीर्तितं।
अतोऽन्यो ग्रंथविस्तारो नैवशास्त्रं कुवर्त्म तत् ।।

ऋगाद्या भारतंचैव पंचरात्रमथाखिलं।
मूलरामायणं चैव पुराणं चैतदात्मकम् ।।
ये चाऽनुयायिनस्त्वेषां सर्वे तेच सदागमाः।
दुरागमास्तदन्ये ये तैर्नज्ञेयो जनार्दनः ।।

—इति ब्रह्माण्डे

संततं चिंतयेत्कण्ठं भास्वत्कौस्तुभभासकं। वैकुण्ठस्याखिला वेदा उद्गीर्यंतेऽनिशं यतः इति श्रीमदाचार्यैः द्वादशस्तोत्रे वेदानां वैकुण्ठ-

(नारायण) कण्ठनिःसृतत्वं (न निर्मितत्वं) उक्तम्। प्रलये ईश्वरबुद्धिस्थिताश्च वेदाः ईश्वरबुद्धेरनादिनित्यत्वात्पूर्वकल्पेषु यथा आसन् तथैवोत्तरकल्पेषु प्रथममीश्वरोच्चरितत्वात् नित्याः। अपौरुषेयाः वेदाः आदिसृष्टौ चतुर्मुखब्रह्मणे नारायणेनोपदिष्टाः। 'तेने ब्रह्म हृदा य आदिकवये' इति भागवते 'विशल्लक्षणतोऽनूनस्तपस्वी बहुवेदवित्। वेद इत्येव यं पश्येत्स वेदो ब्रह्मदर्शनात्' इत्यादि प्रमाणैः वसिष्टादिऋषिभिर्दृष्टाः वेदाः अविच्छिन्नपरंपरया अधीताः अध्यापिताः न केनाऽपि निर्मिता इति स्पष्टं ज्ञायते। छांदोग्योपनिषदि वेदाः (ऋग्वेदः) श्रीहरेः निःश्वसितमिति वर्णिताः।

वेदाः मन्त्र-ब्राह्मण-आरण्यकोपनिषद्भेदेन चतुर्धा विभक्ताः। मन्त्राणां प्रामाण्यं वेदनिघंटुव्याख्यातृभिर्यास्काचार्यैः निरुक्तकारिभिः जैमिनीयकर्ममीमांसासूत्रभाष्ये तट्टिप्पण्यां श्लोकवार्तिके कुमारिलभट्टैश्च वेदापौरुषेयत्वप्रतिष्ठापनपूर्वकं प्रतिपक्षनिरासेन व्यवस्थापितं। ब्रह्मसूत्रेषु तत्तदाचार्यकृतभाष्येषु शास्त्रयोनित्वाधिकरणे न विलक्षणत्वाधिकरणे विशेषतः श्रीमध्वाचार्यकृतसूत्रभाष्येऽनुव्याख्याने तट्टीकायां न्यायसुधायां च वेदप्रामाण्यं बहुधा विमृश्य समर्थितं। वेदभाष्ये श्रीमध्वाचार्यैः सायणाचार्यप्रभृतिभिश्च वेदनित्यत्वं प्रामाण्यं च विशदविमर्शेन सिद्धांतितम्। ऋग्भाष्यटीकाया श्रीजयतीर्था मन्त्रार्थमंजर्या अणुभाष्यटीकाया तत्वमञ्जर्या च श्रीराघवेंद्रतीर्था वेदनित्यत्वं नाम सजातीयानुपूर्वीकत्वं। न तु वर्णवत्कूटस्थनित्यत्वं इति व्याजह्रुः। विषयोऽयं उत्तरत्र प्रमाणलक्षणस्वरूपविचारावसरे द्वितीयवाङ्मुखे प्रपंचयिष्यते। आपाततः वेदनित्यत्वविघटकाः आक्षेपाः समुद्धृत्य समुत्सारिताः जयतीर्थमुनिभिः तत्वनिर्णयादिग्रंथेषु। तत्र पूर्वाचार्याणां मतान्यनूद्य प्रतिपक्षप्रतिक्षेपपुरःसरं सिद्धांतः प्रतिष्ठापितः। स एवात्र किंचित्संगृह्योपक्षिप्यते जिज्ञासूनां सुखाववोधाय। यथा।

मंत्राणां विवक्षितार्थत्वं जैमिनिमुनिभिः मन्त्राधिकरणे (पू० मी० १-२-२१, ५३) सूत्रितम्। विधिरर्थवादश्चेति द्विविधं ब्राह्मणं। चोदनासूत्रे विधिवाक्यं प्रमाणमिति प्रतिज्ञाय औत्पत्तिकसूत्रे तत्प्रामाण्यं समर्थयामास जैमिनिमुनिः (पू-मी० १-१ २ ५)। श्रीवेदव्यासोऽपि पारा-

शर्यो वादरायणः शास्त्रयोनित्वसूत्रे वेदानां प्रामाण्यं प्रतिज्ञाय समन्वयाधिकरणे श्रुत्यधिकरणे नविलक्षणत्वाधिकरणे च बहुधा तत्समर्थयामास। एवं विधिवाक्यस्य प्रामाण्यं समर्थ्य अर्थवादभागस्यापि प्रामाण्यं जैमिनिना (१-२, १-२८) सूत्रेषु व्यवस्थापितं। तदेवं वेदे विद्यमानानां त्रयाणां मन्त्र-विध्यर्थवादभागानां प्रामाण्यस्य स्वतस्त्वांगीकारात् कृत्स्नस्यापि वेदस्य प्रामाण्यं सिद्धम्। अत्र कौत्स-बौद्ध-आर्हत-चार्वाकादीनां वेदमार्गपरिपंथिनां पूर्वपक्षाः विस्तरेणानूद्य निरस्ताः। धर्माधर्मस्वर्गनरकेश्वराद्यतीद्रियवस्तुसिद्धयन्यथाऽनुपपत्या वेदनित्यत्वं प्रामाण्यं च सर्वथांगीकर्तव्यमिति साधक-बाधकप्रमाणान्युपन्यस्य युक्तायुक्तचितया विमृश्य सिद्धांतितं। श्रीमध्वाचार्यैः श्रीविष्णुतत्वविनिर्णये, गीताभाष्ये अनुव्याख्याने च 'धर्माद्यभावज्ञाने परस्परहिंसादिनाऽपकारस्यैव प्राप्तेः। न हि अपौरुषेये पौरुषेयाज्ञानादय. कल्पयितुं शक्याः। विना च कस्यचिद्वाक्यस्यापौरुपेयत्वं सर्वसमयाभिमतधर्माद्यसिद्धिः। यस्य तौ नाभिमतौ नाऽसौ समयो।' इत्यदि वचनै विषयोऽयं सुष्ठु उपस्थापितः। विशदीकृतश्च विष्णुतत्वनिर्णयटीकायां न्यायसुधायां च सविस्तरं।

अनंता वेदाः दुरधिगमत्वात् अधिकारिबुद्धिव्यपेक्षया शाखाभेदेन विभक्ताः। प्रतिशाखं च प्रातिशाख्या इति वेदार्थनिर्णयाय उपायविशेषान् सूचयंतो ग्रंथविशेषा. निर्मिमिरे। कर्मकाण्डे यज्ञयागादिविधानात् यागप्रयोगविवरणाय कल्पग्रंथा (कल्पसूत्राणि) प्रावर्तत। धर्माधर्मविचाराय धर्मसूत्राणि निर्मितानि। गृहस्थाश्रमिणां गृह्यसंस्कारसिद्धयार्थं गृह्यसूत्राणि रचितानि। एवं कल्प-धर्म-गृह्यसूत्राणि वेदांगत्वेन वैदिकधर्मप्रवृत्तये स्थितिमापु. वैदिकवाङ्मयप्रपंचे। वेदार्थनिर्णयाय व्याकरणं निरुक्तं चावश्यकं। तथैव कर्मानुष्ठानाय कालसौष्ठवज्ञानमप्यावश्यकम्। अतः व्याकरणं ज्योति.शास्त्र छदोग्रंथाश्च वेदागत्वेन प्रवृत्ताः। तथैव वेदार्थोपबृंहणपराणि इतिहासपुराणान्यपि सममात्मानं लेभिरे।

अपि च वेदार्थाकृतपरिज्ञानाय ऋषय. विजनेऽरण्ये वासमकार्षुः। तत्र मन.प्रणिधानेन तत्वसाक्षात्काराय चर्चा. प्रारब्धाः। तदानीं आरण्यकाः वेदातप्रमेयबोधकाः उपनिषदश्च विद्वद्गोष्ठीषु प्रचयमल-

भंत । अतः मन्त्रब्राह्मणारण्यकोपनिषदः श्रुति-आम्नाय-वेदशब्देन व्यपदिश्यंते ।

अत्रेदमवधेयं । वेदेषु अनित्या जननमरणवतो बवरादय. श्रूयते (बवर प्रावाहणिरकामयत (त्रै-सं-०, १-१०-२) कुमुर्विद औद्दालिकिरकामयत (त्रै-स० ०-२-२-१), कि ते कृण्वति कीकटेषु इति कीकटो नाम जनपद आम्नात । तथा नैचाशाख नाम नगरं प्रभगदो नाम राजा इत्येतेऽर्थाः अनित्याः आम्नाता. । तथा च तत्तत्पुरुषदेशसबंधात्प्राक् अयं मन्त्रो नासीदिति गम्यते । तथैव भौगोलिकप्रादेशिक नामानि श्वेतकेतूद्दालकादिपुरुषनामानि वेदस्यानित्यत्वमनुमापयति । छन्दोनामानि ऐतिहासिकवृत्तानि समाजनीतिसंबद्धाश्च विषयाः तत्र-तत्रोपलभ्यते । नूनमेतादृशयुक्तिजात वेदस्य नित्यतां त्रिकालाबाधितप्रामाण्यमापातत विघटयतीति स्थूलदृश्वना प्रतीतिर्जायते । परं सूक्ष्मेक्षिकया विचार्यमाणे धर्माधर्मसिद्धये किंचिदपौरुषेय नित्य वाक्यं सर्वैरपि समयिभिरंगीकार्य । तच्च वाक्यं अनादिकालतः विद्वत्परंपरया अपौरुषेयत्वेन परिगणित स्वीकृतं च तत्ववेतृभि' वेदवाक्यमेव भवितुमर्हति । निरीश्वरा नास्तिकबौद्धादयः आर्वाचीनवेदसंशोधकाश्च अपौरुषेयत्वेन परिगणिता ग्रथा. अतिप्राचीनचारित्रिकप्रबंधा न त्रैकालिकाबाधितवस्तु बोधयंति । पर ते तत्तत्कालप्रवृत्तचारित्रिक ग्रथाएवेतिमन्यंते । पर तदतीव मंदं । धर्माधर्माद्यतीद्रियवस्त्वनगीकुर्वाणाना चार्वाकाणा गोष्ठीषु कदाचिदिद सम्माननामर्हेत् । तेषा मतं सर्वैरपि विवेचनापटुभिर्विमर्शचणधिषणै. यास्कप्रभृतिनिरुक्तकारैः कुमारिलभट्टप्रभृतिमीमासकै जैमिनिबादरायणादिसूत्रकारै' श्रीशंकर-रामानुज-मध्वाचार्यादिब्रह्मसूत्रभाष्यकारैश्च एकरवेणापहस्तित असारमितिदूरीकृतं च । धर्माधर्मसिद्ध्यन्यथाऽनुपपत्त्या इदं वा अन्यद्वा अपौरुषेय वाक्यं सर्वथाऽपेक्षित । नीचस्थितेरुन्नतपदारोहणरूपोत्क्रांतिवादस्तु चार्वाकै. आधुनिकसशोधकैश्च पुरस्कृत भौतार्थविचारे पद दधातु नाम यथाकथचित् । स च वादः सूक्ष्मतात्विकपरीक्षानिकषकषण न क्षमते । वेदेषु प्रतीताः अनित्यवस्तुनिर्देशादय. सत्यनित्यार्थसबद्धा इति यास्कादय कुमारिलभट्टसायणादयश्च भाष्यकारा घोपयति । पदस्यार्थेन नित्यसबध सर्वैर्वादिभिरगीकृतः आस्तिकमहानुभावै. । स्फुटमुक्त प्रकाशसहितायां ।

**देशतः कालतो व्याप्ताः वर्णा. सर्वेऽपि शाश्वता. ।**
**वर्णेषु सर्वभाषाभिव्यंजका शक्तिरिष्यते ॥**

सर्वभाषाभिव्यंजकत्वं पदस्य । तदनुरोधेन त्रिकालावाधितवस्तुपरतया तत्सर्वं व्याख्येयं ।

अतः वेदनित्यत्वं अबाधितमिति निश्चीयते । अनंतवेदेषु प्रतिपादितः अर्थ. एको वा विभिन्नो वेति विचारमर्हति । कर्मविचारात् देवताप्रशंसनात् ब्रह्मवादात् च सामान्यत. अर्थबाहुल्य प्रतीयते । तच्च प्रामाण्यप्रवृत्ती विहिनस्ति । अर्थैक्ये किल अधिकारिण अनुष्ठाने उपादाने च प्रवृत्तिरनुभवसिद्धा । विभिन्नार्थवोधने च प्राधान्येन ग्रथस्य प्रामाण्यमपि नोपपद्यते । अर्थवाहुल्य च क्वचिद्दृश्यते । अत्र प्राधान्योपसर्जनभेदेन वाक्यभेद. प्रामाण्यप्रवृत्यन्यथाऽनुपपत्या व्यवस्थापनीयः । यद्यपि वेदे पूर्वोक्तन्यायेन अर्थभेदो दृश्यते तथाऽपि नाऽसौ प्रामाण्यविघटनायोपकल्पते । अपौरुषेयत्वाद्वेदस्य । अन्यच्च लौकिकग्रंथेऽपि एकवाक्यताऽऽदरणीया । अत विभिन्नार्थप्रतीतिजनकेषु वेदेषु कयाऽपि विधया प्रतिपाद्यविषयव्यवस्थया एकवाक्यता समर्थनीया निरर्गलप्रामाण्यपरिरक्षणाय । अत्र मायावादिन. एवमाहुः ।

ननु कथं वेदो न जीवब्रह्मणोरेकत्वपरः । मंत्रब्राह्मणयोरतत्वावेदकयोरविद्वद्विषययोर्द्वैतालबनत्वेऽप्युपनिपदामद्वैतनिष्ठत्वात् । तत्र हि तत्त्वमसीत्यादि वाक्यं साक्षाज्जीवस्य ब्रह्मतां प्रतिपादयति । सदेव सौम्येत्यादीनि वाक्यानि तत्पदार्थस्वरूपनिरूपणपराणि तत्रैव समन्वितानि । अथ यो वेदेदं जिघ्राणीत्यादीनि त्वंपदार्थपराण्यपितत्रैव समन्वय प्रतिपद्यते । सृष्ट्यादिकथन च ब्रह्मणो निष्प्रपंचताप्रतिपादनायानुवादतयोपयुज्यते । प्राणाद्युपासनानि चांतःकरणस्य प्राणवृत्तिनिरोधद्वारेणाद्वैतप्रतिपत्तावेवोपयुक्तानि । तदेवं वेदातानां जीवब्रह्मणोरेकत्वं विषय इति तदुपकरणभूता मीमांसाऽपि तद्विषयैवेति युक्तम् । इति ॥

अत्रोच्यते तत्ववादिभि । आस्तां तावदियं समन्वयप्रक्रिया । तत्वमसीत्यादि वेद एव तावदेकताविषयो न भवति ।

**सत्यत्वात्तेन दुःखादेः प्रत्यक्षस्याविरोधतः ।**
**न ब्रह्मतां वदेद्वेदो जीवस्य हि कथंचन ॥**

इति अनुव्याख्याने ।

जीवमनूद्य तस्य ब्रह्मत्व प्रतिपादयंतीनां तत्त्वमसीत्यादीनामुपजीव्यप्रत्यक्षविरोधादतत्परत्वमुच्यते । ईश्वरमनूद्य तस्य जीवाभेदं प्रतिपादयत्या श्रुत्या सर्वथा तावदीश्वरसिद्धिरपेक्षिता । अप्रतीतस्यानुवादायोगात् । न चेश्वरसिद्धि. श्रुति विना सभवति । ततो यः सर्वज्ञः इत्यादिश्रुतिरेवास्या उपजीव्या इति वाच्य । सा चासर्वज्ञाज्जीवादीश्वरभेदमेव प्रतिपादयतीति तद्विरुद्धा तद्योऽहमित्याद्या श्रुतिर्नाद्वैतवादिनीति । एतेन जीवब्रह्मस्वरूपानुवादेन तदैक्यमात्रपराणां परेऽव्यये स वै एकीभवंति इत्यादिवाक्यानामुपजीव्यप्रत्यक्षागमविरोधोऽप्युक्तो वेदितव्य. । (सुधा० जि० ६५-६६) वस्तुत. भेदपराण्येव वाक्यानि ऐक्यप्रतीतिजनकानि दृश्यंते ।

**स्वातंत्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।**
**सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टतः ॥**

अ-व्या-१, १ ।

एवं उपनिषत्सु सम्यग्विचार्यमाणासु जीवेश्वरभेदः परमार्थभूतः प्रतिपाद्यते इति सिद्धातित । कर्मकाण्डदेवताकाण्डयोरपि (कर्ममीमांसादैवीमीमासयोरपि) श्रुतिः सात्त्विकराजसाधिकारिभेदेन विज्ञानमानंदं ब्रह्मेति परमात्मस्वरूपमुपदिश्य तत्साक्षात्काराय उपासना विधीयते । प्रक्षीणांतःकरणमलस्यैव उपासना फलतीति तदर्थं कर्मविषयः प्रवर्तंते । परमेश्वर एव प्रसन्नः संसारदुःखाज्जीव मोचयतीति तत्साक्षात्काराय श्रवणाद्युपासना विधीयते । इति प्राधान्येन ब्रह्मज्ञानार्थं अप्रधानकर्मादीनिनिरूप्यंते इति न वाक्यभेदनिमित्ताप्रामाण्यादिशकायाः अवकाश. ।

वेदैश्चसर्वैरहमेव वेद्यः । ॐ इति ब्रह्मेति, ॐ कारेण सर्वावाक् संतृण्णा (छादोग्य २-२३) स एव विष्णुराह हि । तं ब्रह्मेत्याचक्षते (इति दैवीमीमासातिमसूत्र) इत्यादि प्रमाणवलात् परममुख्यया वृत्त्या वेदैः विष्णुरेव सर्वोत्तम इति प्रतिपाद्यते । विष्णुरेव विजिज्ञास्यः सर्वकर्ताऽऽगमोदित । इति श्रीमदाचार्यैरणुभाष्ये श्रुतीनां परममुख्यार्थः

विष्णुरेवेति सावधारणमुद्घोषितम् ।

एवं वेदानां स्वरूपं अपौरुषेयत्वं प्रामाण्यं च निरूप्य तत्प्रतिपाद्यो विषयोऽपि न जीवेश्वराभेदः किंतु सर्वोत्तमः पुरुषोत्तमो विष्णुरेवेति संक्षेपेणास्मिन्नुपन्यासे उपपादितम् ।

तदनु श्रीपूज्यपादैर्मंत्राक्षताशीर्भिरनुगृहीता यात्रिकाः सभ्याश्च पण्डिताः वेदप्रामाण्यविषये विद्वद्वरैः कृतमुपन्यासं श्लाघमानाः परस्परं विषयगाम्भीर्यमालोडयंतः स्वस्वावसथं प्रति प्रातिष्ठंत । उत्तरस्मिन् दिने प्रातरेव आरभ्यमाणं कार्यमावेदकाः न्यवेदयन् । सर्वैरप्युपस्थातव्यमिति ।

**।। श्रीगुरुसार्वभौमसप्तरात्रोत्सवे प्रथमदिनोत्सव इति सप्तम उल्लासः ।।**

॥ श्रीः ॥

॥ अपरोक्षीकृतश्रीशः प्रसीदतु ॥

# अष्टम उल्लासः

## श्रीगुरुसार्वभौमसप्तरात्रोत्सवे द्वितीयदिनोत्सवः

अद्य पौर्णमास्यां गुरुसार्वभौमसप्तरात्रोत्सवे द्वितीयं दिनं प्रवृत्तम्। प्रत्युषसि सुप्तोत्थिता यात्रिकाः शौचविधिं दंतधावनं कृत्वा तुंगातटिनोमुपगताः कृततुलसीगोविप्रदेवतावंदनाः नदीतीर्थप्रोक्षणेनात्मानं पावयित्वा नद्यां स्नातुं पादक्षेपमकुर्वन् उच्छिष्ठष्ठीवनविष्ठामूत्रकफोत्सर्गाद्यपराधं क्षमापयतः क्षमा भूतधात्रीम्। गुरुराजमंदिरप्राकारे श्रीपादपुत्रनिदेशेन गुरुसार्वभौमसुप्रभातं प्रावर्तत। सुभगोऽयं सुप्रभातगीतप्रवाहः श्रोतृचेतोहारी भक्तिबीजमंकुरयति। हृदयवीणां तोटयति नवरसभासुरनाडीशलाकया।

वंदारुकल्पकतरुं वरदं श्रितानां।
तुंगातरंगपरिषेवितसुंदरागं ॥
नंदात्मजं श्रुतिभिरीड्यममंदबोधं।
वंदे भवाब्धिभयभञ्जनमादिदेवम् ॥१॥

स्यात्सुप्रभातमखिलज्ञ तमोनिहंतः।
यत्सेवया कपिरवाप विधातृभावम् ॥
यन्नामकीर्तनपटुर्वरदैत्यबालः
प्रापत्परापरपदं विहतप्रतीपः ॥२॥

यन्मन्त्रतन्त्रनिपुणो ध्रुव आत्तसत्वः।
देवर्षिवाक्यकृदवाप ध्रुवं पदं प्राक् ॥
तं सूरिवंद्यमनघं गुरुराट्स्तुतं श्री-।
लक्ष्मीपतिं शरणमेमि शुभप्रभाते ॥३॥

विप्रोपदिष्टमनुना य उपासितः प्राक् ।
देवर्षिणा हृदि विभाव्य मनोज्ञमूर्तिम् ॥
तं राघवेंद्रगुरुसेवितपादपद्मं ।
प्रह्लादहृष्टनृहरिं ह्युषसि स्मरामि ॥४॥

एवं कलपदैर्भक्तिरसपरिप्लुतैः श्रीराघवेंद्रसुप्रभातं गायंतो विबुधश्रेष्ठाः महतीं सेवां व्यतन्वत गुरुवरेण्यस्य । सूर्योदयात्प्रागेव प्रत्युषसि अर्चकवराः नद्यां स्नाताः सुप्रभातसेवासमनंतरं बृंदावनस्य निर्माल्यं प्रावरणं परिधानं गंधमाल्यादिकं च विस्रस्य पुनःस्नाता ह्लादिनीह्लदात्प्रत्यग्रानीतकुंभोदकेनाभिषेकमकार्षुः गुरुस्तोत्रमंत्रमुच्चैः पठंतः। गोपीचंदनकल्केन द्वादश नामानि तत्तदवयवविभागेषु विलिप्य पंचमुद्रा अंकयित्वा तदैवानार्द्रीकृतशुष्ककौशेयवासः परिधाप्य शीर्षोपरि क्षौममावरणमाच्छाद्य गलेऽक्षमालां तुलसीमालाञ्चानाभिलंबिनी कृत्वोषःकालपूजां निरवर्तयन् । ततः पिपीलिकागत्या पङ्क्तिक्रमेणाऽगच्छतां भक्तानामपेक्षयाऽर्चकाः गुरुभ्यः मंगलार्तिक्यनारिकेलफलस्फोटनं इत्यादिकं दैनंदिनक्रममनुरुध्य समर्पयामासुः । एवं प्रातः पूजाया सप्तवादनसमयात्प्रागेव निर्वर्तितायां श्रीसुयमीद्रतीर्थपूज्यपादानामनुज्ञया कृष्णयजुःशाखिनां विप्राणामुत्सर्जनोपाकर्माख्यं संस्कारः श्रीपादपुत्राणां यजुःशाखाध्यायिनां महोन्नताध्यक्ष्ये प्रावर्तताष्टवादनसमये । सहस्रशः ब्राह्मणाः सम्मिलिताः होमकुण्डांत्समंततः चतुर्दिक्षूपविष्टाः याज्ञिकपुरोधसोपदिष्टमार्गेण दशविधस्नानपंचगव्यप्राशनानंतरं नवकाण्डर्षिस्थापनावाहनपूजानंतरं देवर्षिपितृतर्पणं कृत्वा याजमान्यपदारूढे आचार्यपुरुषे यथाविध्युत्सर्जनहोमं संपादयति सति यज्ञोपवीतसंस्कारमाचेरुः तंतुदोरकेषु तत्तदभिमानिदेवताः ब्रह्मविष्णुमहेश्वरांश्चावाह्य स्मृत्युक्तनियमाननुल्लंघ्य । ततः अग्न्यंतर्गतश्रीपरशुरामाय सूत्रयुग्मं घृताक्तमर्पयित्वा स्वयं यथायथं ब्रह्मचारिण एकं गृहस्थाश्रमिणः युग्ममारभ्य सूत्रपंचकं यावत् समंत्रकं श्रीनारायणावतारं वटुवामनं ध्यात्वा 'यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः' इति मंत्रमुच्चार्य दक्षिणबाहुमुद्धृत्य शिरोद्वारा गले धारयामासुः वामस्कंधाद्दक्षिणकुक्षौ कटेरूर्ध्वमालंबमानं यथास्यात् । करतलस्फालनेन यज्ञांतर्गतपरशुरामं त्रिवारं सप्रदक्षिणं नमस्कृत्य स्वे स्वे आसने समुपाविशन् ।

कृतकृत्यमात्मानं मन्यमानाः ब्राह्मणेभ्यः आचार्यपुरुषेभ्यः पुरोधःप्रभृतियाज्ञिकजनेभ्यश्च यथाशक्ति दक्षिणां दत्वा यज्ञोपवीतेन सार्धं उत्सृष्टवेदान् पुनः गृहीतुमुपाकर्माख्यसंस्कारसिद्ध्यर्थं जयादिहोमं कृत्वा चतुर्वेदान् सब्राह्मणारण्यकोपनिषदान् वेदांगान् कल्पगृह्यधर्मसूत्राणि पूर्वोत्तरमीमांसासूत्राणि पुराणेतिहासादिकं तथा श्रीमदाचार्यसूत्रभाष्यं तत्वप्रकाशिकादिटीकाग्रन्थादिकं च आद्यंतप्रतीकं गृहीत्वा गुरुमुखेन स्वीकृतवंतः । उत्सर्जनोपाकर्मरूपांगद्वयं यथाविधि समाप्याहुतिशेषं गृहीत्वा सर्वेजनाः स्वस्वावसथं जग्मुः पुनरविलंबितं श्रीगुरुसार्वभौमाणां पंचामृतमहाभिषेकोत्सवं श्रीपादानामाध्यक्ष्ये अर्चकैरनुष्ठीयमानमवलोकयितुमागंतुकामाः ।

श्रीपादास्तु प्रत्युषस्येव तुंगभद्रातटिनीतटमुपस्थिताः कृतबहिर्देशमृत्तिकाशौचादिप्रातराह्निकाः धौतहस्तपादाः श्रीहरिवायुस्मरणं तुलसी-गोवंदनमृत्तिकाधारणं यथाविधि निष्पाद्य श्रीगुरुराड्दर्शनस्तवन-पुरःकार्यानुष्ठानाभ्यनुज्ञायाचनादिकर्माऽवदातं अनुगच्छत्प्रभूतविद्वद्विप्रजनसमक्षं संपाद्य पावनधुनीवनावगाहनाय कृतसन्नाहाः निर्ययुः। परिचारकास्तु श्रीचरणाननुधावतो दंडकाष्ठकृष्णाजिनकौपीतकी कलशार्घ्यपात्रपूर्णकुंभादिसंभारानाहरंतः गुरुवरचरणाभ्यर्णमागताः। गुरवः परिधानशाटीमुच्चाल्य कौपीनमात्रावशिष्टकटयः तटिनीतट एव स्थित्वा तुंगांतर्गतगंगाजलं शिरसि हृदि पार्श्वयोश्च मार्जयित्वा पादस्पर्शनिष्ठीवनाद्यपराधं क्षमापयित्वा जले पदं चिक्षिपुः दुग्धाब्धिशायिनं श्रीलक्ष्मीनारायणं श्रीराघवेंद्रगुर्वंतर्गतमुख्यप्राणप्रेरकं नामग्राहं ध्यायंतः आनाभिस्पर्शं ह्रदमुपप्राविशन् सद्यः शिष्येणाऽऽहृत्य दत्तं दण्डकाष्ठं करे गृहीत्वा निमज्जनमकुर्वन् सहस्नायतामसंख्यस्त्रीपुरुषाणां 'हरे गुरो, गंगे, कृष्णवेणि, तुङ्गे गुरुसार्वभौम श्रीराघवेंद्र' इति नामग्राहं भक्त्युद्रिक्तचेतसोच्चैर्गर्जतां सहत्या तरंगायमाणे तटिनीप्रवाहे। श्रीपादाः जलेन नामधारणं कृत्वा दण्डकाष्ठस्यार्घ्यादिकं दत्वा पुनर्निमज्य दण्डकाष्ठेन जलं परितः जले बद्धांजलिनतकंधरं श्रीपादप्रसादासादनायोपसीदतां स्त्रीपुंसवृंदानामुपरि पर्यषिचन् शरवर्षमिव घनाघन शुष्यत्तालुकृश्यत्सत्वसंततौ । तदनु श्रीपादाः करधृतजलपूर्णकलधौतकरका शिष्येण पथि कुंभार्वजितनिसृतजलधारासेकं विधाय धूतपूते पथि मंदं मंदं पादुकाघट्टितपदांऽचितग-

तिभिः क्रमंतः पार्श्वयोः भयभक्तिभराक्रांतहृदयैः प्रतिपालयद्भिः जनैः दण्डपातप्रणामैः संभाव्यमानाः पुरतः शिष्येणैकेन पराक् स्वामिन् पराक् सावधानं साधयंतु सावधानमिति घोषयता प्रदर्शितं निष्प्रत्यूहं पन्थानमाव्रजंतो गन्धहस्तीव निरवग्रहं मनसा वेदमन्त्राननुवदंतः गुरुसार्वभौमप्रासादं प्रविश्य स्वीयजपप्रकोष्ठमचिरादासेदुः। प्रत्यग्रधौतशुष्ककाषायवासः परिधायोत्तरीयेण क्षौमांशुकेनोत्तरांगं प्रच्छाद्य विशाले दारुमयपीठे कृष्णाजिनवासःसमावृते शंखचक्रांकितपृष्ठपीठाधिष्ठिते समासीनाः गोपीचंदनं 'ॐ भूर्भुवः स्वः' इति करपुटेनाऽऽच्छाद्याभिमन्त्र्य वामकरमध्ये जले मर्दयित्वा शुभ्रकल्कं मध्यमांगुलिना ललाटे ऊर्ध्वपुण्ड्रं विलिख्य वेणुपत्राश्वत्थपत्राद्याकारैः कुक्षि-वक्षः-पार्श्वस्तन-बाहुमूल-गल-कपोल-पृष्ठप्रदेशेषु विध्युक्तप्रणाड्या विलिलिपुः विष्णुरथमिमं स्वदेहं मुद्राभिश्च भद्राभिः शंखचक्रगदापद्मनारायणसंज्ञाभिः तत्तदंगप्रदेशेषु भद्रकायाः श्रीस्वामिनः। ततः प्रात.संध्यामर्घ्यादिकं दत्वा निर्वर्त्य पापपुरुषविसर्जनगुरुमन्त्रांगन्यासकरन्यासतत्तन्मन्त्रदेवताध्यानपुरःसरं प्रणवमन्त्रं अयुतसंख्यया अर्धनिमीलितनेत्रेण श्रीहरेर्मनोज्ञमूर्तिं निध्यायंतः जेपुरुत्तरीयेणावृतोत्तमांगाः। तथा हंसमन्त्रनारायणकृष्णवासुदेवधन्वंतरिप्रभृतिमन्त्रविशेषान् महामन्त्रानपि नियतसंख्यया जपित्वा प्रतिमन्त्रं क्लृप्तसंख्यया तर्पणादिकं दत्वा प्रातराह्निकं पूरयामासुः समाहितचेतसः श्रीपादाः। पौराणिकप्रवरैर्वाच्यमानां भागवतकथां घटिकाद्वयं श्रुत्वा प्रसन्नमानसाः श्रीपादाः ततः घण्टारवेणानुष्ठानसमाप्तिं सूचयंतः गुरुसार्वभौमतदितरवृन्दावनदर्शनाभिवादनाभ्यर्थनादिकं कर्तुकामाः शिष्येण परिचारकश्च जनसम्मर्दे विच्छिद्यमानमार्गेण पराक्रवेण नानद्यमाने दिग्विभागे प्रातिष्ठंत धृतकरवस्त्राः हस्तदीपप्रदर्शितपथाः। तत्र तत्र वृंदावनेषु गुरुवरान्नत्वा संभाव्य प्रत्यागत्य वाङ्मुखसभामण्डपमाजग्मुः विद्वज्जनैः पण्डितोपाध्यायविद्यार्थिवृंदैः संदर्शकैर्यात्रिकसंघैः सकुतूहलमावेक्ष्यमाणाऽऽगतयः। समागतान् श्रीचरणान् आलोकशब्दैः संभावयामासुर्महता भक्तिभरेण लोकाः। संसाधितपृथून्नतव्यासपीठमञ्जसाऽलंचक्रुर्भूरिवैभवेन पार्श्वयोः परिचारकैश्चामरैः संवीज्यमानाः। दरविकसितवदनांबुजाः श्रीसुयमीद्रतीर्थाः समंतत ससंभ्रममुत्थितान् जनान् शुभरेखासमुल्लसितारक्तपाणितलमांदोलयित्वोपवेष्टुं संसुसूचिरे। आज्ञप्ताश्च सर्वे जनाः जोषमासनं जोजुषिरे सूचीपातरवमसहमानाः।

:

## प्रमाणलक्षणोपन्यासः

ततः वाङमुखकलापक्रममाकलयिता कार्यनिर्वोढाऽढौकत गुरुचरणानुज्ञया भाविभाषणचमत्कृति मितपचेन वचोविन्यासेन । विद्यारत्नं पण्डितवरेण्यः ह्यस्तनोपन्यासं वेदापौरुपेयत्वनिरूपक संगृह्य तत्संगतत्वेनाद्य प्रामाण्यस्वरूपं लक्षणं विभाग इत्यादि विषयमधिकृत्य श्रीगुरुसार्वभौमोपदिष्टपथेनावितथं किंचिदुवाच विदुषां परितोपाय गुरूपसत्त्यै च । तथाहि

श्री सुयमीन्द्रतीर्थानां सुश्लोक्याध्यक्षये तदनुग्रहबलेन प्रमाणस्वरूपमधिकृत्य यथामति किंचिन्निरूपयितु प्रवृत्तोऽस्मि । सामान्यविशेपन्यायमनुसृत्य विषय. विविच्यते सूचीकटाहन्यायेन । सर्वत्र वादा प्रतिवादाश्च प्रवर्तते तत्तद्वादिबुद्धिबलाबलनिबंधनाः । बुद्धिबल चांततो जीवस्य स्वरूपयोग्यतानुबंधि । अत उक्तमाचार्यैं —

अनादिकालतो वृत्ताः समया हि प्रवाहतः ।
स चोच्छेदोऽस्ति कस्यापि समयस्येत्यतो विभुः ॥
भ्रांतिमूलत्वमेतेषां पृथग्दर्शयति स्फुटम् ।
तर्कैंर्द्दढतमैरेव वाक्यैश्चागमवादिनाम् ॥

दौर्लभ्याच्छुद्धबुद्धीनां बाहुल्यादल्पवेदिनां ।
तामसत्वाच्च लोकस्य मिथ्याज्ञानप्रसक्तितः ॥
विद्वेषात्परमे तत्वे तत्ववेदिषु चानिशम् ।
अनादिवासनायोगादसुराणां बहुत्वतः ॥

दुराग्रहगृहीतत्वाद्वर्तंते समयाः सदा ।
तथापि शुद्धबुद्धीनामीशानुग्रहयोगिनां ।
सुयुक्तयस्तमो हन्युरागमानुगतास्सदा ॥
इति विद्यापतिः सम्यक् समयानां निराकृतिं ।
चकार निजभक्तानां बुद्धिशाणत्वसिद्धये ॥

इति अनुव्याख्याने ।

अर्थस्तु स्फुट एव। अतः अप्रतिपत्ति-विप्रतिपत्ति-अन्यथाप्रतिपत्ति-समुत्थान् वादान् निरस्य तत्ववादं प्रतिष्ठापयंति महात्मानः ज्ञानिनः साधुजनानुजिघृक्षया। ज्ञानं तेऽहं सविज्ञानमिद वक्ष्याम्यशेषतः। यज्ज्ञात्वा नेहभूयोऽन्यज्ज्ञातव्यमवशिष्यते।...ज्ञानी प्रियतमोऽतो मे। ...मत्प्रसादात्तरिष्यति। इत्यादि वचनेषु सविज्ञानं ज्ञानं मोक्षसाधनं। ज्ञानेन श्रीहरिस्तुष्यति। श्रीहरिप्रसादादेव मोक्ष। इति मोक्ष-साधनप्रकारो निरूपित। मुख्यामुख्ययोर्मुख्ये संप्रतिपत्तिरिति न्यायेन सविज्ञानं ज्ञानं यथार्थमेव भवितुमर्हति। न विपर्ययसंशयौ सामान्यतः ज्ञानव्यपदेशभाजौ। ईश्वराज्ञप्तश्चतुर्मुखब्रह्माऽपि सकल-जड-तिर्यङ्जंतुसर्जनेऽपि अतृप्तः ब्रह्मज्ञानयोग्य मानुषदेहं सृष्टवा शांतिमापेति श्रीमद्भागवते 'ब्रह्मावबोधधिषण मुदमाप देव' इत्युक्तम्। अनेन मोक्षोपयोगिब्रह्मज्ञानं संपादयितु मानुषदेह एवावकल्पते इति सूच्यते। ब्रह्म अणतीति व्युत्पत्त्या ब्राह्मण एव ब्रह्मज्ञानी भवितुमर्हति ब्राह्मणोऽस्य मुखमासीदिति पुरुषसूक्ते वर्णोत्तमत्वेन वर्णितत्वात्तस्य। तथा विधं च ज्ञानं यथार्थमेव स्यादन्यथाऽयथार्थज्ञानस्यापि सुखहेतुत्वं प्रसज्येत। सर्वैरपि भूतिकामैर्यथार्थज्ञानायैव प्रयत्यते जगतीतले प्रेक्षावद्भिः। अतः मुख्यामुख्यन्यायेन ब्रह्म अणति अण् गतौ गत्यर्थानां ज्ञानार्थकत्वात् ब्रह्म जानाति इति ब्राह्मणशब्दस्य यथार्थ-ज्ञानवत्वरूपोऽर्थः सरसतया लभ्यते। यथार्थज्ञानमेव अनारोपितं ज्ञानं। तच्च संशयविपर्ययभिन्नमेव भवति। एवं च संशयविपर्ययभिन्नत्वे सति यथावस्थितज्ञेयविषयीकारित्व प्रमाणसामान्यलक्षणमुक्तं भवति। सत्यंतविशेषणं तु प्रमाणस्वरूपसंकीर्तनार्थम्। यथावस्थितेतिविशेषणेनैव संशयविपर्यययोर्वारितत्वात्। यथा वस्तु तथा ज्ञानं=वस्त्वनतिक्रम्यवर्तमानं अथवा वस्तुसदृशं ज्ञान (यथाशब्दोऽनतिक्रमे सादृश्ये च वर्तते) यथार्थज्ञानं। सादृश्यं चाऽत्राबाधितत्वधर्मेणापि ज्ञेयम्। स्थाणुर्वा पुरुषो वा इति पुरोवर्तिनि ऊर्ध्वपदार्थे स्थाणुत्व पुरुषत्वविकल्पेन संशय उत्पद्यते न स यथार्थ ज्ञानं। समानोभयकोऽप्युपस्थापिते विशेषनिर्धारणोपायाभावात्। अनेन पुरुषेण भवितव्यमिति संभावनाऽपि संशयप्रभेद एव उत्कटैककोटिकत्वात्। शुक्तिकां रजतमिति रज्जुं सर्प इति गृहीते भ्रम एव सः। प्रमावदेककोटिकत्वेऽपि अस्य निश्चयस्य तदभाववति (रजतत्वाभाववत्यां शुक्तिकायां रजतत्वप्रकार-

कत्वं भ्रमत्वमेव) अतः एकस्मिन् धर्मिणि भासमानविरुद्धानेकाकाराव-गाहि ज्ञानं संशयः ऊर्ध्ववस्तुनि सहानवस्थानरूपविरोधवति स्थाणुत्व-पुरुषत्वे आपाततः गृहीते इति संशयः। विरोधस्तु न गृहीतः। ऊर्ध्व-तासाधारणधर्मसहवृत्तित्वेन स्थाणुत्वपुरुषत्वधर्मौ उभावप्युपस्थितौ। अन्यतरनिर्णायकविशेषधर्मज्ञानोदये संशयो निवर्तते। अन्यदन्यात्मना-ऽवभासमानं भ्रमः। शुक्तिः दोषसहकृतेंद्रियेण (चक्षुषा) रजतात्मना-ऽवगाहते इति स भ्रमः। संशय-भ्रमातिरिक्तं ज्ञानं यथार्थमेव भवितु-मर्हति 'यो मामेवमसंमूढो जानाति पुरुषोत्तमं। स सर्वविद्भजति मां सर्वभावेनभारत' इत्युक्तरीत्या सम्मोहा (संशय-विपर्यया) स्पृष्टं ज्ञानं अवश्यं संपाद्यं येन पुरुषोत्तमप्राप्तिर्नाम मोक्षो भवेत्। पुरुषोत्तमज्ञानं प्रतियोगिभूतपुरुषज्ञानमपेक्षते।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।

शरीरक्षरणात्क्षराः जीवाः। लक्ष्मीरक्षरदेहत्वादक्षरा। क्षराक्षर-पदाभ्यां जडमप्युपलक्ष्यते। प्रकृति-पुरुष-लक्ष्मीभ्यः उत्तमः परमात्मा इति ज्ञानाय तेषां स्वरूपावधारणमपेक्ष्यते। तदर्थं प्रमाणान्यपेक्षि-तानि। श्रीजयतीर्थमुनिभिः प्रमाणपद्धतावेवमुक्तं।

तदेवंभूतैः प्रमाणैः पदार्थानां नित्यानित्यत्वादिकं निश्चित्य विष-येषु विरक्तस्य शमदमादिसंपत्तिमतः वासुदेवैकशरणस्य तद्विषयाणि श्रवणमनननिदिध्यासनान्यादरनैरंतर्याभ्यां बहुकालमनुष्ठितवतः भग-वत्साक्षात्कारे सति उद्रिक्तया भक्त्या भगवत्प्रसादादशेषानिष्टनिवृत्ति-विशिष्टानंदादिस्वरूपाविर्भावलक्षणा मुक्तिर्भवति। एवं विरक्तिभक्ति-उपासनार्थं प्रमाणैः पदार्थानां ज्ञानं मुमुक्षुभिः संपाद्यम्। इति।

किमिदं प्रमाणं नाम येन पदार्थानां नित्यानित्यत्वादिक निश्चीयते विषयेषु विरक्तिः परमात्मनि भक्तिश्चोपजायते। गृहाणेदमुच्यमानं। प्रउपसर्गपूर्वकमाङ्धातोः ल्युट् प्रत्यये प्रमाणमिति रूपं निष्पद्यते। ल्युट् करणाधिकरणयोर्भावेचेत्यनुशासनात् अधिकरणार्थकत्वस्यात्रा-संभवात् करण-भावार्थकत्वमेव ग्राह्यं ल्युटः। भावो धात्वर्थः। तथा च प्रमाणशब्देन प्रमा=यथार्थज्ञानं तस्य करणं साधनं (इंद्रियानुमान-

शब्दाः) चेति अर्थो लभ्यते । धात्वर्थज्ञाने (मायां) प्रकर्षो नाम (प्रमा) यथार्थत्वं । एतेन केवलप्रमाणं अनुप्रमाणं चेति उभयं संगृहीतं भवति । याथार्थ्यपदेनाप्ययमेवार्थो लभ्यते । तथाहि। ऋधातोः कर्मणि थ प्रत्यये ऋ गतौ इति गत्यर्थानां ज्ञानार्थकत्वात् थ प्रत्ययस्य विषयार्थकत्वात् ज्ञानविषयोह्यर्थशब्दार्थः । यथाशब्दोऽन-तिक्रमे सादृश्ये वा वर्तते । तथा चार्थमनतिक्रम्य वर्तमानं ज्ञानं करणं वा यथार्थं अबाधितं अव्यभिचरितं भवति । तस्य भावः याथार्थ्य तदे-वोपर्युक्तं प्रामाण्यमिति भावः । अतः प्रमाणपद्धत्यादिलक्षणग्रंथेषु यथावस्थितज्ञेयविषयीकारित्वं प्रमाणसामा यलक्षणमुक्तं । अत्र ज्ञेय-विषयीकारित्वं साक्षात् ज्ञाने परंपरया नाम ज्ञानद्वारा करणेषु इत्यवगंतव्यम् । ज्ञेयविषयीकारित्वं तूभयत्रैकरूपमेव । अतो नाननुग-मरूपो दोपो भवति । अयमत्र विशेप· अवगंतव्यः । ज्ञानं यथा साक्षात् अन्याव्यवधानेन अर्थविषयकं तथा तत्साधनानि इद्रिय-लिग-शब्दरूपा-नुप्रमाणान्यपि अन्याव्यवधानेन साक्षादेवार्थविषयकारीणि । न हि तानि किमप्यविषयीकृत्य ज्ञानं जनयितुमीशते । यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विपय इति विषयत्वनिर्वचनात् । सन्निकर्षशब्देन प्रत्यासत्तेरभिमतत्वात् तेन अनुमानशब्दयोरपि संग्रहो भवति । इन्द्रि-याणामर्थैः संयोग इव लिंग-शब्दयोरपि-लिंगि-वाक्यार्थाभ्यां व्याप्ति-शक्ति (व्युत्पत्ति=पदपदार्थसंबधज्ञानं) रूपप्रत्यासत्त्या लिंगिवाक्यार्थ-धीजनकत्वेन तयोः ज्ञेयविषयीकारित्वमुपपद्यते । करणानि यत्संबध्य ज्ञानं जनयंति तस्यैव ज्ञानविपयस्य करणानि प्रत्यपि विषयत्वात् । एवं चार्थविषयीकारित्वं ज्ञानरूपकेवलप्रमाणे तत्साधनेषु अनुप्रमाणेषु इंद्रियलिंग-शब्देषु चैकरूपमेव। परं तु अर्थे यज्ज्ञेयत्वं तज्ज्ञानोपाधिकं । न करणोपाधिकं । अतो ज्ञेयविपयीकारीत्यत्र ज्ञेयत्वांशे अनन्यापेक्षत्वा न्यापेक्षत्वरूपभेदमात्रेण साक्षात्त्व-परंपरया तत्साधनत्वव्यवहार इति न कश्चिद्दोषः । ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरम् । इत्यनु-व्याख्यानव्याख्याने सुधायां केवलं विषयस्य ज्ञेयता ज्ञानोपाधितया करणानि तु तज्जनकतया तां संपादयंतीत्येतावंतं विशेषमाश्रित्यकेवला-नुप्रमाणभेदः समर्थितः । एवं च याथार्थ्यमेव प्रमाणसामान्यलक्षणमि-ति केवलानुप्रमाणसंग्राहकत्वेन निरूपितम् । अन्ये वादिनः प्रमाणलक्षणं-विपरीतमाहुर्यथायथ । तत्सर्वमनुपपन्नमित्युपपादितं प्रमाणपद्धति-

प्रमाणलक्षण-तत्वनिर्णय-अनुव्याख्यानसुधादि ग्रंथेपु । तथाहि प्राभाकराः भास्करश्च अनुभूति प्रमाणमाहुः । संशयविपर्ययव्यापकत्वात् ब्रह्मतर्कादिस्मृतिषु वेदादिपु च यथार्थज्ञानसाधनेष्वव्यापकत्वाच्चायुक्तम् । ज्ञातता-प्राकट्यापरपर्यायवाच्यस्य प्रमेयाश्रितस्यप्रकाशविशेषस्य साधनं क्रियाज्ञानं प्रमाणमिति भाट्टाः । ज्ञाततायां ज्ञानव्यतिरिक्तायां प्रमाणाभावेनासंभावितमिदं लक्षणं । अतीता दिज्ञानेषु वेदादिषु चाव्यापकं च । अनधिगततया भूतार्थज्ञानं प्रमाणमिति भाट्टानां लक्षणांतरमपि न स्वरस । स्मृतौ वेदादिषु अनुप्रमाणेषु च अव्याप्तेः । सम्यगनुभवसाधनं प्रमाणमिति नैयायिकादयः । तदप्यसार । यथार्थज्ञानेऽव्याप्तेः । प्रमाव्याप्तं प्रमाणमित्युदयनः । तदपि न दोषदूर ईश्वरप्रमाव्याप्तत्वेन प्रमेयमपि प्रमाणं स्यात् । अतः याथार्थ्यमेव प्रमाणलक्षणमिति स्थितम् ।

केवलप्रमाणं चतुर्विधं—ईशज्ञान लक्ष्मीज्ञानं योगिज्ञानं अयोगिज्ञानं चेति । तत्र सर्वार्थविषयक नियमेन यथार्थ अनादिनित्यं स्वतंत्रं निरतिशयस्पष्ट ईश्वरज्ञान । ईश्वरेत्वसार्वत्रिक अन्यत्रानालोचनेऽपि सर्वविषयं नियमेन यथार्थ अनादिनित्यं । ईश्वरैकाधीनं तदपेक्षया स्पष्टत्वे न्यूनं लक्ष्मीज्ञान । योगप्रभावलब्धातिशयं योगिज्ञानं । तत्त्रिविधं । ऋजुयोगि ज्ञान तात्विकयोगिज्ञानं अतात्विकयोगिज्ञानं चेति । ऋजवोनाम ब्रह्मत्वयोग्याजीवाः । तदतिरिक्तास्तत्वाभिमानिनो जीवाः तात्विका । तद्व्यतिरिक्ता. देवादय अतात्विकाः । तेपां ज्ञानस्वरूपं ग्रंथेष्ववगंतव्यम् ।

अनुप्रमाण त्रिविधं । प्रत्यक्षानुमानागमभेदात् । तज्जन्यं ज्ञानं केवलप्रमाण । निर्दोषार्थेंद्रियसन्निकर्षः प्रत्यक्षं (व्यापारप्राधान्यविवक्षया) । निर्दोषोपपत्तिरनुमानं । निर्दोष शब्दः आगमः इति तल्लक्षणानि बोध्यानि । सर्वत्र दोपाभावघटितत्वात् लक्षणस्य तत्प्रतिपत्तये प्रतियोगिभूतदोषज्ञान आवश्यकं । तद्विना समग्रलक्षणज्ञानं न संभवतीति प्रत्यक्षानुमानागमदोषाः आदौ निरूप्यंते । तत्र प्रत्यक्षदोषाः—

इन्द्रियदोषा. पित्तागुल्यवष्टभादय काचकामलादिकं मनोऽनधिष्ठितत्वमित्यादय । अर्थदोषा अतिदूरत्वं, अतिसामीप्यं, चाकचक्यं, सौक्ष्म्यं, व्यवधानं, समानद्रव्याभिघातः अनभिव्यक्तत्व सादृश्यं

द्रव्यांतरेणेत्यादयः। प्रमोत्पत्तिप्रतिबंधकत्वादेते दोषा इत्यभिधीयंते। प्रतिबंधकत्वं च द्वेधा प्रमाऽजनकत्वेन, तद्विपरीतकार्यजनकत्वेन च। यथा सादृश्यादिदोषवशात्प्रत्यक्षेण पुरः स्थिताऽपि शुक्तिः शुक्तित्वेन न ज्ञायते। परं रजतत्वेनावगाह्यते। दूरस्थाः चूतपनसादयः व्यत्यासेन पनसचूतत्वेन ज्ञायंते। इत्यादि। अपगते च दोषे (इन्द्रियस्य अर्थस्य च) यथार्थं ज्ञानं नियमेनोत्पद्यते इत्यनुभवसिद्धम्। इन्द्रियाणां ज्ञानजननशक्तिः स्वाभाविकी। ज्ञाने जननीये तत्प्रामाण्यमपि स्वयमेवोदेति।

इन्द्रियाणि सम्यग्ज्ञानसाधनानीत्युक्तं भवति। दोषः सहकारः अप्रतिपत्ति-अन्यथाप्रतिपत्तिविप्रतिपत्तिजनकः। सहकारिकारणसामर्थ्याद्विपरीतकार्यजननं दाहेन वेत्रबीजस्य कदलीकाण्डजननादौ दृष्टचरम्। व्यापारवत्कारणं करणं। संयोगादिसंनिकर्ष एव अत्र व्यापारः।

अनुमानदोषा. अर्थवचनभेदात् द्विविधाः। साक्षादुपपत्तिदोषौ विरोधासंगती। तद्द्वारेण वचनस्यापि। वचनदोषौ न्यूनाधिक्यादि। वचनद्वारेणार्थस्यापि। एते विरोधादयः कथारूपसाधारणाः अनुमाननिष्ठाश्च। परोदीरितनिग्रहस्थानानि वचनदोषेषु विरोधादिषु अंतर्भावितानि तत्र तत्र तदसंबद्धताविवरणपूर्वम्। ते च दोषा विरोधासंगतिन्यूनाधिक्यसंवादानुक्तिरूपा। एतेषामुदाहरणानि अतर्भावप्रकारश्च प्रमाणपद्धतिप्रमाणलक्षणादिग्रंथेषु विवेक्तव्याः। विस्तरभयान्नात्राक्रम्यते। नैयायिकानां असिद्धि-विरोध-बाध-सत्प्रतिपक्ष-व्यभिचारादिपंच हेत्वाभासाः दृष्टांतदोषाश्चात्रैवांतर्भाव्यते।

परार्थानुमानस्य प्रतिज्ञा-हेतु-उदाहरण-उपनय-निगमनानि पंचावयवा नैयायिकादिभि अंगीक्रियंते। मीमासकै. प्रतिज्ञादि-उदाहरणादित्र्यवयवाः अभ्युपेयंते। उदाहरणोपनयौ द्वावेवेति बौद्धाः वदंति। परं पंच-त्रय. द्वौ इति नियमो नावश्यकः। यावताऽनुमितिरुत्पद्यते तावदंगीकार्यम्। क्वचिदेकेनैवावयवेनानुमिनोति साध्यं व्युत्पित्सुः पुरुषः इति नावयवनियम आदरणीय इति आचार्याणां सिद्धांतः।

अनुमानागमयोः ज्ञातकरणत्वात् ज्ञात एव हेतुः (साध्यनिरूपित-

व्याप्तिविशिष्टत्वेन (व्याप्यत्वेन) ज्ञातः। पक्षधर्मताबलेन साध्यविषयकानुमिति जनयति। व्याप्तिविशिष्टपक्षधर्मताज्ञान परामर्शः। स एव व्यापार व्याप्येन व्यापकानुमित्युत्पत्तौ। अत्र व्याप्तिर्नाम साहचर्यनियमः। हेतुसाध्ययोरव्यभिचरित संबंधः। स चानेकप्रकारः। व्याप्तिप्रकारमपेक्ष्य लिंगज्ञानस्य लिंगिज्ञानजनकत्वनियमात् धर्माणां गतिविशेषा. अवगंतव्याः। अथ विषयः प्रमाणपद्धतौ चतुष्टयी खलु धर्माणां गतिः इत्यादिग्रंथे स्पष्टीकृत बुभुत्सूनां महोपकाराय। तदनुरोधेन पक्षधर्मतानियमो निवारित. सिद्धांते। समुचितदेशवृत्तित्वं व्याप्यस्य हेतोः पक्षे साध्यानुमापकत्वाय संपद्यते। उपर्युक्ता दोषा अनुमितिप्रतिबंधकाः त्याज्या एव सम्यगनुमित्युत्पत्तौ। तेषामनुमितिप्रतिबंधकत्वं तन्निवारणप्रकारश्च यत्किंचिद्विवरिष्यते।

एवमेवागमोऽपि ज्ञानकरणमेव। सम्यक्श्रुतः समयस्मरणानुगृहीतः शाब्दन्यायानुसंधानसहित एव शब्द स्वार्थस्य बोधक. न तु सत्तामात्रेण। विभक्त्यंता वर्णाः पदं। आकांक्षा-योग्यता-सन्निधिमतां पदाना समूहो वाक्यम्। अत्र पदपदार्थसंबधज्ञान (व्युत्पत्तिः) व्यापारः। तद्विशिष्ट आगम अर्थावगमकः। शाब्दन्याया. श्रीमदाचार्यैः अनुव्याख्यान-न्यायविवरणादि ग्रंथेषु टीकाटिप्पणीकर्तृभिः न्यायसुधापरिमलादिकृतिषु सम्यङ्निरूपिताः। तथाहि अत्र पदत्वेन (अर्थवद्धातुरप्रत्यय प्रातिपदिकं। ङयाप्प्रातिपदिकात्। सुप्तिङंतं पदं) निरभिधेयत्वस्य आकांक्षासन्निधिभ्यां अन्वयाभावस्य योग्यतया विपरीतबोधकत्वस्य च निरासे सति ज्ञानज्ञापकत्वादि दोषशून्यत्वस्फोरणाय निर्दोषः शब्दः आगम इति लक्षणे निर्दोषपदप्रयोगः सार्थकः।

त्रीण्येव प्रमाणानि। अर्थापत्ति-अभाव.-अनुपलब्धि-संभवः-ऐतिह्य परिशेष उपक्रमादय श्रुतिलिंगादयः सर्वे यथायथं अनुमानागमयोः प्रत्यक्षे चांतर्भवंति। तत्प्रकारस्तु श्रीन्यायसुधायां विशदमुपपादितः सुधीभिरवगंतव्य।

आगम पौरुषेय अपौरुषेय इति द्विधा भिद्यते। अपौरुषेयः पुरुषदोषनिबंधनदोषाभावात् सर्वथा प्रमाणमेव। पौरुषेये तु आप्तवाक्यं प्रमाण। वक्तृश्रोतृ-प्रसंगानामानुकूल्यमाप्तिपदार्थ.। तद्वान् आप्तः। वक्त्रानुकूल्यं नाम विवक्षितार्थतत्त्वज्ञानं अविप्रलिप्सा करणपाटवं

चेत्यादि। श्रोत्रानुकूल्यं तत्वज्ञानयोग्यता। प्रसंगानुकूल्यं प्रकरणाद्यानुगुण्यं। एतत्पौरुषेयवाक्यं प्रामाण्यमुपस्थापयति। अपौरुषेयागमः वेदः निर्दोषत्वात्प्रमाणमेवेत्युक्तं। 'वेदा नित्यत्वान्मानमुत्तमं' इत्यणुभाष्ये आचार्यैरुक्तम्। नियतानुपूर्वीविशिष्टः ईश्वरबुद्ध्युपाधिकः अर्थ-व्यत्यासशून्यः वाक्यसमूहः अपौरुषेयागमः। अत्र वेदस्य नित्यत्वं नाम सजातीयानुपूर्वीकत्वं। न वर्णवत्कूटस्थनित्यत्वमिति ध्येयम्। 'न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः।' इति 'क्रमस्य कृतकत्वेऽपि' इत्यादि तत्वनिर्णयटीकोक्तेः। यत्तु नित्या वेदाः पुराणाद्याः काल. प्रकृतिरेव च नित्यानित्यमित्यादि तत्वसख्यानटीकायां नित्यत्वं नाम कूटस्थतयाऽऽद्यन्तशून्यत्वमिति वचनं तत्तु सर्वज्ञेश्वरबुद्धिक्रममपेक्ष्य। नत्वस्मदादिप्रमोत्पादकक्रममपेक्ष्य। सर्वज्ञत्वादीश्वरबुद्धौ सर्वदा प्रतीयमानत्वादिति तत्वनिर्णयोक्तेः। (तत्वमञ्जरी) वेदस्य प्रमाजनन शक्ति (प्रामाण्यं) सहजैव। ज्ञानजननशक्तेरेव प्रमाजननशक्तित्वात्। गुणानपेक्षत्वात् वेदाः उत्तमं मानमित्यर्थः। आनुपूर्व्या साजात्यं नाम सादृश्यं पूर्वकल्पे यदानुपूर्वीविशिष्टः वेदः अधीतः तत्सदृशक्रमविशिष्ट-त्वेनोत्तरस्मिन् कल्पेऽप्यधीयते अविच्छिन्नाध्ययनपरंपरया। इति भावः।

पौरुषेयेषु वेदानुसारिषु इतिहासपुराण-पंचरात्राद्यागमेषु पंचम-वेदत्वेन प्रसिद्धेषु पूर्वकल्पापेक्षया शब्दक्रमव्यत्यासेऽपि अर्थव्यत्यासो नेति पौरुषेयापौरुषेयागमेषु विशेषः। उभयोरपि ईश्वरबुद्धौ स्थित-त्वेऽपि एकस्य नित्यत्वमपरस्यानित्यत्वं कथं स्यादिति नाऽस्माकं बुद्धिराकलयितु प्रभवति। प्रयोजनाभावान्नाचार्यैरपि मध्वमुनिभि-स्तदाकूतं प्रकटीकृतम् एवमेव श्री जयतीर्थमुनिभिरभिहितम् विष्णु-तत्वनिर्णयटीकायाम्।

ऋग्यजु.सामाथर्वभेदेन वेदाश्चतुर्विधाः। प्रत्येक शाखाभेदेनानंताः। मन्त्र-ब्राह्मणारण्यकोपनिपद्भेदेन प्रतिपाद्यभेदः संजातः। तदर्थविवरणानुकूलानि शिक्षाकल्पव्याकरणनिरुक्तच्छंदोज्योतिर्ग्रंथाः षट् वेदांगानि प्रसिद्धानि।

**ऋग्यजुः सामाथर्वाश्च भारतं पंचरात्रकं।**
**मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥**

यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥

इत्यादि प्रमाणवलात् धर्माधर्माद्यतीद्रियवस्तुसिद्धये अपौरुपेयागमाः तन्मूलानि इतिहासपुराणागमादीनि वैदिकस्मृत्यादीनि पौरुपेयाणि सर्वोत्तमप्रमाणत्वेनांगीकार्याणि ।

एव चार्वाकार्हतबौद्धादीन्निराकृत्याऽऽचार्यैः प्रत्यक्षानुमानागमानां त्रयाणामेव पदार्थस्वरूपावधारणाय प्रमितिकरणत्वं समर्थितम् । प्रमाणानां वलावलविवेकः प्रसगादुत्तरत्र निर्णीयतेऽस्माभिः । इति सत्रमवदातम् ।

श्रीपादास्तु प्रहृष्टाः सत्सिद्धांतप्रवचनप्रचयादिकं उत्तरोत्तरमभिवर्धमानं सत् श्रीगुरुसार्वभौमांतर्गतमुख्यप्राणांतर्गतश्रीवेदव्यासप्रसादमासाद्य समेपा सज्जनाना श्रेयः संपादयतु इत्याशीर्वचनेन सर्वाननुगृह्य श्रीगुरुसार्वभौमाणां पंचामृताभिषेकादिसपर्यां यथाविधि निर्वाहयितुं परिवारपरिचारकपूगसमेता पण्डितैः षट्शास्त्रनिष्णातैरनुगम्यमाना. राजतयष्टिमुष्टिना दूते नारात्सप्रदर्शितपथाः गुरुसार्वभौमवृंदावनाभ्यर्णमगुः । तत्रार्चकाः यथापूर्वं यात्रिकभक्तानां नामग्राहं श्रीमत्सुयमीद्रमौनीद्राणामाध्यक्ष्ये पंचाभिषेकसूक्तगुरुस्तोत्रपठनपूर्वकं महता वैभवेन पंचामृताभिषेकमुपकल्पयामासुः ।

तदनु श्रीपादास्तृतीययामादौ मठातः स्नानगृहे स्नात्वा समलमल्लकेनारक्तक्षौमदुकूलेनाऽऽत्मानमाच्छाद्य गोपीचदनकल्केन नाममुद्राश्च धारयित्वा माध्याह्निकसध्यादियतिकर्माण्याचरन् । ततः तत्वन्यास मातृकान्यासधूपदीपनैवेद्यादिभिः घंटा शखंचाभ्यर्च्य विशिष्टशालग्रामशिलाः व्यासमुष्टीश्च क्षीराभिषेकेण संपूज्य तेन शेषक्षीरेण मुख्यप्राणं मठस्थविबुधेंद्रविजयींद्रराघवेंद्रवादीद्रादिगुरुवृंदावनानि चाभिषिच्य क्षीरमेकस्मिन् रजतकरण्डके निचिक्षिपुः । तत कलशपूजा विधायाऽऽत्राहितपंचपात्रस्थजलेनार्घ्यपाद्यादि दत्वा कलशोदकेन महाभिषेकमकार्पुः तुलसीदलेन शंखस्थवारिणा श्रीमूलरामादिप्रतिमात्रयं संप्रोक्ष्य । विशिष्टशालग्रामशिलाः व्यासमुष्टीश्च स्वयमेवोद्धृत्य वस्त्रेण शोधयित्वा राजतसपुटे न्यधुः । उर्वरित च शालग्रामशिलासंचयं वामपार्श्वार्चकपरिचारकाः पृथक् वस्त्रेण निर्णिज्य तत्तत्संपुटे चिक्षिपुः ।



अश्वारूढं श्रीगुरुसार्वभौमं दृष्ट्वा श्रीहरिरेव तत्रात्मानं सन्निधाप्य कलिनिग्रहाय आस्थित इति विभाव्यते। अथवा वरगिरीशः श्रीवेंकटेशः पद्मावतीं परिणेतुं मृगयाविहारव्याजेनाश्वमारुह्य पुष्पोद्याने विराजते।

(प. १०३)

ततः स्वयं श्रीपादाः गंधाक्षततुलसीपुष्पमालादिभिरर्चनामकुर्वन् विष्णुसहस्रनामावलिं वेदांतसूत्राणि च पठंतः अणुभाष्यं सूत्रभाष्यं अनुव्याख्यानं पंचाधिकरणीमावर्तयतः। तत्वाभिमानिन्यः मातृकाभिमानिन्यश्च देवताः सप्ताऽऽवरणदेवताः प्रणवप्रणतिपूर्वकं सभाजिताः परिमलधूपमाघ्राप्य दीपावलिं प्रज्वाल्य त्रिवर्तिनीराजनं कृत्वा परमात्मने नैवेद्यं भक्ष्यभोज्यलेह्यपेयात्मकं चतुर्विधमृष्टान्नं समर्पयामासुः तत्तद्वस्तुषु तन्नियामकभगवद्रूपाणि विचित्य श्रीहरिस्वातन्त्र्यमनुसंदधिरे। अन्नादिस्थभगवद्रूपाणि खण्डाखण्डव्यूहरूपेण स्थितानि अन्नादिकर्तृदेवताः रसाभिमानिदेवताश्च पृथक् पृथक् चिंतयित्वा तत्तद्भगवद्रूपाणां प्रतिमास्थभगवद्रूपैरैक्यं मनसा भावयित्वाऽभिन्नतद्रूपेषु विशेषमहिम्ना भेदव्यवहारमाकलय्य नितरां प्रमोमुदीरन् मनसि भगवदद्भुतैश्वर्यं विभावयंतः।

ततः श्रीमहालक्ष्मी-मुख्यप्राणादिपरिवारदेवान् तीर्थगंधाक्षतातुलसीपुष्पादिभिः संपूज्य नैवेद्यमर्पयामासुः। तदनु महानीराजनं कृत्वा देवान् स्वयं संपुटे न्यस्य पेटिकायां स्थापयामासुः। पूर्ववत् प्रदक्षिणनमस्कारान्कायवाङ्मनोभिः कृतापराधक्षमापनसनाथानकुर्वन् भक्तिपूतांतःकरणेन। श्रीगुरुसार्वभौम-वादींद्र-सुधर्मेन्द्र-सुव्रतींद्रगुरुभ्यः तीर्थादिकं दत्वा गंधतुलसी पुष्पहारैः समभ्यर्च्य हस्तोदकं प्रायच्छन्नातिथ्यं च ग्राहयामासुः। ततः स्वयं तीर्थप्राश्य अलंकारब्राह्मणेभ्यो दत्वा भक्तवृंदेभ्यश्च ददुः। ततः श्रीपादाः भिक्षां स्वीचक्रुः। ब्राह्मणाश्च सुमृष्टान्नं भोजिताः यथेष्टम्।

यथाक्रमं सायंपूजां विधाय शिष्येभ्यः मन्त्राक्षतावितरणानंतरं श्रीपादाः गुरुसार्वभौमद्वितीयदिनोपचारेण वाहनोत्सवं कारयामासुः। अश्वारूढं श्रीगुरुसार्वभौमं दृष्ट्वा श्रीहरिरेव तत्राऽऽत्मानं सन्निधाप्य कलिनिग्रहाय आस्थित इति विभाव्यते। अथवा वरगिरीशः श्रीवेंकटेशः पद्मावतीं परिणेतुं मृगयाविहारव्याजेनाश्वमारुह्य पुष्पोद्याने विराजते इति जना उत्प्रेक्षिष्यंते। महानीराजनानंतरं मूलवृंदावनोपकण्ठे मन्त्रपुष्पसेवां समर्पयामासुः श्री सुयमींद्रमुनींद्राः। भव्यस्वरूपं श्रीगुरुराजं दृष्ट्वा तन्महिमानं संकीर्तयतो भक्तप्रवराः श्रीसुमध्वविजयनाटकं नाटयवाचनं प्रेक्षितुं नाट्यशालां प्रति प्रस्थिताः स्वस्वानुरूपे स्थानेऽवस्थापयितुमात्मानम्।

# श्रीसुमध्वविजयनाटकम्

## नांदी

श्रीजानिश्चिदचिज्जगज्जनयिता वेदैकवेद्यो हरिः ।
ब्रह्माद्यैः सुरपुंगवैर्जनहितायाभ्यर्थितः सादरं ॥
तेने तत्वविनिर्णयाय बहुधा विद्यां पराख्यां मुदा ।
सूत्रैर्युक्तिपरिप्लुतैरथ पुराणाद्यैः श्रुतिप्रेरितैः ॥ १ ॥

द्वे विद्ये इति यच्छ्रुतौ निगदितं व्याख्यातमार्यैः पुरा ।
तद्भ्रांतैर्वितथीकृतं विधिवशैर्विज्ञाय पाराशरैः ॥
सत्सिद्धांतमहापयन् श्रुतिमतं व्यावर्णने प्रेरितः ।
वायु. प्रादुरभूत् भुवि व्यतनुत ग्रन्थान् स मध्वात्मना ॥ २ ॥

बलित्थादिमन्युसूक्तैर्वा यो रूपत्रयं स्फुटं ।
वर्णितं रामकृष्णव्यासशिष्याय ते नमः ॥ ३ ॥

आंजनेयकृतसेवया विभुः प्रोत आत्मसहभोगमद्भुतं ।
व्याततार गुरवे हनूमते भक्तिरेव ननु मुक्तिदायिनी ॥ ४ ॥

भीमो ध्वस्तहरिप्रतीपनिकरः धर्माध्वरे योजितः ।
कृष्णं गोपवधूवरं वलहुतैः संतर्प्य तत्प्रीतिभाक् ॥
साम्राज्यं त्रिदिवैः सुगेयमखिलं प्राप्नोत्प्रयत्नोद्यतः ।
भक्तिः शक्तियुता फलत्यवितथं पूता हरेर्वीक्षणैः ॥ ५ ॥

### नांद्यंते सूत्रधारः

अहो मांगलिकप्रस्तावे आज्ञप्तोऽहं गुरुवरैः श्रीसुयमीद्रसयमिवरैः यदद्वैतसिद्धातप्रतिष्ठापनाचार्याणा श्रीमदानन्दतीर्थभगवत्पादानां चरित मंक्षु संक्षेपेणास्मिन् सप्तरात्रोत्सवप्रसगे कथानकेन गीयतां परिषत्सुतोषायेति । अयमहमद्य सन्नद्धः संभारान् प्रयोगपरिणति-

निर्वाहपटून् संपादयितुमुत्सुको विद्वत्परिषद्याऽत्मानमुपस्थापयामि सपरिकरं।

कः कोऽत्र भोः। आहूयतां शैलूषवर्गः धरामरपरीवारेण करंदीकृत-विद्वद्हृदयांतरालः बुधव्रातप्रसत्तये समीरसमयाब्धिसंवर्धनशीतग-भस्ति निस्तुलप्रतिभाप्रभावविभावितनिलिपकुलललामं श्रीमन्मूल-रामपदपंकजभ्रमरं श्रीराघवेंद्रगुरुतल्लजमाराधयितु श्रीमज्जगद्गुरुकथा-प्रयोगपाटवेन।

यस्त्रेतायुगजन्मना रघुपतिः रक्षोगणं निर्गणं।
उद्वास्यन् कपिवर्यमेतमतुलप्रख्यं बभारांतरे॥
यस्त्रस्ताखिलगोगणं विपुलधीः कृष्णो जुगोप स्वयं।
भीमं द्वापरसंभ्रमे हतजरासंधं मृधेऽराजयत्॥ ६॥

तत्सेवार्यै कलौ प्राप्ते व्यासानुग्रहभाजनं।
मध्वनामा बभूवाऽभ्रे व्यभ्रे चन्द्र इव प्रभुः॥ ७॥

(सूत्रधारः कथा प्रसगमुपस्थापयति।)

[नेपथ्ये दुंदुभिनादः]

संतुष्यतां सकलसन्निकरैरसद्भिः।
खिद्येत वायुरयमाविरभूत्पृथिव्याम्॥

सूत्रधार.—अये कतरोऽयं स्तनयित्नुसपत्नस्तिग्मनिह्राद इव गभीर-घोषः सपदि जोघुष्यते नाकिनिकायैः वियति सभारूढविमानावलिभिर-हमहमिकया महामहसंमर्द इवातिलापातमाक्रमद्भि। किमद्य दैत्यकुला यमारिशिरश्छेत्ता विबुधजनमनश्चकोरचंद्रमसः प्रह्लादस्य वरदः श्रीनृसिंहः भुवि अवतीर्णः दैत्यापसदहिरण्यकशिपुस्वातसंतापनिदानं। अथवा दुर्दम्यदुरासाद्यासुरजालमकैः समाक्रांते नाकिनिवासे लोके स्वा-वासादभ्रंशितेषु सुरसमूहेषु कश्यपादितितपसा तीव्रेण तुष्टचेतसा भगवता नारायणेन ओजस्तेजोनिधान वटुवामनरूपं गृहीत्वा दैत्यचक्र वर्तिनं बलिराजं प्रतार्याऽध्वरे त्रिपादमेयं भूप्रदेशं याचित्वा भक्ति पूत-

चेतोभ्य आदितेयेभ्य स्वर्गाधिपत्यं प्रतिपादयितुमवनितलमागत किं। आहो स्वित् दुर्मायिमायिराद्धातेन मिथ्यावादेन तथागतमाध्यमिकमत-शून्यवादमुज्जीवयितुमुपस्थापितेन निर्गुणाखण्डब्रह्मैव सत्यं तदितरत् जगत् अज्ञानमज्ञानकार्यं च मिथ्यैव रज्जुसर्प (विवर्त) शुक्तिरजतसहोदर (प्रातिभासिक) मिति वदता वावदूकानां मतं निरस्य आनंदादिगुण-गणविभूषितं नारायण दोषविदूर सर्वतन्त्रं स्वतंत्रं जगज्जन्मादिकर्तारं वेदैकवेद्य ज्ञापयितु साक्षाद्वायुः संशयच्छित् असंशयः भूतले गृहीतकायः दूनदीनसुधियाममृतोपमानकायकोश. दैवचोदनेन प्रादुरभूत् किम् इति तर्कवितर्कव्याकुलविचित्रचित्तव्यापारेषु सत्सु जनेषु।

अनतशयनालयस्य अनंतेश्वरस्य अर्चकः तपःप्रभाभासुरप्रसन्नमुख-मुद्र. बहिरागत्य घण्टारवेण जनानानन्दयन् उद्धृतबाहुराह ।

अहो ! श्रूयतां निलिंपनिभैः भूलेखपतिभि यदद्य अस्मिन् मंदिरे श्रीमदनंतशयनश्रीकांतसेवासमर्पितसर्वस्वौ तीव्रैः पयोव्रतमुखैर्व्रता-ग्र्यै. विरक्तिभक्तिसुपूर्णे नितात सुशोधितगात्रयण्टी श्रीमद्भागवत-भारतादिपुराणकथाप्रवचनश्रवणपवित्रितांतरांगौ श्रीमंतौ वेदवती-मध्यगेहभट्टदम्पती श्रीहरिप्रसादोदर्कं महामहिमभाजन पुत्ररत्नं द्वात्रिंश-ल्लुक्षणभासुर लसितगात्रं सुरसुन्दरीसेव्यमानपरिसरं अलभेतां सतां मुदे। निरौपधा ननु हरिसेवा मुक्तिपथप्रकाशिनी। अचिरादेव तपस्विनां सुहृदां मनोरथद्रुः फलिष्यति। इति

नद्यः सुभगावगाहाः वातः प्रवाति सुखस्पर्शो मंदम् ।
अग्निः प्रज्वलति दक्षिणार्चिः संत-प्रसन्नचित्ताः सर्वत्र ॥ ८ ॥

## प्रथमप्रवेशः

(तत. प्रविशति वेदवती मध्यगेहपत्नी ससुता)

**वेदवतीः**—अयि बालक तूष्णी स्वपिहि। ज्येष्ठेय ते स्वसा दोलासेवया गायती त्वामुपलालयति। सद्य एव नेदिष्ठे गृहे किंचित्कर्म-

सहकारिणीभूयाऽचिरादेव प्रत्यागमिष्यामि। (इति समाश्वास्य निर्गता माता)।

(परकार्यव्यापृता मातानाचिरादत्र समागता)

**बालकः**—अंब अंब नाऽहं स्थातुमीहे विना त्वया। आगच्छ आगच्छ। इति भृशं दीर्घमुच्चैराक्रन्दन् न विरराम स्वस्रा योजितैरप्युपायनिकायैः।

**स्वसाः**—अयि भ्रातः आनेष्यामि तव मातरम्। किंचित्तूष्णीमास्स्व। मारोदीः। किं बुभुक्षितः पिपासितः। किं कामयसे ब्रूहि। दास्यामि तवाभीप्सितम्। (तथापि न विरराम बालकः रोदनात्)

परं भूरि निर्विण्णा सा बाला मातृमार्गं प्रतीक्षमाणा परमनागतां वीक्ष्य किंकर्त्तव्यविमूढा सांत्वनोपायावसाय चिंतयंती तत्रैव पृथुभाण्डोदरे गवा ग्रासाय निक्षिप्त प्रपक्व कुलित्थकुल शिशवे भक्षयितु प्रददौ। निकटनिक्षिप्तशीतलपानीयं मार्दघटादवतार्य पातुं दत्तवती। अत्रांतरे माता च समागता भृशं विभ्रांता किं करिष्यति बालक इति विचिंतयंती।

**माता**—शिशुं भुक्तकुलित्थकुलं पीतशीतलपाथसमवलोक्य विह्वलचित्ता आह—अयि निर्दये बाले, किमेवं द्रुह्यसि बालकाय। पशुभक्ष्यं कुलित्थकुल कथंकारमयं स्तनंधयो बालः सोढा। उदरं ध्मातीव। किं कार्यं मन्दभाग्याऽहं परकार्यप्रसक्ता शिशुक्षेमं नाऽवेक्षितवती। [इति आत्मानं भर्त्सितवती नितांतं रुदंती अतिष्ठत्।]

**बालकः**—अंब बुभुक्षा मां पीडयति। किंचिदभ्यवहर्तुं भक्ष्यमाहर। पश्य मम कुक्षिं। निदाघनिर्झर इव स्यातः वर्तते।

तदवलोक्य वेदवती चकितचकिता कुलित्थकुलं भस्मसाज्जातं पीतं च शीतलोदकं विकारापर्यवसायीति निध्याय अचिंत्योऽयं दैवविपाकः इति श्रीहरिलीला दुरवगाहिनीति तुष्टाव। शिशवे दृष्टिदोषं पर्यहार्षीत् गोपुच्छवीजनेन गोमयलेपनेन च। अगायच्च

यो लीलयाऽपालयदच्युतो हरिः ।
भीमं मुदा मध्यमपांडवं पुरा ॥
हालाहलात्तिग्मकृपीटयोनेः ।
मुहुः प्रदत्तात्कुरुभिर्नृशंसैः ॥९॥

सोऽयं धरादेवगुरुप्रसत्त्या तुष्टः कृपालुर्वररौप्यपीठ-
प्रभुर्वरोऽनंतहरिः शिशुं मे ररक्ष दिष्ट्या विपदां प्रपातात् ॥१०॥

हे कृष्ण हे यादव गोपबाल रक्षानिधिर्मे शरणं सदा स्याः ।
यत्पादपद्मारुणरेणुधूताः सिद्धिं ययुर्मुक्तसमस्तसंगाः ॥११॥

## द्वितीयः प्रवेशः

## गृहेऽध्यापनम्

[ततः प्रविशति मध्यगेहभट्टः बालकेन पुत्रेण सह]

मध्यगेहभट्ट.—वत्स पठ साधु । सर्वदा क्रीडापटुर्बहिरेव धावसि । असकृदावर्तय । पुराऽधीतं भृशं चिंतय । चित्ते धारय ।

बालकः—तात । एकदा पठितं किमिति चर्वितव्यम् । अलमेकपाठेन । 'सर्वमधीत' मनसि धार्यते । परीक्षस्व मां यदि शंकसे ।

वत्सस्य धीरवचनं श्रुत्वा प्रत्युत्पन्नबुद्धिरयं मम सुत. वटुः पटुप्रतिवचन. इति मनसि अमदमानंदमन्वभूत् ।

तातः—नूनं शिशुरसौ प्रतिभाबुधि. जगद्रक्षकश्रीहरिरक्षाऽक्षयपात्र । एकदाऽय मम पुत्र. जगद्विख्यात शिवनामान कथकं निरुत्तरीचकार परिषदि सिद्धातविरोधमुद्घाटयन् तदनूदितकथाकलापे । स्वय शिशुरपि अनधीतशास्त्रोऽपि तद्विवरणपूर्वक विरोधं पर्यहार्षीत् विबुधमनस्तोषाय । अन्यदा कथाप्रसगे लिकुचपदार्थमनुक्त्वा कथयंतं विज्ञातभारतपुराणरहस्यं मामपि तत्पदार्थव्युत्पालनेन चकितचकितमकरोत् । नूनं न मानुषसुलभप्रज्ञोऽयं शैशव एव गोपुच्छमालब्य वनांतरं गत्वा श्रीकाननगं

हरिं प्रणम्य यदृच्छया निवृत्तोऽयं न जातु मम पुत्रः किं तु साक्षात्सर्वज्ञो वायुरेव स्याद्धरिव्याप्ति साक्षादनुसंदधान.। कदाचित् वृषविक्रयिणे कानिचित् क्रीडानकानि तिन्त्रिणीबीजानि दत्वा मां तन्निर्वधान्मोचितवान्। धनिकः स वृषविक्रयी शिशुदत्तवीजानि सबहुमानं स्वीकृत्यानृण्यमभ्युपागच्छन्मे। अर्भकस्यास्य वासुदेवस्यामानुषा लीला स्मारं स्मारं अघटितघटनापटुरयं निलिपकुलललामभूतः श्रीमदनतेश्वरकारुण्यनिधानं जगत्कल्याणनिदानं देवताशिखामणिरयं शिशुरिति निश्चिनोमि। अनूनानुग्रहोऽयं भगवतोऽनंतेश्वरस्य यदयं मम पुत्र॰ वायुरिव धीरसत्वः बृहस्पतिरिव विदिताशेषवेद्य. समधिगतसर्वशास्त्रसार॰। निमित्तमात्रमध्ययनाध्यापनधाटी लोकोत्तरप्रज्ञानां विभूतिपुरुषाणाम्।

समुचितग्रहयोगगुणान्विते शुभमुहूर्ते मध्यगेहभट्टः पञ्चमे वयसि स्थितं पुत्रं वासुदेवं कुशलीकृतशीर्षकं यथाविधि वेदाध्ययनाधिकारसंपादकोपनयनसंस्कारवंतं अकरोत्।

उपनयनानंतरं वेदविद्याः सर्वा. विग्रहवत्यः समागत्याऽऽत्मानं क्षमापयामासुर्ययाचिरे च परमानुग्रहं स्वस्योपास्यत्वापराधनिर्वापणोपायं।

## (ततः प्रविशति गुरुः सशिष्यः)

उपाध्यायः—(कदाचिदन्यमनस्विन बालक वासुदेवं निर्भत्सयन्नाह) हे बालक शिक्षितं किमिति मुहुर्न पठसि विहार एव वेलां क्षिपसि।

वासुदेवः—गुरो, एकदा पठित दृढ चेतसि धार्यते। गुणनिका न मह्यं रोचते।

गुरुः—तर्हि ह्यः उपदिष्टां नारायणोपनिषदं ऐतरेयोपनिषदं चानूद्य विवृणुह्यर्थं यदि धारणापटुर्भवान्।

सद्य एव स प्रत्यग्रोपनीतो वासुदेवः स्वरूपप्रज्ञया श्रुतान् अश्रुतानपि अनंतवेदान् निश्वसितमिव न्यगीगिरत्। उपाध्यायायैवाविदतं

निर्वाणकारणं श्रुतिरहस्यमवोचच्च ।

गुरुः—धन्योऽहमद्य मम मोक्षमार्गः प्रदर्शितोऽनेन बालवटुना वासुदेवेन । नूनमयं सर्वज्ञो वायुरेवावतीर्णः ज्ञानविज्ञानोपदेशाय सतामिति मन्ये ।

[निष्क्रांताः गुरुः शिष्याश्च]

## तृतीयः प्रवेशः

## मुनिवृंदाश्रमः

बालक. वासुदेवः—न कोऽपि अत्र दृश्यते । साधयामस्तावत् मुनिवृंदाश्रमं श्रीमदच्युतप्रेक्षभिक्षुभिरधिष्ठितं । भगवदाज्ञया सत्सिद्धांतस्य प्रवचने प्रतिष्ठापने च दत्तदीक्षः न प्रभवति निर्वोढुं क्लृप्तं कर्म विनाऽकिंचननिषेवण सन्यासाश्रमम् । अहो दृश्यतेऽत्र उपविष्टः कुशाग्रमतिर्ध्याननिरतो भिक्षुप्रवेकः । तेन संभाषमाण आत्मानं पावयिष्यामि । [इति उपसर्पति]

अच्युतप्रेक्ष.—अहो कोऽय स्वभावसुदरः सुरवरप्रतिभाप्रतिबिंबितप्रसन्नमुखमुद्रः । अहो वैयासकिर्वीतराग शुकमुनिः गोदोहनमात्रस्थितिगति. अस्माननुग्रहीतुं दैवादागतः । वायुरेवाऽय स्यात् श्रीरामदूत. कलियुगे दु शापग्रहगृहीतचित्तान् श्रीजानकीपैशुन्यशून्यसत्वान् अयोध्यावासिनः निंदकान् दुर्मतप्रसंजकान् निगृहीतु अवतीर्ण । अन्यथा कथमलौकिकतेजोनिधान अग्नि-सूर्य-चद्र-तारकादिभास्वरमह एकत्र सगृहीतमिव प्रज्वलत्कांतिमत्स्यात् । नून मध्यमपाण्डवेन भीमेन विपूदितोर्वरित मणिमदादिक्रोधवशासुरजातं जगद्धिताय निर्मूलयितु अवतीर्ण. किम् । आ । स्मृत । रूप्यपीठालयस्थितमिदिरावरं भक्त्या निषेवमाणस्य सुनत्ववुभुत्सो. मम भविष्यत शिष्यवराद्धि विद्धि मामिति प्राकृतपुरुषेणाविष्टेन तेनैवाद्य श्रीमदनतेश्वरेण निवेदितं । स एव नूनं मम मोक्षमार्गोपदेशकः सुतत्ववेत्ता महानुभावः स्यादयं पटुधिषणः

बालः । भवतु नाम । अस्य अलौकिकशिशोरभिजनं वास्तव्यं अत्रागमनप्रयोजनं च ज्ञातुकामाः किंचिदनेन शब्दविनिमयं कुर्मः (इति विचार्य आहुः ।)

अयि बालक, कतमः प्रदेशः अनुगृहीतः भवतः सुगृहीतनाम्नो जनुषा । पैतृको वृत्तांतः कीदृशः । अनूनविभवस्य ते किमवशिष्टमपेक्ष्यते येन भवतः आगमनमत्र सफलं संपद्येतेति ।

**वासुदेवः**— साधो ! अत्रैव निकटे पाजकक्षेत्रे कृतवास्तव्यस्य पूज्यस्य तप पचेलिमापूतकायस्य मध्यगेहभट्टनाम्नः आर्यस्य विप्रवरस्य तनयोऽहं वासुदेवनामा कृतोपनयनः समधिगतब्रह्मोपदेशः विरक्त्या श्रीकृष्णपरमात्मनि निबद्धसौहृदः भवतां सुकोमलकरकमलकोरकात् विगतमलीमसं गुणाकरं श्रीहरि सिषेविपुरसंगनिधानं तुरीयाश्रमं स्वीकर्तुं देवाज्ञया संप्राप्तोऽहं । कृतार्थीकुर्वंतु मां महानुभावाः [इति धीरगंभीरया मेघनिःस्वनसदृक्षया वाचा निगदन्नतिष्ठत् ।]

**अच्युतप्रेक्षः**—[पीयूषपीनपानमिव सांद्राऽनंदसंदोहनिष्यंदिफुटमस्खलदक्षरं स्फीताकूतमतर्कितं वचनमाकर्ण्य] दशवर्षदेशीयोऽयं वटु. सन्यासमभिलपति इति नूनं लोकवार्तामतिक्रामति । अथवा देवांशोऽय स्याद्देवा एव युगपत्सकलाश्रमधर्मकर्मणि सुपर्याप्ता । कृत्स्नभावात्तु गृहिणोपसंहार. इति सूत्रे बादरायणाचार्यैः निगदितं ।

अथाप्यच्युतप्रज्ञः विनीतं दरहसितमुग्धवदनारविंदेन हृदि निगूढमध्यात्मविज्ञान विकिरंतमिव विसृमरनायनतेज शलाकयाऽन्योन्यविद्वेषीण्यपि भूतानि निर्वैरीकर्तुमुद्यन्तमिव तमीक्षमाणः शनैरुपाहूय मंदमाह मृदुवचनं ।

अंग नेदं सुकोमलं कुसुमसमसुकुमारमंगं कठोरनियमपरीतयतिचर्याक्रूपीटयोनयेऽगसात्कर्तुमर्हसि । त्वमद्य दशवर्षदेशीयः पितृसेवामाचिन्वानः कुलीनकन्यामनुरूपां निर्वोढा अनवरतकल्याणपरंपरामनुभवन् पुत्रपौत्रैः पितृपितामहादीन् पंचमहायज्ञैः सतर्पयन् जोपमास्स्व सकलत्रपुत्रैः । अलमनेन

नृशंससंकल्पेन। पितरौ तव संक्रुद्धौ त्वां अस्मांश्चाक्रुश्याधिक्षिपेताम्। यथाऽऽगतं गृहान् प्रति निवर्तस्व। साधय। अथ कृतमतिर्यतिधर्मविभवे न चलसि मनागपि पथो विनिश्चितात् तर्हि तातादंवायाश्चानुज्ञामवाप्नुहि।

पितृमनोनुनयनपटुर्वासुदेवः ॐ तथेति आभाष्याऽकुटिलयुक्त्या श्रुतिस्मृतिसंस्कृतसत्वया तावावेद्य पुनरुपाजगाम। आह च

**वासुदेवः**—साधो। अनुगृहाण मां प्रणवोपदेशेन पितृप्रणयवलाधिरूढम्।

ततः श्रीअच्युतप्रज्ञ. शिशोरनिर्दशस्याऽऽखणाश्मनिभं दृढस्वभावं मतिवैभवं रुद्रेद्रादिभिरपि अशक्यप्रसरं निस्तुलस्तवनिधानं निरीक्ष्य हर्षाश्चेति अद्यैव स्वप्नसूचितमवितथ मभूदिति मनसाऽनुमोद्य तं वालकं तुरीयाश्रमेऽभिषिच्य प्रणवमन्त्रोपदेशं व्यतनोत् लोकाचारनटनेन।

**अच्युतप्रेक्षः**—नूनं चतुराननपदप्रेप्सुरसौ वालः प्रणवमंत्राधिष्ठाता सन्यासिन मन्त्रोपदेशेन सुकृतमतीनातनोति इति विभावयामि। अहो धन्योऽहमद्य सफलोऽस्मन्मनोरथद्रुमः यन्मोक्षपदप्रदाता साक्षाद्वायुरेव यदृच्छया मम निकटमागतः शिष्यव्याजेन माम नुग्रहीतुम्। शाश्वतानंदसंदाय्यसौ कृतकशिष्यः आनदतीर्थेति अन्वर्थनामधेयेन जगति प्रथितो भूयात्।

**आनंदतीर्थः**—गुरुपादाः। तत्वशास्त्रप्रवचनेन मामनुगृह्णंतु। यतः गुरूपदेशो वलवानिति साधुजनो जानीयात्।

**अच्युतप्रेक्षः**—अहो लोकविडंबनमेवेयं गुरुशिष्यभावधाटी। पश्यत। इष्टसिद्धिरित्यादि अद्वैतग्रंथजातं प्रवक्तुमुपचक्रमे। परं नैकामपि पंक्ति विशदं विवरितुमशक्नुवम्। बालयतिः आनंदतीर्थ. प्रत्यक्षरं प्रतिपदमतर्कितदोषानुद्धार्य निराचकार। तत्रत्याद्वैतप्रक्रियाया हेयत्वं व्यवस्थाप्य विष्णुसर्वोत्तमत्वं तारतम्यघटितपारमार्थिकभेदवाद समर्थयांचकाराकुटिलगतिभिर्निरवकाशप्रमाणैः प्रत्यक्षानुमानागमाद्यै.। गुरवे च

मह्यं न्यवेदयन्मोक्षमार्गं विपर्यस्तंगुरुशिष्यभावविधया ।

**आनंदतीर्थः**—स्वामिन्, अनुजानीहि मां जैत्रयात्रया जगति कालबलेन विलीनं तत्ववादगभस्तिमंतमज्ञानतिमिरजवनिकापसरणेन प्रकटयितुं तत्र तत्र साधुजनेभ्य. असाधुनिबंधांधतमसाऽवगुंठितनयनपटलपाटवेभ्यः मंक्षु मोक्षपदमभिलपद्भ्य· ।

**अच्युतप्रेक्षः**—बाढम् । साधु संकल्पितं । किमन्यदपेक्ष्यते गुरुणा शिष्यात्परहितरतात् ज्ञानविज्ञानोपदेशादृते । पुराद्वापरयुगे द्रौपदीकरकमलपरिष्कृतं भिक्षान्नमूपभुज्य पवित्रीकृतगात्रसंघातोऽहमद्य हंत तत्सुकृतपरिपाकेन सांदीपनिरिव श्रीकृष्णपरमात्मानं विदितवेद्यमगुरुं साक्षात्कृतपरमार्थतत्वं शिष्यमेनं संप्राप्तोऽस्मि । किमन्यदवशिष्टं कार्यमस्मिन् जन्मनि शिष्यादधिगतसारसर्वस्वस्य मम परमहंसकुलेऽवतीर्णस्य । भोः आनंदतीर्थं नूनं वायुरेव भवानवतीर्णं साधुजनसंप्रीत्यै । गरुडशेषरुद्रेभ्योऽपि भक्तिज्ञानविरक्तिषु गरीयसांऽऽजनेयवपुषा श्रीदाशरथिरामचंद्रस्य निरौपधा सेवा सर्वांगसंपन्ना संसाधिता । अतीतयुगे पुनर्भगवतो द्वारकानाथस्य यादवकुलललामस्य श्रीकृष्णस्य कैंकर्यमनुष्ठितं जरासंधादिदुर्योधनादिदुष्टकुलनिग्रहेण । अस्मिन्नपि युगे कलिप्रभावविपरीतमतिप्रचययायावतीर्णानां बौद्धार्हतमायावादिनां मणिमदादिदैत्यवंशजानां दुर्धरोपहतिं तिरस्कृत्य वैदिकवैष्णवसिद्धातं प्रतिष्ठापयितु धर्मविज्ञानवैराग्यपरमैश्वर्यशाली भवानेव पर्याप्तवलः । श्रीहयैकशरणस्य ते शुभाः जैत्रपथाः विपुलां यशस्ततिमाकलयंतु ।

ईक्ष्वाकुवंशद्युमणिप्रकाशात् विश्वं विभातं कपिवर्यतो द्राक् ।
व्यासप्रसादाद्भविता जगत्यां विज्ञानदोऽयं चतुरननांशः ॥१२॥

विज्ञानवार्धिर्ननु विश्ववेत्ता अज्ञानगर्तात्सुजनं विमोक्तुं ।
को नु क्षमेत त्वदृते जगत्यां युज्यस्व यात्राधृतजैत्रकर्मा ॥
बहवः शिष्याः षट्शास्त्रपाठे प्रवचने च रताः गुरुवरे- ।
ण्यमानंदतीर्थमुपसंपन्नाः यात्रासन्नाहमुपकल्पयांबभूवुः ॥१३॥

## चतुर्थः प्रवेशः

### जैत्रयात्रा

(शिष्यपरिवारेण सहिताः श्रीमदाचार्याः)

**शिष्यः**—अरे, चपल तिष्ठ तिष्ठ मम पुस्तकनिचयमपहृत्य कुत्र धावसि। पलायसे।

**अन्यः**—सौम्य, आचार्याः प्रस्थिताः। किमेवं विलंबसे। किमेभिः पुस्तकैः। तत्रैव तिष्ठंतु तानि। अस्माक तु भोजनादिकं विलुप्येत यदि वय न गुरुसन्निधौ सन्नद्धाः भवेम।

**अपरः**—आचार्या इदानी ब्रह्मसूत्राणि पाठयंति तत्तद्वादानां बहुमुखचर्चया। अत्रावहितैरस्माभिर्भवितव्यम्। स्वीयसामग्रीसंभारान् आहृत्य दशशतशिष्याः धावंतः आचार्यमुपाजग्मुस्तन्निर्देशकारिण.।

एवं पाठप्रवचनेन गूढप्रमेयविवरणेन च शिष्याननुगृह्ण्ंतः संचारक्रमेण पावनगंगातरङ्गिणीकूलमागताः श्रीमदाचार्याः।

**श्रीमदाचार्याः**—अयि छात्राः आगच्छतु सर्वशः। इयं हि

गंगा मंगलभंगसंग सुभगालिगन्मरुत्कम्पिता।
मूर्ध्न्या पातरयेण पर्वतपतेः स्पर्धावशेन स्वरुं॥
धिक्कृत्योद्धतरंहसा शिखरिषु प्राप्ता तटीगह्वरे।
यांती धीरगभीरसिंहनिनदैः प्रोत्सर्पंती वोत्कटा॥१४॥

सुरगुरुवरगीतैः श्लाघिता शश्वदुद्य-।
त्सरसमृदुरवेणोद्रिक्तभक्त्या मुनींद्रैः॥
नरहरि पदघाताद् भिन्नगात्रा पवित्रा।
मुनिवृजिनविहन्त्री वंदनीया जनौघैः॥१५॥

अवसरत तटाग्रं गंतुमाराद्विशालाम्।
द्रवत पतत यामस्तूर्णमस्तं रवियार्न्॥
श्रुतिपतिमथ भक्त्या संस्तुवंतः सुवाक्यैः।
करिवरदमनूनैः मगलं मंगलानाम्॥१६॥

शिष्याः—अयि गुरुपादाः। न वयं पारयामः पदा प्रचलितुं विस्फूर्जत्स्फुरदुदग्रादभ्ररभसा प्रपातमुपसर्पत्पाथस्तटीपुटे नक्रक्रकचचक्रांकिते। भवंत एव पूज्याः शरणं नः विशरणानां।

गुरुः— हंत तर्हि अस्माननुसरंतु भयविदूराः अस्मदंगुलीतरीधुरिपातितगात्रभराः। क्षिप्रमेवापरं पारमुपसर्पामः। (यथाऽऽदेशमाचरंति शिष्याः।)

शिष्याः—गुरवो नः शरणं।

इति भक्तिभराक्रांतहृदयेन गुरुमभिवंदमाना पृथुरभसा घोरतरनिनादेनापतंत्यां गंगातरंगिण्यामवगाहमानाः सपदि भृशं निमज्जंतः विरजानदीस्नानेन त्यक्तलिंगदेहाः ज्ञानिन इव सत्वरजस्तमोविदूरे वैकुंठे मोक्षसुखमिव विशालाक्षेत्रे श्रीमन्नारायणसाक्षात्कारेण नैजानंदमनुभवामः। इत्युच्चैरुद्घुष्य यावन्नात्मानं न्यमज्जयन्निमीलिताक्षाः गाढगभीरपृथुकल्लोलकवलितकलेवरे जह्नुतनयाजवोद्घप्रवाहे आत्मानमर्पितवतः तावत् क्षणार्धे एवापाराकूपारपारमासाद्याग्रत एव तस्थिवांसमात्मरक्षकं मोक्षपदप्रदातारमानंदनिधिमानंदतीर्थमुनिप्रवेकमपश्यन् चकितहृदयाः संमोहावलीढचैतन्याः। निर्मृवततामसमलीमसाश्च समुच्छ्रितैर्बाहुभिरेकरवेणोपश्लोकयांबभूवुर्गुरुवरेण्यमगुरुमानंदमुनिम्।

यो जानकीं परहृतामनिवार्यतेजाः।
संतीर्य नीरधिमवाप्य समाऽऽदसीत्ताम्॥
हृद्येन रामवचसा पुनराप्य लंकां।
रामेण भूरिमहसा कपिसैन्यनेता॥१७॥

सीतामवाप्य हि जगौ भगवान् हनूमान्।
सीतापतिं ननु भवान् कपिवर्य एव॥
यो निस्तरिः पदतरिर्जलधिं न्यतारीत्।
संसारवार्धिमिव संभृतभूरिभागः॥१८॥

नूनं पुरा कुरुपतिं विनिहत्य दैत्यं।
दुर्योधनं यदुपतेः कृपया समंतात्॥
साम्राज्यमाप वरमध्यमपाण्डुपुत्रः।
तद्वद्भवान् जितरिपुर्ननु मोक्षराज्ये॥१९॥

ततः स मुनिवरः सरसीरुहकिंजल्कविनिःसृतपरागपरिष्वंगपरिमलितगात्रं वारिवाहसंपर्कहिमशीकरपरीतं आत्मन्यात्मानमिव मरुत्पुत्रमासेवमानः हरितशाद्वलपरिसरे विहरतो मृगयूथानाप्यायमानावलोकनैः संभावयन् मध्येमार्गं मृगयाविहारपटुनिस्त्रिंशकदुतीक्ष्णशक्तितोमरकरदीकृतवन्यमृगविहंगमान् लुब्धकवरान् अनुनयेन विनिवार्य नृशंसात्कर्मणः पुरतः मंदमंदमाम्रेडिताम्नायवर्गानंतेवासिनो मंत्रोपदेशेन गृहीतवेदातकृताताम् कुर्वाणः हिमानीपरिवृतसितशिखरिणं हिमाचलमाससाद । दर्शनीयसुभगाकृतिं मौनिवरनिषेवितकुहर-कुटीरं विमलोदयं पर्वताधिराजं भगवानानंदतीर्थः पश्यन् साक्षान्नारायणमेव नीलवलाहककमनीयकाय मुनिजनसेव्यं प्रत्यगमभिव्यक्तममन्यत । तत्र

पार्श्वद्रुमाः किलकिलैर्वयसां श्रितानां ।
संभावयंति गुरुमदीनमदृष्टपूर्वम् ।।
पुष्पैर्लताः परिमलैर्ननु भक्तिशुभ्रैः ।
देवांगना इव हरिं सुरलोकपूज्यं ।।२०।।

ततस्ततः सशिष्यः सुरपरिवृढः मध्वमुनिः प्रस्तरात्प्रस्तरमारोहन् विशालाक्षेत्रे श्रीवेदव्यासनिवासमासेदिवान् परितः परिषेव्यमाणं निसर्गशात्रवमपास्याहमहमिकया स्वैरमन्योन्यप्रीतिभाग्भिः गरुडपन्नगैः रहिमूषकैः तरक्षु-हरिणैः कण्ठीरव-करिघटाभिः शार्दूल-गृष्टिभिः विस्रब्धचेतसाऽवधृतहरिगुरुतेजसा-चतुर्मुखमुखाः सुरवराः नानावृक्षपक्षिकायनिकायाऽऽत्तविग्रहाः समर्चंति स्म पुरुषव्याघ्रं देवदेवोत्तममुच्चैरनिशं शुकपिककूजितेन श्रुतिप्रपाठेनेव । परितः शिष्यवृंदेन समेधमानमाजानुबाहुं द्वात्रिंशल्लक्षणलक्षितसुभगगभीरगात्रमागच्छंत सलक्ष्य वेदपतिः पाराशर्यः प्रसन्नमुखमुद्रया दयार्द्रहृद्रसमुन्निद्रयन् तमभिनंदन् स्वनिकटे एवोपावेशयत्तमुदग्रविष्टरे गुर्वाज्ञया मुनिभिरुपकल्पिते । जगौ च समं मध्वराज गुरुमभिनंदन्नानंदमुनिः हर्षनिर्भरैः करतलास्फालनतालेन नटनपटुविलासभावैरुन्निद्रयन्ननिद्रगुणमुच्चैः स्वरेणारविदूरं गुणगणाढ्यं नारायणापरावतारं वेदव्यासं सस्तुवन् मन्त्रवर्णवर्णकैरनितरसाधारणैः ।

पाराशराखिल गुरो श्रुतिगेयरूप ।
ब्रह्मादिभिः सुरवरैरभिवंद्यपाद ।।

लक्ष्म्या नितांतमधिसेवितपादपद्म ।
पाहि प्रभो शिशुममुं गुरुभक्तिनम्रम् ॥२१॥

सृष्टिः स्थिति. संहृतिश्च यत्कटाक्षैकसंसृता ।
सोऽयं नारायणः साक्षाज्ज्ञानकार्यधुरंधरः ॥२२॥

रामकृष्णादिरूपेषु बलकार्येण सज्जनान् ।
समुद्धार निर्वास्यन् दुष्टान् कलिमुखान् प्रभुः ॥२३॥

हिरण्याक्षमुखान् दैत्यान् निगृह्य तरसा युधि ।
धरामुज्जीवयन् रक्षामक्षीणामकरोत्सताम् ॥२४॥

प्रह्लादमाव, गुरुभक्तमथोग्रजातिं ।
निघ्नन् खरैः करजहेतिभिरस्य तातं ॥
भक्त्यैव तुष्यति हरिः प्रवणत्वमेव ।
कार्यं हराविति वरैर्ननु शिक्षितं नः ॥२५॥

इत्थं संवर्णितो व्यासः दरहासशुभाननः ।
आजिज्ञपज्ज्ञानकार्ये शिष्यं वायुं यथा हरिः ॥२६॥

पाराशर्यः—

अग याहि बहुलाः सुजनास्ते वेदमार्गपरिमार्गणदूनाः ।
दुर्बलाश्च परदैवविहीनास्तत्कृते वद सुतत्वमुदार ॥२७॥

वेदसूत्रस्मृति मूलपुराणाद्येतिहासवरवंधविशेषान् ।
युक्तिसूक्तिभिरनन्यशक्तिभिः वर्णयोगनिजभावशुद्धये ॥२८॥

श्रीवेदव्यासाज्ञा मूर्ध्ना वहन् अनुमानतीर्थ. श्रीमध्व. प्राघट्टित-वैहायसवरकिन्नरगीतनिनदितात् पशुपक्षिकायैः ऋपिभिर्जोघुष्यमाण-वायुनन्दनयशोविसरात् उत्तुगतुगशिखरिशेखरतटात् मंद मद पदा चल-न्ननुत्साहजड' गुरुविरहतापमसहमान कुमुदगुच्छ इव सूररश्मिभिः ग्लायन्म्लायमानः साकं शिष्यगणेन गौरवेणानुल्लघ्यविधिसदृक्षं विभु-वचनं मनसा सभाजयन् मानवसुलभदोषदूषित काश्यपीतलतटमाज-गाम । प्रावर्तत च ग्रंथनिर्माणाय ।

(निष्क्रांतः सशिष्यः मध्वराजः)

## चतुर्थः प्रवेशः

### मागधा घोषयंति

श्रृणुध्वं माधवाध्वनीनाः साधुजनाः वैतालिकघोषमिमम्। श्रीमन्मध्वमुनिः कदध्वविध्वंसनचण त्रिपथगातटिनीतटमध्यासीनः श्रीबदरीक्षेत्रे श्रीवेदव्यासप्रसादासादितादभ्रतत्वविद्यानवद्यपद्यावली- विभ्राजमान. तदनुज्ञयाऽनुपदमेव वदरीक्षेत्र एव विरचय्य प्रकटीचकार ब्रह्मसूत्रगूढार्थगर्भितमशेपविशेपभूषितमनुपमं भाष्यं भाष्यलक्षणल- क्षितं। तत्र तत्र च सभासु कुतूहलनतेभ्यो विद्वद्भ्यः प्राचीनभाष्यकार स्खलितान्युद्घाटयन्नवीनां श्रुतिस्मृतिपुराणेतिहासवचनपरिबृंहितां बादरायणभणितिरीतिं विवृण्वन् विपक्षपक्षमुत्क्षिपन् स्वसिद्धांतमुद- घोषयत् साख्यार्हतसौ गततार्किकशाक्तशैवादिवादान्निरस्यन्ननूनमतिर्म रुदंशः श्रीमदानदतीर्थोऽन्वर्थनामाजगद्गुरु । क्वचित् कर्मतन्त्रप्रवीणान् मायावादिन. प्राचीनदुर्विदग्धदुराराध्यवादाभासविपर्यस्तधिषणा- नात्मान धिषणंमन्यान् श्रुतिस्मृत्युपोद्बलितयुक्तिसंरैर्निरपवादप्रसरैः निरुत्तरीचकार नवीनस्तर्कतन्त्रकुशलः वैदिकवैष्णवसिद्धांतप्रतिष्ठा- पनाचार्यः श्रीमध्वाचार्य. । उत्तरभारतयात्रायां न्यायवैशेषिकाशेषवाद विशेषभूषितमनीषान् तार्किकमतल्लजान् लीलया व्यालोलयताऽनेन आत्मसात्कृता जैत्रपत्रिका आघोषयंत इव स्वविशालललाट- पट्टिकायां द्रुहिणलिखितरेखाव्याजेन तेषां पराभवं। प्राग्भवीयदुरित- परिपाकमुपभुञ्जाना न कदापि सदध्वगामिना विध्वस्तदुर्मतध्वांतेन मध्वमुनिभास्करेण साकं वादाध्वरो बुद्धावद्धा विधिदुर्विलासेन संधार्य इति मंक्षु व्याहरंत. भयविह्वलाः कादिशीका प्रद्रुवंति स्म दिक्षु विदिक्षु दिनमणिकिरणाधिगमे तरलतारा इव प्रत्युषसि । प्रत्युत दुस्तरमिव दुखसमुद्र संतितीर्षवो विरक्ता इव विगलिताहं- ममतागलग्राहाः शिष्यस्तेहमिति दूरीकृतबुद्धिबलावलेपा. विज्ञानवारि- धिमाधिव्याधिमूलजालकक्पोटयोनिमुनिवृंदवंदनीयं जांबूनदकमनीय- पदं शरण्यं जगद्गुरुं असेवंताभयमभीप्सवः प्रणेमुश्च निटिलतटसंघ- ट्टितगुरुपादपदपीठपट्टिका. प्रावरणनिबद्धकटिबंधाः । अपरे पुनः मायावादिनः वादवितण्डाजल्पकथासु प्राप्ताभिषंगभंगाः परिम्लान-

मुखरोचिष परीभावशोचिष्केशदंदह्यमानातरंगा. निगूढयुद्धमालोचयांचक्रुमिथ समंत्र्य रहःसदसि। संघीभूय श्रीमध्वाचार्याणा मध्येमार्गं यात्रापथं निरोद्धुमाढौकत निरपत्रपम्। परं ऋजुः पन्था न कदापि कुटिलगतिमालम्बते। न हि साधुषु जैह्मचं मूर्च्छति। स्वयमेव विशीर्यंते च आखणाश्मनि प्रघट्टितलोष्टपिण्ड इव। द्रुतमेते मायिनः गलितसत्वाः स्वयूथ्यैरपि विवेकपटुभिः निम्नव्यवसायैर्दूरीकृता. तिग्मरश्मिविस्रंसितहिमानीसंहतिरिव परितः समंतादद्दश्यता नीताः। तथाऽपि एकः कुयोगी उच्चैरुरस्ताडयन् अकाले आसन्नजगदण्डभाण्डभंग इव वेतण्डताण्डवमटाटन् विरौति निरौपधं निमीलिताक्ष.। वदति च निश्वसन् सुदीर्घम्—

श्रृण्वंतु संगतधिया सुहृदः स्वयूथ्याः।
यद्ब्रह्म निर्गुणमिति प्रथितं तदद्य॥
विज्ञानिना प्रबलयुक्तिश्रुतिप्रमाणैः।
मध्वेन खण्डितमहो किमिहाद्य कार्यम्॥२९॥

तद्ग्रंथसंचयमथाहरत ध्रुवं तत्।
संचारलुण्ठनमथाऽप्यचिरात्क्रियेत॥
तच्छिष्यसंघविधृतिः विविधैरुपायैः।
आसादिता यदि वय श्वसिमः सजीवं॥३०॥

दिशि विदिशि चरंतो मध्वशिष्याः प्रवीणाः।
श्रुतिषु निशितमत्या युक्तिवात्या बलेन॥
अहमहमिकया नः पातयंतो विचारे।
जगति विदितभावाः लोकचित्तं हरंति॥३१॥

अस्माकं धृतिबंधमूलविभवाः त्रैविक्रमार्याः पुनः।
षट्शास्त्रप्रचरद्विचित्रमतयः वेदांतविद्याचणाः॥
गोदातीरगशोभनाख्यविबुधः कालिंगदेश्यः प्रधीः।
सर्वेऽस्मत्कुलमौलिनो निपतिताः मध्वाध्वपादाश्रिताः॥३२॥

त्रिविक्रमार्यः सकलत्रपुत्रो मध्वार्यशिष्यः समभूच्चिराय।
ग्रंथानतुल्यानतनोद्विवृण्वन् भाष्यानुभाष्ये पृथु मानसारैः॥३३॥

स शोभनोऽप्यास गुरुप्रियः श्रीमत्पद्मनाभेति जगत्प्रतीतः ।
कालिंगदेश्यो नृहरिर्बभूव हा हंत उत्सन्नबलाः क्व यामः ॥३४॥

इत्युन्मथितसत्वसाराः भृशमाक्रोशत शेपं कोपेन पूरयेदिति आभाणकमनुरुंदधाना अनन्वितगत्याऽऽर्यपथविपरीतया ग्रंथचौर्यादिकं कुकर्म कारयामासु विद्वेषविद्रावितविवेकधीगुणा. । वेदविप्रविध्वंसनेन विष्णुवैष्णवकुलसंहतिः सजाघटीति इति भ्रांत. कंसः हिरण्यकशिपुर्वाऽऽदितेयपरिपंथी निस्त्रिंश कात्करणकठोरमतिः कुकर्मविपाकेनांतेऽनिवर्त्यामधोगतिं प्रापित. इति नूनं करतलामलकायितं पुराणवेदिनां विदुषा । तन्न्यायेन प्रतीपगतय. सर्वे कण्टकप्रायाः दुर्वादिनः विशरणाः विपिनविरावेण विषादमषीकषायितचक्षुपः आत्मनो दैवदुर्विलसितमेवाधिक्षिपन्तः सुतरां व्रीडाक्रीडानीडमुपास्पृशन् ।

एवं प्रतीपैरपघृणं प्रपीडितोऽपि न मात्रयापि विकारवैक्लव्यमाप श्रीमध्वदेशिकः । दोग्ध्रे पापं परावर्तते इति न्यायेन जगज्जीवनदे मरुदंशसभूते श्रीमध्वाचार्यनाम्नि पूर्णप्रबोधेऽय.खण्डवदविकार्यनिर्भेद्यगात्रे को नाम मानवो दानवो वा हस्तक्षेपं प्रसर्पितुं प्रभवेत । प्रज्ज्वलज्जातवेदसो ज्वालाभिर्निष्टप्तचामीकरघट्टिकेव प्रस्फुरद्दीप्तिमालावलीढा प्रद्योतते स्माप्रधृष्यतेजस्विता भगवत आनंदतीर्थगुरुप्रवेकस्य ज्ञाननिधेः सज्जनस्तोमसभाजनभाजनस्य विनयावनतकंधरैः धरणीधरैः मणिमौक्तिकनिचितमकुटकुटघट्टितपादपीठस्य काश्यपीदिविपद्भिः संयतेंद्रियैः परिपूतमन्त्रवर्णसंवर्णितमहिम्नः जगति निरंकुशतेजःप्रसरेण समेधमानस्य । जेगीयते च स जगद्गुरुः कलपदसुमधुरसंगीतकैः ब्रह्माण्डखर्परं विनिर्भिद्य बहिर्निर्यज्जाज्वल्यमानविशुद्धयशोराशिः नाकिनिकायै गंधर्वकिन्नराप्सरोनायिकाभिश्च वैहायसवाहनेभ्यः मन्दारकुसुमनिचमभिवर्षद्भि. हर्षनिर्भरैः ।

विध्वस्ताखिलराक्षसः कपिवरो निर्दग्धलंकापुरः ।
वैदेह्याः शमयन्मनः शुभगिरा श्रीरामसंदेशत. ॥
रेजे भूरियशःसृतिः सुमतिभिः संगीयमानाकृतिः ।
को नाम श्रुतिसारविष्णुपदभाक् नाऽऽप्नोति श्रेयः परम् ॥३५॥

कृष्णं यादववंशदीप्रमणिमाराध्य स्वयं पाण्डवः ।
स्वाराज्यं बुभुजे चिरं कुरुकुलं दौर्योधनं वारयन् ॥
विष्णौ दौत्यमथाचरन् वृजिनहा बाभात्यसौ मारुतिः ।
भीमेतिप्रथया चकास गुरुराड् मध्वाभिधो भूतले ॥३६॥

विज्ञानवार्धिर्जनताघदग्धा मध्वाविधूतासुरभाव आर्तान् ।
पुष्णाति दिव्यौषधिपोषणेन मध्वप्रसादः खलु शं तनोति ॥३७॥

विपुलधिषणः प्राज्ञः प्रकृतिमलविदूर. श्रीमध्वनामा मारुतिः द्वारकानौकाभारनिर्वाहसंघाते गोपीचन्दनलोष्ठपुटकुहरे युगपरंपरया निलीनं गोपीचंदनमवाप्य मुमोद ननर्त च सम्मोदभरेण। शृण्वंतु महाभागाः यदुकुलनंदनस्य द्वारकानाथस्याऽत्रागमनवृत्तातम् ।

## पंचमः प्रवेशः

(श्रीमध्वाचार्या सशिष्याः समुद्रतटे निषण्णाः ।)

शिष्यः—वीचीलौल्याद् घर्घरध्वानघूर्णात् यादश्चारैर्वक्रनक्रप्रकीर्णैः ।
दृष्टिक्षेपं यावदाभोगवर्ती झंझावातक्षुब्धरौद्रः समुद्रः ॥३८॥

मध्ये मार्गं घोरभंगप्रपातैः ।
नौका यांती मज्जतीव प्रपूर्णा ॥
धान्यैरत्नैर्वज्रवस्त्रादिभारैः ।
हा ! हा !! नष्ठाः सार्थवाहा गतिः का ॥३९॥

आचार्याः—मा त्वं रोदीः किं तदत्याहितं ते ।
श्रीशो गोपीवल्लभो द्वारकेशः ॥
वादित्राद्यैः सिंधुना संभ्रमेण ।
संसेव्योऽसौ तूर्णमायात्यदृश्यः ॥४०॥

नौकैषा ही संसृतिर्गौणवृत्तिः ।
विष्णुं पूर्णं धत्त आराद्विविच्य ॥

दृष्टश्चेत्स व्यक्तिमायाति भक्त्या ।
पूर्णे तस्मिन् जागृति क्वास्ति भीतिः ।। ४१ ।।

सार्थवाहाधिपतिः श्रेष्ठी समुद्रवेलायां नौका प्रतीक्षमाणः आस्ते मज्जंती नौका निर्वर्ण्य दिग्भ्रान्तः हतभाग्यः कर्कशं चुक्रोश । हा ! हतोऽस्मीति । नौकोन्मज्जनोपायमलभमानः आचार्याणा समाश्वासन निशम्य तानुपेत्य प्रार्थयामास ।

श्रेष्ठीः—(दण्डपातं प्रणिपत्याऽऽह) स्वामिनः करुणार्णवाः । निशामयंतु ममार्तस्याभ्यर्थनाम् । वाणिज्यमर्यादया प्रस्थितस्य मम नौकायन्त्रस्यानर्घद्रव्यप्रपूर्णस्य प्रक्षुब्धाब्धिकल्लोलमालाकवलितस्य धनिकैर्वणिग्वरैरधिष्ठितस्य रक्षणे भवंतो एव पूज्यपादाः प्रभवः । भव्यस्वरूपाणा देवदूतानां पादमूले वराकस्य मम मूर्धा निपतति गुरुगौरवेण । त्रायंतां मामनाथं नाथमानं दयाघनाः ।

आचार्या : वणिग्वर, किमित्याक्रन्दसे पृथग्जन इव मौढ्येन । जगद्रक्षकः श्रीकृष्ण सर्वानवति समबुद्ध्या । मम पितरं द्वारकानाथमत्राऽऽगमिष्यतमाह्वयितुमुद्यता वयमत्रोपस्थिताः । सिंधुनाथोऽपि स्वजामातरं प्रहर्षभरेण दुंदुभिस्पर्धिना कल्लोलनिर्घोषेण क्षीरोदतनयापरिवृढं श्रीकृष्णमामंत्रयितु मुद्युज्यते श्वशुरो वाद्यविजृंभणेन स्वदुहितुर्वल्लभमिव नितांतपरितुष्टः । शफरीतिमिंगिलकर्कशनक्रादिजलजंतवोऽपि औत्सुक्येनेतस्ततः परिसरंतः निसर्गनैस्त्रिंश्यमुज्झित्वा जगन्नियतारमवलोकयितु कुतुकिनः संवृत्ताः । मंगलोदर्केऽस्मिन् महामहे खेदः सर्वथा पदं मा दधातु । दृष्टया प्रसन्नः श्रीहरिः वितरति शुभानानन्यभक्तेभ्यः कल्याणपरंपराऽऽसारगर्भान् ।

श्रेष्ठीः—धन्योऽस्मि । कृतकृत्योऽस्मि । यदि श्रीवल्लभः जगद्रक्षको द्वारकानाथः श्रीकृष्णोऽत्राऽऽगमिष्यति । कुतः कुत्र कथं कदा स महानुभावः दृष्टिपथमारोहति । चर्मचक्षुषां स्थूलाशनदूषितधिया कथं नाम स देवः योगिभिरप्यगम्यः

दर्शनं दास्यति मादृशानाम् । भवंत एव गुरवः मामनुगृह्णंतु श्रीहरिदर्शनलाभाय ।

**आचार्याः**—मा त्वरिष्ठा । कल्लोलकोलाहले ग्रस्तसांयात्रिकायां नौकायामेव स पुरुषोत्तम आयास्यति सद्य एव ।

**श्रेष्ठीः**—भो गुरवः । पश्यतु । नौरिय समुद्रोर्मिमालासु विशीर्णा न दृश्यते । निमज्जिता पतत्यब्धिकुट्टरे ससत्वा वणिग्वरैः साकम् । हा ! कष्टं । कथमियं समुद्धृता स्यात्पारावारगर्भमध्यात् ।

**आचार्याः**—मा भैषीः । समुद्रब्रघ्नात्काश्यपीमिव कोलवपुर्हरि श्रीकृष्णः नौकामारुह्यात्राऽचिरादागमिष्यति । मंथादण्डदामपरिकरमृष्टकरः श्रीकर. गोपालवाल. गोपीचंदनपुटकमध्यमध्यासीनः भारसमन्वयाय तर्या अधोभागे विराजते ।

**श्रेष्ठीः**—अनुगृहीतोऽयं जनः भवदीयाऽऽप्यायनेन वचसा । नौकाभृतसंभारान् भवदीयपादमूले समर्पयामि । मम प्राणै. सह सर्वस्वं भवदीयमेव जानंतु । जलहृदनिगीर्णा नौरायातु तटीतटभावत्कप्रसादप्रभावात् ।

पुनः पुनरभ्यर्थितानामाचार्याणां स्वशाटिकादोलनमात्रेण जलप्लुता तरी मंदं मंदं दुरत्ययात्तरगावर्तात्समुत्थिता प्रशांतजलनिधेरुपरि प्लाव्यमाना दर्शनगोचरा बभूव । सम्मिलितानां परितः परिसरादागतानां जनानामतर्कितानंदममंदमजनयच्च । प्रावृषि नीरदागमनकौतुकमवेक्षमाणश्चातक इव धनिक श्रेष्ठी सहर्षालोकशब्देन स्वागतेन भेरीतूर्यकाहलीवंशवाद्यनिनादसनाथेन तौर्यत्रिकेन सभावयामास ।

तदनु सवाद्यवैभवं तामागतां तरणि विश्वगुरुभ्य श्रीमध्वाचार्येभ्यः समर्पयामास भक्तिभराक्रांतहृदयः विश्वनायक श्रीगोपीवल्लभं द्रष्टुकामः ।

**श्रेष्ठी** : स्वामिन, चिंतासंतानसंदब्धापारसंसारवार्धिसंतारणे सुपर्याप्ता. गुरवः । अवलोकयतु मां दीनं दूनं श्रीचरणशरणं प्रणत

दयादृष्टया। मम जीवितसर्वस्व तरीयन्त्रनिगूढानर्घ्यद्रव्य-सनाथं भवदीयमेवेति संकल्पितं प्रागेव। तदुपायनं स्वीकृत्य श्रीहरिसाक्षात्कारसुखमनुभावयंतु मां द्राक् गुरव. दूरीकृत-चिंतारवाः।

[इति सर्वं समर्पयति भक्त्या गुरुप्रवेकेभ्य. पूर्ण-प्रज्ञमुनिभ्य. स सार्थवाहाधिपतिः।]

**आचार्या.**—हे श्रेष्ठिन्। साधु कृत। विरक्तिभक्तिभ्यामेव गुरूपदिष्टप-थेनोपासित श्रीहरिरव्यक्तोऽपि गुरूपसत्तिवलाद्व्यक्तिमाप-द्यते। तिष्ठतु तावत्। नौकायाः अध प्रावरके जलाशये साम्यावस्थासपादनाय निक्षिप्तं पृथुलोष्ठपुटक वहिरानीय-ताम्।

ततः श्रेष्ठी पञ्चाशत्परिचारकैर्दृढसत्वै. सार्कं तत्र गत्वा मार्द-लोष्ठपिणं संचालयितु प्रावर्तत। नाऽक्षमंतागुलीमात्रयाऽपि स्वस्था-नात्त प्रच्यावयितु। तत स आगत्य गुरुभ्यो न्यवेदयद्विषण्णः स्वाक्षम-ताम्।

**श्रेष्ठी**—न वय सर्वथा पारयामस्त लोष्ठभारमाहर्तुं किंचिदपि। चाणू-रमुष्टिकनिभाः सत्वोर्जितसिद्दसहनना जना. तं संचालयि-तुमक्षमा. म्लानमुखा प्रतिनिवृत्ता. पीडाभारविनमित-कधरा। गुरव एव पर्याप्ता गुरुभारनिर्वाहे।

**श्रीमदाचार्या**—हत! तर्हि मम पिता जगन्नियंता मामेव वत्सलमुत्सु-कते प्रथमदर्शनेन संभावयितु। अहमेव नित्यसन्निहितस्य नित्यदर्शनेन सदा सतृप्त हरिर्यत्र मरुत्तत्रेति गाथा जगति निदर्शयितु नोच्चचालेषदपि वाह्यभीतवलसपन्नैरपि महा-मल्लनिभैरपि परिचारकैः। यमेवैष वृणुते तेन लभ्य इति हि तस्य सत्यसंधस्यावितथ संकल्पः।

ततः श्रीमदाचार्या. नौकाप्रावरकादेकेनैव हस्तेन गोपीवल्लभाधि-ष्ठित लोष्ठपिण्डमनायासेन लीलया वहिरानिन्यु.। मंदं स्फोटिते सति मृत्पिण्डे प्रादुरभूता सुदरकायौ द्वौ विग्रहौ रामकृष्णरूपौ प्रसादसु-

मुखौ। यत्र स लोष्ठस्फोटः समजनि स एवाद्य वडबंडेश्वर-नाम्ना प्रतीतो ग्रामः जगति विख्यातः यत्र बलरामविग्रहः प्रतिष्ठापितः शोभतेऽद्यापि।

**शिष्याः**—धन्या वयमद्य निर्मुक्तसंसारबंधनाः गुरुप्रसादेन श्रीहरि-साक्षात्कारं प्राप्तवंतः।

**श्रेष्ठीः**—हा! दृष्टा मनोज्ञमूर्तिः श्रीगोपालबालस्य द्वारकानाथस्य। मम अज्ञानग्रंथिः विस्रस्तः। उद्धृतं मम कुलं पापगर्तात्। वाणिज्यव्यवहारेण संपाद्याऽपि नाऽहमलंबुद्धिमाप्तवान्। अद्य मे कामलताप्ररोहस्त्रुटितः। अन्यथा वीचीतरंगन्याये-नाऽऽपततां जननमरणाद्यनिष्टानां विरामः कथं संजाघटीति। का पुनः प्रत्याशा शाश्वतानंदानुभवस्यानर्थसंहति संकुले दारापत्यपरिग्रहादिदुरितजालजटिले कामक्रोधाद्य-रिवर्गसंवाधपरिक्लिष्टे जनिमृतिप्रवाहावर्तसंभिन्ने संसार-सागरे। समाश्वसिति मे हृदयं गुरूणामाश्वासनेन।

[श्री गुरुभरुपदन्यस्तनिटिलतटः सुस्वरं गायति संस्मरन् गुरु-कारुण्यं मुक्तकण्ठं विवृतवदनेन।]

**मुहूर्तमात्रेण गुरूपदेशात् खट्वांगराजः स्वपदं प्रपेदे॥**
**सप्ताहसत्तत्वसुधानुगानैः परीक्षिदाप स्वगुरोः शुकार्यात्॥४२॥**

**धन्योऽहं तरियन्त्रवाहनिरतः विज्ञानहीनः परम्।**
**संसारार्णवघोरभंगसिततधीः पारं न यातुं क्षमः॥**
**सद्यः श्रीगुरुपूर्णसंख्य करुणापात्रं बभूवाऽऽनतः।**
**साक्षाद्दर्शनसौख्यमाप नृहरेः गोपीसुतस्याद्भुतं॥४३॥**

तदनु श्रीमध्वाचार्याः पञ्चाशत्पुरुषभरैरचाल्यमानं श्रीकृष्णवि-ग्रहं शिलामयमेकेनैव हस्तेन नृत्यंतो गायंतो हरिलीलामनुशीलयंतः सदासमाधिसुखमनुभवंतः पञ्चक्रोशदवीयः स्थितं रजतपीठपुरमानीय रजतपीठपुरे काननपरिसरे सरसि मत्स्यकूर्मनक्रसरीसृपसंवासेन निर्वासितमले शुद्धोदे मंदं मंदं तं क्षालयित्वा तन्निकटे एव प्रातिष्ठ-पन् स्पर्शमात्रेण सन्निहितपरमात्मरूपम्। द्वादशस्तोत्रेण श्रीकृष्णली-लामनुस्मरंतः एवं जगुः।

हरे मुरारे जगदार्तिहारिन् प्रसीद भक्ताय दृढव्रताय ।
सद्वारकायां कृतवास मंक्षु संरक्षति स्माऽखिल यादवेंद्रान् ।।४४।।

मत्स्यकूर्मवराहाद्यैः नृकण्ठीरववामनैः ।
नारसिंहरामराम कृष्णबुद्धसुकल्किभिः ।।४५।।

सृष्टिस्थितिसंहृतीश्च नियतिं ज्ञानमावृतिम् ।
बंधमोक्षौ च जगतः कल्पयन् भासि भूरिद ।।४६।।

स्वरूपप्रमितिस्पंदसत्ता यद्दृष्टिमात्रतः ।
नित्यानित्यप्रपंचस्य घटते तं नमाम्यहम् ।।४७।।

ब्रह्मादयः सुरगणाः कमलाऽपि लक्ष्मीः ।
यद्भ्रूभ्रमेण नियतं स्वपथे प्रवृत्ताः ।।
सेवां विधाय परमां फलमाप्नुवंति ।
योग्यं यतः सभगवानिह सन्निधत्ते ।।४८।।

कुरु भुंक्ष्व च कर्म निजं नियतम् ।
हरिपादविनम्रधिया सततम् ।।
इति वक्ति श्रुतिः कमलेऽड्यतनुम् ।
भज शुद्धधिया निजभावरतः ।।४९।।

प्रादुर्भूय निबद्धवासवसुदेवादौग्रसेनेर्भगि- ।
न्यांमाधुरपत्तने व्रजगतः नंदेन संपोषितः ।।
दैत्यान् स्वैरगतीन्निहत्य जनताऽऽनंदं वितन्वन् भुवि ।
मोक्षद्वारिपुरे वसन् विजयते सद्वारकाख्ये हरिः ।।५०।।

आंजनेयवपुषा सुखार्णवं रामचंद्रमभजत्पुरा मरुत् ।
मागध च विनिहत्य लीलया यत्प्रसादवशगः स पाण्डवः ।।५१।।

राज्यमाप कुरुवंशकंटकं धार्तराष्ट्रमधमं दुरासदम् ।
सोऽयमद्य यदुवंशभूषणः कृष्ण एति रजताद्रिमंदिरम् ।।५२।।

ततः श्रीमध्वमुनिः जगद्गुरुः प्रेम्णाऽऽदिशति सर्वान् नियोजयति यतिवरान् पर्यायेण वत्सरानुवत्सरं विना विलोपं पंचरात्रोक्तविधिना सपर्यां विधातुम् । आह च ।

श्रीकृष्णः स्वयमागतः पृथुधियः मध्वस्यवायोर्वंशः ।
सत्यं भक्तवशत्वमाकलयितुं विश्वस्य विश्वो विभुः ।
तं भक्त्या बिधिवद्विचित्य श्रुतिभिःसूत्रैर्यथावर्णितम् ।
ध्यायन् पूर्णगुणोपसंहृतिबलात् गच्छेत्पदं स्वं जनः ॥५३॥

शिष्याः गुरोराप्यायमानं वचः श्रुत्वा त वहुमन्यमानाः अस्माकं मोक्षवीजं मंत्रमुपदिष्टवानिति महोपकारं मनसि ध्यायंतः जयजयकारेण जगद्गुरुं तमभ्यनन्दयन् ।

(इति निष्क्रांतः श्रीमध्वमुनिः सशिष्यः)

ततः यात्रिकभक्ताश्च अद्भुतं श्रीमध्वचरितं स्मारं स्मारं नूनमयं वायुरेवेति मनसि तन्महिमान स्मरंतः स्वस्वावसथं निश्चक्रमुः ।

॥श्रीगुरुसार्वभौमसप्तरात्रोत्सवे द्वितीयदिनोत्सव इति अष्टम उल्लासः॥

॥ श्री ॥

॥ अपेक्षितप्रदात्रे नमः ॥

# नवम उल्लासः

## श्रीगुरुसार्वभौमसप्तरात्रोत्सवे तृतीयदिनोत्सवः

## श्री गुरुसार्वभौमाराधनामहोत्सवस्य पूर्वाराधनादिनम्

ब्रह्मांकसंभववचःसुधया पुरा यः ।
प्रह्लादजन्मनि महाविपदं ततार ॥
लक्ष्मीनृसिंहवलरक्षितराघवेंद्र ।
उन्निद्रयारुणसखे तव सुप्रभातम् ॥१॥

व्यासात्मना विबुधवंद्य ररक्ष राज्यं ।
दग्ध्वा कुहूं नृपतिघातनिवृत्तिहेतोः ॥
अद्यत्वआत्तहरिदर्शनमुक्तकल्प ।
श्रीराघवेंद्र भवतात्तव सुप्रभातम् ॥२॥

कृत्वा कृतीरनघ मध्वमताब्धिचंद्र ।
सिद्धांतगुह्यमवनौ विशदीचकर्थ ॥
यद्भावदीपकलया वरसूत्रभाष्य- ।
टीकासुधा. परिचितास्तव सुप्रभातम् ॥३॥

बुध्यस्व निर्जितकले हरिचिंतनाग्र- ।
चित्त प्रभो विगतनिद्र नृसिंहपोत ॥
त्रायस्व भद्रवरदानपटो जनांस्त्वत् ।
सेवारतान् करुणया तव सुप्रभातम् ॥४॥

भव्यस्वरूप वर हस्तधृताक्षमाल ।
प्रत्यग्रपुष्पतुलसीलसितांग धीर ॥
याञ्चामहे कथय संसृतिपारहेतु- ।
मुन्मील्य नेत्रपटलं तव सुप्रभातम् ॥५॥

इति बंदिभिः विविधवच सारभूषै संप्रार्थितः श्री गुरुसार्वभौमः प्रत्युषसि जनताजनप्रबोधकाम्यया । अर्चकमर्चचिका: श्रीतुंगातदिनी-



स्वामिन, उत्तिष्ठंतु प्रात.कर्मकलापं निर्वर्तयंतु । तुगा मङ्गलतरङ्गपावन-भुवनपूर्णकुम्भा ·········श्रीगुरुपादानां शुश्रूषया कृतकृत्यतामात्मानं नेतुकामैरस्माभिः मुखवायुनखस्पर्शविदूरमानीताः । (प. १२९)

तटकूटस्नाननिर्णेजितांगाः अग्र्योदककलशहस्ताः मठमंदिरं प्रविश्य गुरुवरचरणतटघट्टितमस्तकाः शीर्षोपरिन्यस्तहस्तपुटाः प्रार्थयामासुः विगतममताऽहंताः कलपदभासुरैः वचोविन्यासैः। स्वामिनः, उत्तिष्ठंतु प्रातःकर्मकलापं निर्वर्तयंतु। तुगामंगलतरंगपावनभुवनपूर्णकुम्भाः अहमहमिकया सकलनदनदीदेवतासन्निधानविशेषभूषानिःसारितकालुष्याः नितरां पूतांतरंगाः धन्वंतरिवरकरकलितामृतरसपूर्णाः श्रीगुरुपादानां शुश्रूषया कृतकृत्यतामात्मानं नेतुकामैरस्माभिः मुखवायुनखस्पर्शविदूरमानीताः। इति। ततः रक्षःपिशाचविद्रावणेन घंटारवेण मंदिरांत प्रविश्य निर्माल्यसेवां यथाविधि विधाय स्वयं तुंगासलिले पुनः स्नात्वा पुराऽऽनीतकलशोदकेनाभिषेचयामासुः श्रीगुरुसार्वभौमं उच्चैर्हरिगुरुस्तोत्राणि पठंतः आक्रोशदवीयो निनदद्धीरमद्रस्वरेण। यात्रिकभक्ताः केचित्; किन्नु स्वप्नोऽयं केचिद्देवलोके निलिंपाः गुरुगुणगानं गायति कि, अन्ये पुनः नाकनिवासिनः प्रह्लादसतीर्थाः प्रह्लादावतारं गुरुसार्वभौमं स्वतत्वोपदेशकं द्रष्टुकामाः तद्गुणाननुगृणंतः भूमाववतरंति किं इति बहुधा तर्कयंतः स्वयमपि जागरिताः तुंगातरंगिणी स्नातु प्रतस्थिरे। पिपीलिकाकुलाकुलवल्मीकवत् क्रोडदंष्ट्राजनिह्लादिनीकूलं स्नातैरस्नातैः स्नातुकामैश्च स्त्रीपुंसैराकीर्णं पटच्चरदुकूलक्षौमकार्पासवस्त्राणि आर्द्राणि शोषयद्भिः करतलांगुलीभिर्धृतानि पतंगवदूर्ध्वमाकाशे वातेनोड्डीयमानानि फट्फट्रवेण। जवेनैषच्छुष्काणि वस्त्राणि परिधाय-स्त्रियः हरिद्राकुंकुमस्थासकैः सुमंगलकपोलफालफलकमलंकृत्याऽऽत्मनः पुरुषाः गोपीचंदनेन ललाटोदरकुक्षिवाहुमूलान्याकृतिविशेषैरालिप्य मुद्राः शंखचक्रगदापद्म-नारायणसंज्ञास्तत्तत्स्थानेषु अंकयित्वा करधृतजलधरकलधौतकलशाः प्रातःसंध्यागुरुमंत्रादिकर्मकलापं पूरयित्वा मौनेन, वायुस्तुतिगुरुस्तोत्रादिमन्त्राणि भागीरथीगद्य भगवद्गीतायाः विश्वरूपदर्शनाध्याय च मनसि पठंत तटीदेशान्मंदं मंदं आव्रजंतः मठमंदिरमंतः प्राविशन्नरुणोदयसुमुहूर्ते। गुरुराजवृन्दावनं आऽक्षितृप्ति संदृश्य कपोलतटघट्टितकराघातैः मंतुतंतुसंतति नितांतं क्षमापयंतः महीतलघट्टिताष्टांगैः नमस्कुर्वंतः यथासंकल्पं सेवामनुष्ठातुं वहिः प्रांगणमाजग्मुः सावधानं भक्तजनसम्मर्दे आत्मनः शौचमारक्षंतः।

केचिद्विवाहरसिकाः वरकन्यकार्थे ।
काश्चित्पतिं प्रगुणमात्मसमानधर्मम् ।।
इच्छंत्य आर्तहृदया गुरुमादरेण ।
सेवत उत्कवदना भुवि दण्डपातैः ।।६।।

अन्ये पुनर्विविधविप्लवदण्डभीताः ।
संशांतिसौख्यविभवं मनसाऽऽप्तुकामाः ।।
निर्मुक्तलज्जमवनौ स्वयमंगकानि ।
व्यावर्तयंति रजसि श्रुतविप्रपादे ।।७।।

काणाः खञ्जाः कुब्जकाश्चैडमूकाः ।
भ्रांता मूढा बुद्धिहीना निरंगाः ।।
व्यंगाः क्लांताः पुत्रकामा दरिद्राः ।
स्वैरं सेवां वृद्धशिष्टाश्चरंति ।।८।।

आधिव्याधिनिपीडिता विशरणा रुग्णा भिषग्भिः परि- ।
त्यक्ता 'जीवितचिंतया मुहुरनुत्रस्ता गुरोः सन्निधौ ।।
प्राणांस्त्यक्तुमधिष्ठिताः कृतधियः सेवंत श्रद्धा गुरुम् ।
तान् सर्वान् परिरक्षति स्म गुरुराड् दत्वा स्वभीष्टं द्रुतम् ।।९।।

अत्रांतरे श्रीसुयमीद्रमौनीद्राः मस्करिमस्तकायमानाः प्रत्युषस्युत्थाय कृतशौचविधयो विधिवद्बहिर्देशे, कृतदेवताभिवंदनाः गीतगजेंद्रमोक्षादिसुश्लोक्यगाथाः तुलसीस्पर्शनसेचनाभिवंदनमृत्तिकालेपनादिभिः पावितसुभगागाः श्रीगुरुसार्वभौमवृंदावनं प्रथमं स्फीतावलोकनैः भक्तिरसप्लावितहृदा पिबंत इवाम्रेडितकौतूहलेन पश्यंतः ग्रहग्रस्त इव मौनेन श्रीहरिवायुगुरुगुणध्यानेन मत्तचित्ताः न किंचिदपि बाह्यमांतरमप्यचिंतयन् मुहूर्तम् । गुरुराट्कृतप्रातःसकलपगद्यं मंदं अर्थपरिच्छित्तये पदच्छेदं प्रदर्श्योच्चरंतः दंडपातं भुवि प्रणिपत्य रौक्मयष्टिहारिदूतप्रदर्शितपथेन दौवारिककरधृतदिवादीपप्रकाशे क्रोडदंष्ट्रासमुत्थां पवित्रां तुंगाह्लादिनी स्नातुमभिप्रवृत्ताः सशिष्याः दण्डकाष्ठकृष्णाजिनपुटहस्तद्रुतेनानुगम्यमानाः । तत्र मृत्तिकागोमयशौचस्नानेन पावितागाः तुंगातरंगावगाहनस्नानं यथाविधि विधाय दण्डकाष्ठतीर्थ-

प्रोक्षणेन शिष्याननुगृह्णंत. तीर्थदेवताभ्यः अर्घ्यं समर्प्य तटिनीतटादुत्थिताः मठमंदिरं प्रवेष्टुकामाः। दूतैः पुरः प्रस्थितैः शिष्यवर्गेणचानुव्रजता समेताः श्रीपादाः मठं प्रविश्य शुष्ककाषायक्षौमवासः परिधायोत्तरीयकेणांशुकेनोत्तमांगमावेष्ट्य भद्रपीठे कृष्णाजिनावृते बृहदासनमध्यतिष्ठंत। यथाविधि गोपीचंदनांकैरंगानि तत्तत्प्रदेशेषु लेपयित्वा पंचमुद्राभिरलंकृत्य कलेवरं देहोऽयं श्रीहरिवाय्वादिदेवताधिष्ठितमित्यनुसंदधानाः, प्रातराह्निकं प्रणवादिमन्त्रजपं च यथासंकल्पितं समनुतिष्ठंते स्म।

तदा महापण्डिताः पौराणिकाः श्रीमद्भागवतमहापुराणे सप्तमस्कंधे श्रीप्रल्हादचरितमनुवदितुमारेभिरे श्रीपादैराज्ञप्तास्तदाध्यक्ष्ये। यात्रिकभक्तजनसंहतिः दौवारिकप्रदर्शितराजांगणे श्रवणगोचरस्थले निषण्णोत्सवसंभ्रमविशेषानाहर्तुं प्राभवदुत्कवदनोदग्रचेताः। श्रीचरणानामुपकण्ठे चतुर्दिक्षु परितः कृतशुचिस्नानाः नाममुद्रांकनेन भूषितांगाः श्रीपादानां मुखारविंदमालोकयंतः तद्दृष्टिपातमपेक्षमाणाः नेत्रक्षेपमात्रेणावेदिततदाकूताः महाविद्वांसः मठीयास्थानमलंकुर्वाणाः ग्रामांतरादागताश्च सच्छात्रपरिवाराः जोषमाजुषंत स्वस्वविशेषविष्टरम्। पौराणिकविद्वांसः कण्ठत एव भागवतमूलप्रतीकं विजयध्वजीयटीकासमेतं विनाऽक्षरमात्राविलोपं समग्रमनुवदितुं प्रभविष्णवः निष्णाताः श्रीपादानुज्ञया प्रह्लादचरित्रं प्रतिश्लोकं तात्पर्यानुगुणं अर्थविशेषमवीविरन् वाग्वैखरीमहिम्ना पाण्डितीप्रकाशेन। अंतरांतराऽनुक्तमर्थं सदःस्थिताः पण्डिताः शास्त्रार्थविवरणेन विशदीकुर्वंति स्म।

देवाः शापाभिभूतत्वात् प्रह्लादाद्या बभूविरे इति श्रीमदाचार्यैः सूचिता प्रह्लादावतारकथा पुराणांतरेषु प्रसिद्धं समस्ति। प्रभुनियोगात्प्रमत्तः शंकूकर्णः चतुराननेन विमनसा संशप्तः दैत्ययोनौ हिरण्यकशिपुपुत्रः समजनि। परमभगवद्भक्त इति कयाधूगर्भ एवाऽऽसीनस्य शिशोः नारदोपदेशेन भगवति नारायणे भक्तिरंकुरितोद्रिक्ता क्रमेणाऽभिवर्धमानाऽऽसीत्। शैशवे एव स्वपितुः हिरण्यकशिपोः हृषीकपोषणैकनिषक्तचेतसः विषयसुखारामस्याऽऽसुरमुपदेशमुल्लंघ्य स्वाभाविकप्रज्ञया देवर्षिवचनमनुस्मरन् विष्णुसर्वोत्तमत्वमेव दृढं विश्वसिति स्म स शिशुः। शंडामर्कैरसुरगुरुपुत्रैः सनिर्बंधमनुबद्धोऽपि न तत्याज तां

तारकमति पंचहायनशिशुः भद्रमुखः प्रह्लादः । हिरण्यकशिपुरपि सनकादिशापाभिभूत श्रीहरिदौवारिको जय एव। जीवद्वयावेशप्रभावेण दैवाऽसुरसंमिश्रमतिमान् संशयात्मा प्रह्लादे सत्यसंधे हरिभक्तेऽघमकरोत्प्राणात्ययोदर्क नैस्त्रिंश्येन। परं पुरुषोत्तमश्रीहरिवलोद्वलितः स बालः सर्वास्वपि विपत्सु मातृपार्श्वसंसुप्तशिशुरिव संरक्षितः सुखं संवर्धते स्म। विषप्राशन-ह्रदनिमज्जन-भृगुपातन, गजशार्दूलसिंहावमर्दनेत्यादिमारकप्रयोगैरप्यविकृतमतेः तस्य न लोमाप्यहीयत श्रीहरिकृपापोषितवपुष । यदाऽत्यंतकुद्ध हिरण्यकशिपु प्रह्लादमतर्जयत् 'कस्ते रक्षकः कृतेऽप्यघे न किमप्यनिष्टमभूत्ते' इति भीपारोषरूषितवचसाऽतोदयच्च तदा प्रह्लाद अक्षुब्ध. शातो बभाषे सविनयं। तात, वृथाऽयं ते कोपाटोप । सर्वरक्षकः श्री हरिरेव सर्वेषां मम, तव, अन्येषां च बलं स सर्वत्र व्याप्तोऽपि आकाशवत् अस्माकमल्पौकसि हृदये पूर्णबलः सन्निधत्ते । मुञ्चामर्ष । वृथा रोषेणात्मानं दहसि। शरणं व्रज करुणार्णवं क्षीरार्णवशायिनं श्रीनारायणं । इति । मर्कटो मद्यपानेनेव भूयोऽपि संक्रुद्ध स दैत्यपति प्रस्फुरदधररदच्छदः कर्कशं जगर्ज। मूर्ख, वद कुत्राऽस्ति तेऽविता हरिः। दर्शय, अत्र स्तंभे निलीनः कि इति क्रोधेन विगतविवेक दृढं स्तंभं तताड निविडितमुष्टिना। सद्य एवाघटितघटनापटीयान् विकटवेषः श्रीनृकण्ठीरवः प्रादुरभूत् कठोरायसस्थूणागर्भात् जगति घोषयितुमात्मनः प्रकृतिविदूरत्वं शुक्रशोणितसंबंधशून्यत्वं चेतनाचेतनेषु अंतः स्थित्वा नियामकत्वं च। सपदि समुन्नतासनात् सिंहासनात् दैत्यपति मकुटाऽकर्षणाद् गृहावग्रहण्यां निषण्णस्य स्वस्योत्सगे निपात्य तस्य हिरण्यकशिपोरुदरं खरनखरहेतिभिः विदार्य वसामेदोरुधिरसिक्तांत्रस्रज कण्ठे धृत्वा करालाकारः समदृश्यतासुराणा, सुराणां तु प्रशांतमूर्तिरेव। प्रह्लादस्तु रक्षित. कंटकाद्विशंकटात् श्रीहरिणा रक्षितकरिणा भक्तवत्सलेन प्रह्लादभक्ता एव मामनुव्रता इति घोषयता। तातेन निर्दयं विमर्दितं मुग्धबालकं शृण्वानाः पौराणिकमुखात् सदस्या कण्ठनिरुद्धाश्रुकणाः सकरुणं रुरुदु । श्रीनृसिंहेण परित्रातमाकर्ण्य समाश्वासितहृदयाः हर्षश्वासं निश्वसंतः श्रीहरेः निरौपधं प्रेमाणमवर्णयन्तानिभृतवचनै मुक्तकठम्। अभ्यनदश्च पौराणिकाचार्य गौरवोद्गारिवाग्जालैः।

श्रीचरणास्तु सगद्गदस्वरेणोपसंहारोपदेशमन्वगृह्णन् मन्दानुजिघृक्षया। प्रह्लाद. परीक्षितदिव्यदृष्टि. विहिंसितोऽपि हिंस्रस्वभावेन दुष्टतातेन निर्विकारः आखणाश्मसमचैतन्यं वाय्वावेशं पिशुनयति स्वस्मिन् शंकुकर्णावतारवपुपि। स एव हिरण्यगर्भदूत शंकूकर्ण. शापवशाद्दैत्ययोनौ जनिमवाप। नूनं स प्रह्लादः कलियुगे व्यासतीर्थरूपेण तदनु श्रीगुरुसार्वभौमराघवेद्रतीर्थभावेनावतीर्ण. इति विख्यातः। श्रीनृसिंहविश्राणितवरमहिम्ना सार्वभौमचक्रवर्तिभोगमनुभवन्नास्ते श्रीराघवेंद्रगुरुभरुरस्मिन् कलौ युगे। स्व एव श्रीराघवेद्रतीर्थः रथारोहेण वैभवेन वाभास्यति सज्जनताहृज्झरीमुज्जीवयन्। इति।

सर्वे भक्तिभरेण श्रीगुरुराजमहिमानमनुस्मरंतः प्रह्लादवरदे श्रीनृसिंहे सर्वस्वमर्पयंतो निर्जग्मु. सभागृहात्पुरत' कार्यदिदृक्षया।

## श्रीमत्समीरसमयसंवर्धिनी सभा

ततः श्रीस्वामिनः समीरसमयसंवर्धिनीसभामुद्धाटयितुकामाः श्रीवेदव्यासं भाष्यकृट्टीकाटिप्पणीकर्तृमहाज्ञानिभिः पूर्वाचार्यैः सनाथ रजतशिविकायां सवाद्यवैभवं मठमंदिरादानीय सभामण्डपे चूतपल्लवकदलीकाण्डैः चतुष्कोणेषु समलंकृते दिव्यकार्तस्वरमयचित्रभूयिष्ठमहामण्डपे तत्तद्ग्रथेष्वावाह्य यथाविधि प्रतिष्ठापयामासुः विद्वद्वदननिर्यद्वेदघोषनिनादतुमुले सद्भक्तजनसंमर्दे। आहुश्च श्रीचरणाः। परंपरया प्रवर्त्यमानेयं सभा श्रीगुरुसार्वभौमसमाराधनामहोत्सवस्यासीमां सुषमां पोषयति। श्रीमत्सुशीलेंद्रतीर्थश्रीपादजीवधारानिषिक्तेयं ज्ञानवल्ली प्रतिसंवत्सरं घृताधिकसत्वाऽद्य सर्वत. प्रसृमरपरिमलप्रसूनमातनुते परिमलाचार्यमनस्तोषं पोषयंती नितांतं।

विदांकुर्वंतु सूरय.।

**अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः।**
**तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते॥**

सुखमेव मे स्याद्दु.खं मनागपि माभूदिति निखिलापेक्षितमोक्षस्येश्वरसाक्षात्कारजन्यतत्प्रसादं विना ऽनुदयात् साक्षात्कारस्य श्रवणमनननिदिध्यासनरूपजिज्ञासामात्रसाध्यत्वात् तदर्थ ईश्वरस्वरूपावधारणमपेक्ष्यते। प्रत्यक्षानुमानयोरप्रसरात् वेदा एवेश्वरावगमे प्रधानसाधनं। वेदार्थनिर्णयाय ब्रह्मसूत्राणि प्रवृत्तानि। तानि चान्यैरन्यथाव्याख्यात-

त्वात् अनधिगतप्रयोजनानि यथावद्व्याचिख्यासुर्भगवानानंदतीर्थमुनिः भाष्यानुव्याख्यानाणुभाष्यन्यायविवरणरूपकृतिरत्नचतुष्टयं व्यातेने। 'बालसंघमपि बोधयद्भृशं दुन्निरूपवचनं च पण्डिते.' इति परमगंभीरार्थस्य श्रीमदाचार्यभाषितस्याकूतमाविर्भावयितुं टीकाटिप्पण्यादिग्रथाः प्रवृत्ताः। तत्र श्रीपद्मनाभतीर्थाः त्रिविक्रमपण्डिताचार्याः श्रीजयतीर्थव्यासतीर्थश्रीविजयींद्रतीर्थश्रीराघवेंद्रतीर्था श्रीसुमतीद्रतीर्थाः श्रीवादिराजतीर्थाः श्रीरघूत्तमतीर्थ-वेदेशतीर्थयादवार्यप्रभृतयश्च प्राधान्येन निर्देशमर्हंति।

ॐ अथाऽतो ब्रह्मजिज्ञासा ॐ इति प्रथमसूत्रे सामान्यतः विरक्तिभक्ति शमदमाद्यधिकारसंपत्त्यनतरं, मोक्षाख्यफलसद्भावात् ब्रह्मणः गुणपूर्णस्य विष्णोर्जिज्ञासा कर्तव्या (ब्राह्म ज्ञानाय श्रुत्यर्थविचार कर्तव्यः।) इति प्रतिज्ञाय चतुरध्यायात्मक ब्रह्ममीमांसाशास्त्रे प्रथमाध्याये सकलवैदिकशब्दाना ब्रह्मणि समन्वयेन तस्य गुणपूर्णत्वं साधितम्। द्वितीयेऽध्याये युक्ति-समय-श्रुति-श्रौत युक्त्युपेतश्रुतिविरोधा परिहृताः। एवमवधृतस्वरूपस्य विष्णोः प्राप्तौ साधनानि विरक्ति-भक्ति-उपासना-ज्ञान (तज्जन्यप्रसाद) रूपाणि निरूपितानि तृतीयेऽध्याये। चतुर्थे तु कर्मक्षय-उत्क्राति-मार्ग-गम्य-भोगभेदेन मोक्षः प्रतिपादितः। मोक्षस्याव्यवहितसाधनं ईश्वरप्रसादस्तदर्थमुपासनाऽऽवश्यकी। जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते। इति आचार्यै निष्कृष्योक्तम्। ब्रह्मशब्दश्च विष्णावेवेत्यपि सिद्धांतितं तन्मुख्यार्थविवेचनेन। स एव विष्णुराह हि यं ब्रह्मेत्याचक्षते इति निरतरपूर्वदैवीमीमांसासूत्राभ्यां ब्रह्मणः विष्णुत्वमुक्तम्। रूढ्या विष्णुत्वमुक्तं योगेन च बृहंतोह्यस्मिन् गुणा इति गुण पूर्णत्वं लक्षणतया निश्चीयते। ब्रह्मणि प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति। इति तस्यैव ब्रह्मण. मीमांसा ब्रह्ममीमांसाशास्त्रे प्रस्ताविता। अतः वेदार्थनिर्णायकब्रह्मसूत्राणां प्रधानप्रतिपाद्यः विष्णुरेवेत्यवसीयते। कार्येतिकर्तव्यतयोरैकार्थ्यनैयत्यात् वेदस्याऽपि मुख्यविषयः विष्णुरेव भवितुमर्हति। अयं परमसिद्धांतः वेदैश्च सर्वैरहमेववेद्यः, द्वाविमौ पुरुषौ लोके इत्यादिगीतावचनैरपि स्फुटं प्रतीतो भवति। क्षराक्षरातीतस्य पुरुषोत्तमस्य विष्णोः महिमावगमाय तत्सृष्टस्य तदधीनस्य जगतः क्षराक्षरघटितस्य ज्ञान-

मावश्यकम् । प्रतियोग्यनुयोगिनोर्भेद. प्रतियोगिभूतस्य जगतः तारतम्यघटितावांतरभेदः सर्वस्यैतस्य प्रारमार्थिकसत्यत्वं एतदादिप्रमेयं स्वत एव सिद्धयति तत्तत्प्रमाणबलात् । अयमेव सिद्धातः वैदिकैः श्रीमदाचार्यैः स्वग्रथेपु प्रतिपादित. संगृहीतोऽस्मिन् श्लोके महानुभावैः श्रीव्यासतीर्थैः ।

श्रीमन्मध्वमते हरिः परतर. सत्यं जगत्तत्वतो ।
भेदो जीवगणा हरेरनुचराः नीचोच्चभावं गताः ॥
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधन ।
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥

अयमेव सत्सिद्धांतः समीरसमयसंवर्द्धिनीसभया संवर्ध्यंते पोष्यते च । जगतीतले श्रीमदास्तिकाग्रेसराणा श्रीमदानदंतीर्थभगवत्पादाचार्याणां सिद्धांतोऽयं मोक्षोपयोगितया समादरणामर्हति विवेकपटुभिः तत्ववेत्तृभिः। विद्यार्थिनो विद्वांसश्च सच्छास्त्रप्रवचनपठनपाठनादिना तत्ववादमिममभ्यस्य प्रचाययेयुरित्यनुगृह्णीमः । श्रीगुरुसार्वभौमाणां सप्तरात्रोत्सवेऽस्मिन् पर्वणि तत्तत्प्रमेयमधिकृत्य विद्वद्भिः वाङ्मुखानि दीयंते । तत्सर्व मनसि धृत्वा जिज्ञासुभि. सर्वै. श्रेयोभाग्भिर्भवितव्यम्। इति सिञ्जिनीमञ्जीरसिञ्जितमञ्जुपदपुंजैरंजयामासुरंजसा विबुधसदोरंगम् श्रीसुयमीद्रपूज्यपादाः विद्वत्सभां सुरमोददायिनीमुद्घाटयंतः ।

तदनु विद्यार्थिनां परीक्षा अधिकृतधर्माधिकारिभिः तत्तच्छास्त्र पारीणपण्डितै. प्रावर्तंत विभिन्नकक्ष्यासु समीरसमयसंवर्धिनीसभामण्डपस्य । काव्यालकारव्याकरणमीमांसान्यायशास्त्रेषु परीक्षार्थ मागताः विद्यार्थिनः तत्तत्स्थानेषु मिलिता आसन् । प्रौढविद्यार्थिनां परीक्षा तु श्रीस्वामिपादाना सान्निध्ये पण्डितमण्डलविभूषिते संवृत्ता । श्रीस्वामिनः सुयमींद्रपूज्यपादा विद्यार्थिनमेकं ब्रह्ममीमांसाशास्त्रस्य प्रथमसूत्रं पदकृत्यविवरणपूर्वकं प्रतिपाद्य तत्तात्पर्य प्रकटयितुमपृच्छन् । निशितमतिरेकः प्रौढः छात्रः प्रस्थानभेदप्रोक्तार्थ संगृह्य समग्रशास्त्रार्थं संगृह्य ॐ अथातो ब्रह्मजिज्ञासा ॐ इति सूत्रं व्यावर्णयत् विद्वत्परिषदि । तथाहि—

अथ, अतः ॐ ब्रह्मणः जिज्ञासा कर्तव्या इति वाक्यान्वयः। ॐकाराथशब्दौ नारायणमुखात् प्रथमं विनिःसृताविति स्वरूपतोऽर्थतश्च प्रबलौ। अत. तौ सर्वसूत्रेषु प्रथमं उच्चार्यौ। तत्रोंकारः सर्वसूत्रेष्वनुगतत्वेनासंहिततया पठ्यते। स सूत्रावयवोऽपि भवति। अन्वयप्रतियोगिसमर्पको भवतीति यावत्। अथ=नित्यानित्यवस्तुविवेकाद्यधिकारचतुष्टयसंपत्त्यनंतरं ॐ गुणपूर्णस्य ब्रह्मणः विष्णोः जिज्ञासा कर्तव्या। कुतः अतः मोक्षाख्यफलसद्भावात्, मोक्षस्य प्रसादसाध्यत्वात् बंधस्य सत्यत्वात्, वेदस्य प्रामाण्यात् सिद्धार्थबोधकत्वात् अन्विते शक्तिमत्वाच्च। ॐ ब्रह्मपदाभ्यामवगतविषयस्योपपादकतया प्रयोजनोपपादकतया च अतः शब्दो व्याख्येयः।

अत्र विचारः। एतदोऽश् इत्यनुशासनात् अतः शब्दः निष्पद्यते। सर्वनाम्न. पूर्वप्रकृतपरामर्शकत्वात् अस्यैव प्रथमसूत्रत्वात् किमत्र परामृश्यते। इति शंकायां परवादिप्रसक्ताः पूर्वपक्षाः ब्रह्मतर्के अनूद्य युक्त्या निरस्ताः। सैवयुक्ति. बुद्धिस्था अत्र संक्षेपेण अतःशब्देन परामृश्यते। इति समाधातव्यम्। के ते पूर्वपक्षाः। इत्यत आह। पूर्ववादिनः एवमाहुः। जीवब्रह्मणोरैक्यात् ब्रह्मणश्च स्वप्रकाशत्वात् जीवस्य नित्यसिद्धत्वाच्च न विषयसिद्धिः। वेदाना कार्यपरत्वात् नित्यसिद्धब्रह्मणि न तेषां प्रामाण्यम्। ज्योतिष्टोमादिकर्मकरणात् स्वर्गाद्यभ्युदय एव फलम्। ईश्वरप्रसादस्यानपेक्षणात् ईश्वरस्य श्रुतिप्रतिपाद्यत्वाभावात् न वेदाः तत्र प्रमाणं। बंधस्य मिथ्यात्वात् मिथ्यायाः निवृत्तौ नेश्वरप्रसादः अपेक्षितः। शब्दस्यार्थप्रत्यायकत्वं नास्ति। किमु शब्दविशेषस्य वेदस्य। कारणनिरोधादेव दु.खनिवृत्तिरूपमोक्ष. सिद्ध्यति। अथवा ज्ञानादेव अज्ञाननिवृत्तिरूपापवर्गः सिद्ध्यति। अत्र प्रसादस्य कोऽवकाशः। इति पूर्वपक्षिते तन्निरास. अतः शब्देन क्रियते। मोक्षस्य ईश्वरप्रसादैकसाध्यत्वात् बंधस्य सत्यत्वात् सत्यस्यापि बंधस्य निवृत्ति. प्रसादमात्रसाध्या न कर्मणा, वेदस्य आकांक्षादिबलेनान्वितस्य अर्थबोधकत्वेन प्रमाणत्वात् सिद्धार्थेश्वरबोधकत्वात् विषयप्रयोजनवत्वात् ब्रह्मजिज्ञासा कर्तव्या। इति भावः। ॐ ब्रह्मपदाभ्यां जीवभिन्नगुणपूर्णब्रह्मरूपविषयसिद्धिः।

अत्र ॐकार: समासवृत्तिघटकैकदेश ब्रह्मणा अन्वय. देवदत्तस्य गुरुकुलमितिवत् गमकत्वात् साधु.। ॐब्रह्मपदयोरेकार्थत्वात् घटो घट इति

वत् न शाब्दबोधोपपत्तिरिति शंकने एकस्य रूढ्या अन्यस्य महायोगेनेति वृत्तिभेदेनार्थबोधकत्वात् शाब्दबोधो जायते एव भिन्नप्रवृत्तिनिमित्तकत्वात् । घटो घट इत्यत्र शक्यतावच्छेद कैक्यात् उद्देश्यविधेययोरैक्यप्राप्तेः न वाक्यार्थप्रतिपत्तिः सभवति । परं घटो द्रव्यमित्यत्र घटत्वावच्छिन्नमुद्दिश्य द्रव्यत्वं विधीयते इति शक्यतावच्छेदकभेदात् उद्देश्यविधयेयोर्भेदात् साधुरेवायं प्रयोगः । एवमेव ब्रह्मशब्दश्च विष्णावेव इति आचार्यैरुक्तत्वात् विष्णुत्वं तत्रावच्छेदकः । ओतत्ववाची ह्योंकार इति व्युत्पत्त्या देशतः कालतः गुणतः परिच्छेदत्रयशून्यत्वं ॐकारस्यावच्छेदकः । अवच्छेदकभेदेन वा प्रवृत्तिनिमित्तभेदेन वा ॐकारस्य ब्रह्मपदेन अन्वयः घटते एव ।

अतः शब्दस्य साधुत्वं विभाषा गुण इति सूत्रे गुणशब्दस्य परतन्त्रार्थकत्वमुक्त्वोपपादनीयम् । तथैवोक्तं तंत्रदीपिकायाम् अन्यथा नैयायिकरीत्या रूपरसादिरूपगुणत्वाभावात् वेदातिरीत्या ज्ञानानंदादिरूपत्वाभावाच्च तसिल् प्रत्ययो न घटते । हेतुवाचकस्य विषयसमर्पकतयाऽप्राधान्यात् (विषयस्यैव प्राधान्यात्) तस्योपसर्जनत्वम् । अतः विभाषया-विकल्पेन एतत्पदोत्तरं तसिल् प्रत्ययो भवितुमर्हति । अध्यायचतुष्टयक्रमानुसारेण गुणपूर्णत्वं प्रथमद्वितीयाध्यायोः, साधनं तृतीयाध्याये, फलं चतुर्थाध्याये उक्तत्वात् ॐ ब्रह्म अयातः इति वक्तव्यम् । क्रमव्यत्यासस्तु ॐअथ शब्दयोः स्वरूपतोऽर्थतश्चाधिक्यलाभाय । अथ अतः ब्रह्मपदानि निरधिकारिकत्व निष्प्रयोजनत्व निर्विषयत्व शंकानिरासकानि ।

संक्षेपेण ॐब्रह्म अतः पदैरुक्तार्थमेव विस्तरेण अनुव्याख्याने विशदीचकार आचार्यः। विशदीकृतश्च प्रमाणपुंजैर्न्यायसुधायां श्री जयतीर्थमुनिभिः। तत्सर्व मनोज्ञतया क्रोडीकृतं परिमले श्रीराघवेंद्रस्वामिभिः । यथा ॐ ब्रह्मपदाभ्या विषयसमर्थनं द्वेधा भवति (१) प्रमेये आरोपितान्यथाकारशंकानिरासेन (२) तथा ब्रह्मप्रमाणे आरोपितान्यथाकारशंकानिरासेन च । द्वितीयमपि त्रेधा (१) शब्दस्यैवार्थ संस्पर्शशून्यत्वात् शब्दविशेषस्य वेदस्य सुतरामप्रामाण्यमिति शंकानिरासेन (२) वाक्यार्थबोधोपायाभावात् न वेदस्य प्रामाण्यमिति शंकानिरासेन (३) प्रामाण्येऽपि न सिद्धार्थे प्रामाण्यमिति

कुतस्तद्विशेषस्य विष्णोः विषयत्वमिति शंकानिरासेन।

एवं चतुर्षु विषयसमर्थनप्रकारेषु आद्यः ओतत्ववाची ह्योकार इति स्मृत्यादिना ॐकारपदप्रयोगेण प्रदर्शितः। द्वितीयस्तु प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हीत्यत्र अत. शब्दस्य वेदादि-शब्दप्रामाण्यार्थपरत्वव्याख्यानेन, तृतीयस्तु शक्तिश्चैवान्विते स्वार्थे इत्यत्र शब्दस्यान्वितार्थे शक्तिमत्वात् इत्येवं रूपार्थपरत्वव्याख्यानात् स्फुटीकृतः। चतुर्थस्तु वेदादे सिद्धार्थपरत्वरूपार्थपरत्वेन 'कार्यता च न काचित् स्यादि'त्यत्र व्याख्यानेन प्रदर्शितः।

एवं ॐ ब्रह्मपदाभ्यां गुणपूर्णविष्णो. शास्त्रविषयत्वसमर्थनं प्रथम-द्वितीयाध्याययो वैदिकसर्वशब्दसमन्वयेन वेदविरोधियुक्तिसमय परस्परश्रुतिश्रौतयुक्तिश्रुतिविरोधानां निरासेन च कृतम्। अथाऽत शब्दयोरर्थ साधनफलार्थक तृतीयचतुर्थाध्याययो· कृतः।

संक्षेपभाष्येऽपि विष्णुरेव विजिज्ञास्य इति श्लोकार्धेन सर्वोऽ-प्ययमर्थ. संगृहीतः। ॐब्रह्मपदार्थ. देशतः कालत. गुणतश्च व्याप्तो विष्णुः नाऽन्य.। स. प्राधान्येन जिज्ञास्यः इत्युक्त्या अंगाववद्धास्तु इत्युक्तपरिवारदेवतोपासनं अप्राधान्येन कार्यमिति न विरुध्यते। जिज्ञासा अधिकारिभिरेव कार्येति द्योतनाय विशब्देन विशेषिता। इत्येवमाद्यर्थकत्वेन अनुव्याख्यान-भाष्योक्तार्थविवरणमेव कृतम्। भाष्येऽपि अथशब्दो मगलार्थो अधिकारानंतर्यार्थकश्चेत्यादिना विस्तरेण अथशब्दो व्याख्यात.। ॐअतः शब्दौ अनुव्याख्यान-सुधयोः विशदं विवृतौ इति ध्येयम्।

एवं प्रथमसूत्रार्थमुक्त्वा श्रीपादान् प्रणम्योपविष्टः छात्रः।

श्रीपादाः विषयवाहुल्यं प्रतिपादनप्रकारंचावलोक्य प्रीता. तं श्लाघयामासु.।

तदनु श्रीपादा शिष्टान् श्रोत्रियपण्डितविप्रोत्तमान् पंचसंख्याका-नाहूय अलंकारभोजनायऽऽमन्त्रयामासुः साक्षतवस्त्रयुग्ममेकैकस्मै प्रदाय। अलंकारपूजासमये कृतस्नानैः शुचिभिः सन्नद्धैर्भवितव्यमित्याज्ञाय निर्गताः पुरतः कार्यविक्षणाय।

घटिकाद्वयविरामेण श्रीगुरुसार्वभौमाणां पञ्चामृताभिषेक. प्रार-भ्यते इति कार्यसूचकायुक्तकैरुद्घोषितम्।

## श्री हरिदासपरिषत्

अत्रांतरे श्रीपादानामाध्यक्ष्ये दासकूटपरिषत्प्रारंभोत्सवः समजनि। श्रीचरणाः परिषदमुद्घाटयंतः एवमाहुः। श्रीव्यासतीर्थाः पुरंदरदासादिदासवर्येभ्यः दासदीक्षामनुगृह्य दत्वा 'हरिदासकूटं' इति संघमुज्जीवयामासुरंतरंगशोधनेन मोक्षफलकमुपासनादिसाधनमनुष्ठातुं सच्छास्त्रोक्तमर्यादया। श्रीगुरुसार्वभौमाः श्रीव्यासयोग्यवतारा: दासकूटजीवातव आसन्निति श्रीविजयदासगोपालदासजगन्नाथदासप्राणेशदासप्रसन्नवेंकटदासार्याणां स्तोत्रपदविमर्शेन-ज्ञायते। पुरंदरदाससंततौ असख्याकाः हरिदासाः तत्कृतिपोषितभक्तिरसस्रोतसः आविपालगोपालं पदसुळादिउगाभोगेत्यादिविविधवृत्तबद्धकविताः विरच्य्य जनान् देवधर्मविमुखान् तथ्यपथ्यसूनृतोपदेशमहिम्ना परमधार्मिकहरिभक्तान् संपाद्य महती हरिसेवामतन्वन्। तत्परंपराऽद्यापि कर्णाटकांध्रद्राविडमहाराष्ट्रजनपदेषु सुदृढमुत्तरोत्तरमुपचीयमाना प्रवर्धते। सर्वैरपि मुमुक्षुभि. सत्सिद्धांत गुरुमुखेनाभ्यस्यतदुक्तप्रमेयाणि मोक्षपथपरिचितानि दासदीक्षया कृतिरंगमानेतव्यानि बलवत्योपासनाप्रणाड्या। समाचारेऽधिकाराच्च, चरणादितिचेन्न तदुपलक्षणार्थमिति कार्ष्णाजिनिः आनर्थक्यमिति चेन्न तदपेक्षत्वात् सुकृतदुष्कृत एवेति तु बादरिः इत्यादिसूत्रेषु सदाचारेण कृतं कर्म समीहितफलप्रदमिति सिद्धातितम्। हरिदासैः धर्मः प्रोज्झितकैतवोऽत्र परमः इत्युक्तरीत्या अमायया‌ऽनुवृत्त्या श्रीहरिसेवाऽनुष्ठेया इत्युपदिश्यते। सदाचारः न केवल बाह्यदेहसंस्काराय पर्याप्नोति किंतु वाङ्मनःकायव्यापारेषु ऋजुत्वं संपादयति। तेषु विषूचिता विघटयति। दैवी संपत्तिमादधाति। अतः सर्वैर्भूतिकामैः सत्सिद्धांतगुह्यतत्वान्यवधार्य तानि स्वयमनुष्ठाय विरक्तिभक्त्युपबृंहितोपासनया ब्रह्मसाक्षात्कारं प्राप्य तेनाभिवर्धमाननिरंतरप्रेमप्रवाहलक्षणसुदृढभक्तिप्रयोज्यश्रीहरिप्रसादेन यथायोग्यं नैजस्वरूपानंदाविर्भावरूपमोक्षाय प्रयतितव्यम्। दासदीक्षा नाम व्यासकूटस्य फलोपधानेऽव्यभिचारिणी अवर्जनीया सहकारिसामग्री। प्रतिदिनं भागवतादिभक्तिग्रंथान् पुरंदरदासादीनामपरोक्षज्ञानिनां पदानि अर्थज्ञानपूर्वकं पठित्वा दासदीक्षानियमान् साधारणविशेषधर्माश्च परिपाल्य श्रेयोभाग्भिर्भवितव्यम्। इति श्रीचरणाः भक्तिरसप्लावितहृदयेन पूर्वाचार्यान् हरिदासाश्च स्मारं स्मारं तदुपदि-

ष्टप्रमेयान्युद्धृत्य निरूप्य सम्मिलितान् विदुषः दासांश्चानंद वार्धौ न्यमज्जयन्नकुब्जहृदयाः विद्वज्जनजीवातवः ।

हरिदासपरिषदः भाविनी महतीमुपन्यासकार्यवैखरी संचालकैर्घोषितां विज्ञाय यथाकालं तत्राऽऽत्मानं सन्निधापयितुकामाः पुरतः कार्यावेक्षणाय सभामण्डपात्सर्वे भक्ताः निर्जग्मुः ।

श्रीपादास्तु रजतयष्टिहारिप्रतीहारिणा प्रदर्शितमार्गेण श्रीगुरुसार्वभौमाणां पंचामृताभिषेकं महता संभ्रमेण संचालयितुं श्रीगुरुराजबृंदावनं प्रति प्रतस्थिरे । अभूतपूर्वो जनसंमर्दः आराधनामहोत्सवाय दिगंतरदेशतः क्रोडीकृत. । अहमहमिति धार्मिकस्पर्धया रभसाऽऽक्रमतो जनान् व्यवस्थया नियमयितु विशिष्टनियुक्ताः अधिकारिणः अनिमिषसमीक्षणेनानुनयगर्भसूनृतवचसा व्यवहरंतो दीक्षया स्वे स्वे कर्मणि प्रवृत्ताः । अचिरादेव गृहचटकरववर्जमालेख्यार्पितचेष्टा इव निःशब्दा नियतश्वासाः सर्वे जना आतिष्ठंत ।

भूरिश. कलशततिसुपूर्णा. गोक्षीर-दधि-आज्यमधु-शर्करा-कदलीफलशकलादिसंभाराः नारिकेलकदाः चूतरसपूर्णबृहत्कलधौतकरकाः द्राक्षाखर्जूरपनसफलखण्डाश्च बृंदावनसविधे प्राकारे क्रमश. अभिषेकाय गिरिकूटवद्राशीकृत्य स्थापिता आसन् । श्रीचरणानुज्ञया अर्चकमर्चिकाः तत्तद्देवतावाहनादिसंस्कारै. धूपदीपनैवेद्यादिविधानै. संपूज्य यात्रिकजनसंहति स्वनाम्ना कृतसकलपपत्रिकां [प्रतिनिधीकृत्य गुर्वनुज्ञां सपाद्य मंत्राक्षतावारिधारापूर्वमभिषेक्तुमारभंत उपर्युक्तपंचविधसामग्रीभरेण जयनिर्घोषतुमुलनिनादे जनसंमर्दकण्ठीरवकण्ठनिर्यद्गभीरस्निग्धप्रगुणीकृतविततरसिते । अर्चकाः यथाक्रमं तत्तद्रव्याणि शंखस्पर्शेन रजतपात्रे सपूर्य घटानादेन क्षीरादिद्रव्याणि लक्ष्मीनारायणाय शालग्रामे समर्प्य तेन मुख्यप्राणायाभिषेकं कृत्वा तच्छेषेण तारतम्येन श्रीमध्व-पद्मनाभतीर्थ-जयतीर्थादि गुरुद्वारा श्रीगुरुसार्वभौमश्रीराघवेंद्रतीर्थेभ्य. बृंदावनावसथेभ्यः यथाविधि समर्पयामासुः । प्रतिद्रव्याभिषेकाते मगलार्तिक्येन गुरून् सभावयामासु. । शर्करास्नानसमये श्रीसुयमीद्रतीर्था शर्करापिष्टमजलिभिः श्रीबृंदावनोपरि दूरत न्यक्षिपन् भक्तिभरेण । पंचामृतसूक्तानि गुरुस्तोत्रं गुरुगुणस्तवनं च सर्वे भक्ता. एकरवेणापीपठन् उच्चैरस्खलितवर्णपदवाक्यस्फुटोच्चारेणार्थव्यक्तिमनुसंधाय । महानीराजनं कृत्वा तत् श्रीचरणेभ्यः प्रथम विज्ञाप्य परि-

चारकमुखेन सम्मिलितजनाय दापयामासुः। श्रीपादाः फलमंत्राक्षतादिकं अर्चकनिवेदित गृहीत्वा प्रतिष्ठितविद्वज्जनाय स्वहस्तेन प्रसादं वितेरुः । तदनु श्रीपादाः श्रीवादीद्र-सुधर्मेंद्र-सुव्रतीद्रतीर्थवृंदावनानि गत्वा तत्रतत्रार्चकमुखेन पंचामृताभिषेकं नीराजनादिकमर्पयामासुः ।

दिनमणिर्भास्वान् नभसि सप्तसप्तिरथारूढः ब्रह्मांडप्रदक्षिणयात्रायां अरुणोदयात्पूर्वाचलमाक्रम्य नाकमध्यमध्यासीनः पश्चिमाद्रिप्रयाणाभिमुखः तारतरं प्रतपति स्म । अपराह्णमागच्छतीति ज्ञात्वा तूर्णं तीर्णकर्मार्णवाः श्रीपादाः मध्याह्नपूजासंपादनाय मठमंदिरनिष्कुटी स्नातुमाव्रजन् दूतदर्शितपथेन जवेन । यथाविधि स्नात्वा तत्रैव सद्यःशुष्ककौशेयवासः परिधायोत्तरीयांशुकेनोत्तमांगमवतंसयंतः करधृतसजलकलशाः पूजामण्डपमभ्याययुः । तत्र संनद्धविशालदारुपीठे निषण्णाः नाममुद्रादिभिरात्मानमलंकृत्य माध्याह्निकं सांध्यं कर्म निर्वर्त्य प्रणवमंत्रजपमकार्षुः । उत्थाय च श्रीमूलराम-दिग्विजयराम-जयरामविग्रहपूजामण्डपस्य पुरतः वामभागे दारुमयविष्टरे आसीनाः घण्टामाचाल्य वादयामासुः दुष्टरक्षःपिशाचाद्यनिष्टोच्चाटनाय । तत्त्वन्यास-मातृकान्यासादिभिः कलशपूजां शंखपूजां च पंचामृतद्रव्येषु तत्तद्देवताऽऽवाहनं च कृत्वा अर्घ्यपाद्याद्यर्थं पंचपात्राण्यासाद्य गंध-तुलसी-पुष्पमंत्राक्षतादिद्रव्याणि तत्र निक्षिप्य मूलमन्त्रेणाष्टवारमभिमंत्र्य शालिग्राव-व्यासमुष्टिगोपालकृष्णादिदेवेभ्यः अभिषेकपूजां सपादयामासुः शिष्यैः वेदपाठकैराघोष्यमाणेषु अभिषेकसूक्तेषु । महता संभ्रमेण अयुतादधिकसंख्यया समाकृष्टा यात्रिकाः गुरुराजभक्ताः श्रीमूलरामपूजावैभवं संदृश्य नेत्रविस्तारफलमाप्यायनमापुः । पूजापरिचारकाः हस्तलाघवेन तत्तद्द्रव्याणि यथावसरं संपाद्य श्रीपादानां परिचर्यामकल्पयन् त्वरितगत्या । श्रीपादा श्रीमूलरामादिप्रतिमाः शंखस्थजलेन मंत्रपूतेन तुलसीदलेन संप्रोक्षयामासुः। धौतवस्त्रेण प्रतिमाः शिलाश्च संमार्ज्य संपुटेषु निधाय गंधाक्षतातुलसीपुष्पादिपरिमलद्रव्यैरर्चनां व्यदधिरे साकं । अतीव विष्णुसहस्र नामब्रह्मसूत्र-भाष्यानुभाष्यादिग्रंथभागान् संपठंतः शिष्यैः मनोनयनाप्यायमानोऽयं सुभगः पूजाविभवसमयः यत्र श्रीपादैरावाहिताः पीठमंडपदेवताः आवरणदेवताश्च स्वयं विग्रहवत्यः श्रीमूलरामसपर्यां द्रष्टुकामाः सन्निहिता इति विभाव्यते । अहो धन्या वयं । सफलं च जीवितमस्माकं यदद्य श्रीसुयमीद्रकर्मंदींद्रांतर्गतमुख्यप्राणः

सपरिवारः साक्षाच्छ्रीरामचद्रपूजां निर्वर्तयितुमागतोऽस्मदक्षिगोचरः समभूदिति । ततः श्रीपादा. तत्वन्यासादिकं कृत्वा धूपदीपत्रिवर्त्यातिक्यं प्रदर्श्य तत्रानीय स्थापितपाकद्रव्येषु एवमर्चितयन् ।

भक्ष्यैर्भोज्यैश्च लेह्यैः परिमलरुचिरैः पेयभेदैः सुमृष्टैः ।
नैवेद्यं भूरिहृद्यं सुमधुररसवत्संस्कृतं भूरिभागैः ॥
साक्षाल्लक्ष्मीप्रमृष्टं गुरुभिरुपहृतं जानकीजानिमूम्ने ।
हृतैतद्देवगम्यं प्रकृतिरसनियंतू रसाभोगतत्वं ॥१०॥

पुरा रामः साक्षाच्छबरिकरदत्तं फलकुलं ।
अजक्षत्प्रेम्णैवप्रभुरयमथोऽक्रूरवरद ॥
यशोदायाः स्तन्यं मुहुरनलसः कृष्णवपुषा ।
पपौ कामं विष्णो वद कथमयुक्ता ह्यशनवाक् ॥११॥

कृष्णः कौरवकृष्णकर्म सुदतीवस्त्रापहारे कृतं ।
धिक्कृत्याद्भुतशक्ति रुद्घविभवः वासःशतं सृष्टवान् ॥
स्तंभादद्भुतरहंसा समुदभूत्प्रल्हादभूत्यै हरिः ।
लक्ष्मीशस्य गुणार्णवस्य जगतः स्रष्टुः किमत्यद्भुतम् ॥१२॥

हे राम जानकीजाने गृहाणोपाहृतं मया ।
भक्त्या दत्तं पत्रपुष्पं प्रीत्याऽश्नामीति ते व्रतम् ॥
मम प्रभुर्गुरुर्धीरः प्रल्हादो नृहरेः प्रियः ।
तद्वंशजः सूयमींद्रः दास्यत्यात्मानमात्मने ॥१३॥

धन्योऽस्मि कृतकृत्योऽस्मि राघवेंद्रकृपाबलात् ।
नृहरिः श्रीरघुपतिः स्वीकरोत्वर्पितं मया ॥१४॥

इति हर्षगद्गदस्वरेण परमात्मानं संप्रार्थ्य नैवेद्यमर्पयामासुः श्रीसुयमींद्राः । महानीराजनं च समर्प्य रमाब्रह्मादिपूजां निर्वर्त्य श्रीपादा. श्रीमूलरामादिप्रतिमा संपुटप्रवेशनात्पूर्वं श्रीमूलरामदिग्विजयरामजयराम लीलादेवीकरार्चितश्रीभूदुर्गासमेतवैकुंठवासुदेवप्रतिमा पृथक् पृथक् करे धृत्वा तल्लक्षणानि कथयंतः भक्तजनेभ्यः संदर्शयामासुः । तदनु स्वयं विचित्रवर्णककौशेयांशुकप्रावरणसमये ताः स्तिमितानिमिषनयनैरवलोकयंतः प्रमोमुदिरे मौक्तानंदमनुभवंतः ।

सम्मिलिताश्च जनाः परमात्मदर्शनेन निवृत्तलौकिकसंगदुरितमात्मानं मन्यमानाः मोक्षपथमंगुल्यासाद्यमनतिदूरमित्यवेक्षिरे ।

देवानां संपुटीकरणानंतरं श्रीचरणाः परिचारकैः सह तीर्थगंधाक्षतादिसामग्रीसनाथैः अलंकारमण्डपमाजग्मुः दीपप्रकाशदर्शितशुचिमार्गेण । तत्र पंच श्रोत्रियविप्राः प्रत्यग्रस्नातधृतधौतवस्त्राः स्वे स्वे नियोजितविष्टरे समासीना. श्रीचरणानागतान् संवीक्ष्य झटिति समुत्तस्थिरे परिधानवासोदशामंगुलीभिः संकोचयंतः । गुरूपवेशनानंतरं हस्तांदोलनेन विदिताकूताः ब्राह्मणाश्चासांचक्रिरे स्वासनेषु । नारायण-संकर्षण-वासुदेव-प्रद्युम्न-अनिरुद्धसंज्ञकेषु पादप्रक्षालनानंतरं ब्राह्मणेषु तान् देवान् क्रमशः आवाह्य मंत्राक्षतार्पणेनासनार्घ्यपाद्याद्युपचारैः सपर्या कार्यकर्तृहस्तेन निर्वाहयांचक्रुः । प्रत्येकं शुचिधौतानि नूतनवस्त्रयुग्मानि सदक्षिणं तेभ्यो दापयित्वा-वासो धारणानंतरं गंधाक्षतादिभिरलंकृतेभ्यः उपविष्टेभ्यः श्रीमूलरामार्पितपुष्पमालाः दत्ताः आसंजिताश्च कण्ठे स्कंधावलंबं यथास्यात् । तदनु कदलीपत्रद्वयं प्रत्येकं प्रसारितं संप्रोक्षणेन विमलीकृतं च । तत्र सुमृष्टपक्वान्नानि भक्ष्यभोज्यलेह्यपेयानि द्रोणपूर्णघृतानि परिवेषितानि शुचिस्नातशिष्टब्राह्मणपरिवेपकैः ।

श्रीपादाः परिचारकैः करपुटनिहिततीर्थगंधाक्षतादिपूजाद्रव्यनिचितपृथुरजतकरकैः पुरोगामिभिः साकं निर्ययुः महावृंदावनसीधम् । तत्र श्रीगुरुसार्वभौमाणां अर्घ्यपाद्याद्युपचारैः गंधाक्षताद्यलंकारद्रव्यैः तुलसीपुष्पहारसुगंधपरिमलद्रव्यैश्च सावधानं भक्त्या पूजां समर्प्य रजतपात्रे परिवेषितपंचपक्वान्नादिभैक्ष्यं नानाविधफलानि जंबीर-पनस-चूतदाडिमबदरीजंबुद्राक्षाकदलीमुखानि · केशरपच्चकर्पूरादिपरिमलविमर्दोत्थकमनीयगंधवासितं हृद्यं सुभगशीतं गांगमंभः पानीयं कलधौतकलशपूर्णं श्रीगुरुसार्वभौमाय नरहरि-राम-कृष्ण-वेदव्यासाऽवासाय सकलज्येष्ठगरिष्ठयतींद्रवृंदवृंदावनाय, गुरो, कृपानिधे, अस्मद्वंश्योद्धारक प्रह्लादवरदनृसिंहप्रिय, मध्वमताब्धिवर्धनजैवातृक, अनुगृहाण मां स्वीकुरुष्व भक्त्या विसृष्टं भैक्ष्यलेशमिदम् । क्वाऽहं मंदमतिः अकिंचनचूडामणिः नि.स्व, क्व भवंतः पूर्णप्रज्ञकल्पाः जग-

द्गुरवः वेदांतसाम्राज्याधिपतयः लौकिकवैदिकलक्ष्मीपतिप्रियाः । न जाने पूजाविधानं । न वेद्मि अनुनयनयम् । नाऽपि निष्णातः उपचारविचारसरण्याम् । तथाऽपि तव पादमूलयोः मामकं सर्वस्वमर्पयितुमुत्सहे न किंचिदस्ति मत्स्वामिकम् । सर्वस्वामी श्रीहरिः भवदंतर्यामी सृजति रक्षति संहरति च जगदिदमतंद्रित । अत गुर्वंतर्गतमुख्यप्राणांतर्गतश्रीस्वामिनेऽर्पयामि । गुरुराजा प्रसन्नचित्ताः स्वीकृत्य सर्वमिदं सर्वस्वामिने श्रीहरये समर्प्य मामुद्धरेयुरितिभक्तिभरावनतकंधरः निबद्धांजलिः संप्रार्थये ।

यतिहस्ते जलं दद्यात् भैक्ष्यं दद्यात्पुनर्जलम् ।
तदन्नं मेरुणा तुल्यं तज्जलं सागरोपमं ॥

वटौ तु समदत्तं स्यात् गृहस्थे द्विगुणं भवेत् ।
वानप्रस्थे शतगुणं यतौ दत्तमनंतकम् ॥

यतिर्यत्र गृहे भुंक्ते तत्र भुंक्ते हरिः स्वयम् ।
हरि र्यत्र गृहे भुंक्ते तत्र भुंक्ते जगत्त्रयम् ॥

इति मन्त्रैः विदिततदाकूतसर्वस्वाः गुरवः श्री गुरुसार्वभौमाय हस्तोदकेन भैक्ष्यं समर्पयामासु । ततः श्रीपादाः श्रीहरिमुख्यप्राणगुरुभ्यः नवघृताक्तवर्तिपुजप्रज्वलज्ज्वालायमानार्तिक्येन मध्ये कर्पूरपिण्डेन प्रज्वलितेन महानीराजनं घटिकैकावधि आपादमस्तकं त्रिः मध्ये पंचकृत्वः हृदये एकवारमिति विध्युक्तक्रमेण समर्पयामासुः। जनसंमर्दः परित. परिवृत. दर्शं दर्श नीराजनविलासं तुष्टाव यथा कामं गुरुराजं आरक्तकौशयवास.परिधानं सौवर्णतंतुनिर्मितविचित्रचित्र खचितक्षौमकर्बुरदशासंपन्नोत्तरीयांशुकपरिच्छन्नं कार्तस्वरमयमुखकरचरणादिपौरुषाकारकवचभूषितं प्रफुल्लसुरभिसुगंधि बिसजकमाल कल्हाररसेवंतिकामल्लिकाजातिकुसुमहारैः अनेकगुणैः परिवेष्टितं गलस्कंधफलकयो. तुलसीगुच्छकमलकिंजल्कपुंजपरिकल्पितहारैः समलंकृतं करधृतजपमालकमण्डलुं दरनिमीलितनेत्रं हृदि न्यस्तचारुतरनृहरिमूर्तिपुरुरूपध्यानासक्तचित्तं नयनामृतरसायमानं श्रीराघवेंद्रगुरुसार्वभौममवलोक्य को नाम नर. मानवभौमदेव; आत्मन्यानंदसदोहं

नाऽधिगच्छेत् । वैकंठलोकायते नन्वयं मन्त्रालयः श्रीप्रह्लादावतारगुरुसार्वभौमसन्निधानविशेषेण । धन्येयं भारतभूमिः या निधानं तपस्विजनस्य खनिर्धर्मसंततेः आकरः वीर्योदार्यधैर्यादिगुणानां या च राजर्षिदेवर्षि मुनियतींद्राणां जनूंषि व्यतनोत् ।

तदनु श्रीचरणाः श्रीवादींद्रसुधर्मेन्द्रसुव्रतीद्रकर्मदिभ्यः तीर्थगंधाक्षतादि दत्वा भक्त्या भैक्ष्यं समर्पयामासुः । तदनंतरं यथाक्रमं मगलनीराजनं दर्शयामासुश्च भक्तवृंदहर्षनिनदप्रतिघोषमुखरिते दिग्वलये ।

तत. श्रीपादाः अलंकारमण्डपमागत्योपविष्टेभ्यः पंचसंख्याकेभ्यो ब्राह्मणेभ्य. यथाक्रमं त्रिवारं तीर्थ पादोदकं मन्त्राक्षताश्च दत्वा भोजनाय परिषेचनं कर्तुमनुज्ञां ददुः । हस्ते तीर्थ दत्वा तत्समये श्रीमूलरामचंद्रमुख्यप्राण-गुरुसार्वभौमेभ्यः कर्पूरपंचवर्त्यार्तिक्यं नीराजनं प्रदर्श्य तदेव ब्राह्मणेभ्यः दोलयामासुः भक्तिभरेण दण्डकाष्ठं हस्ते धृत्वा श्रीगुर्वतर्गतभारतीरमणमुख्यप्राणांतर्गतश्रीमूलरामचंद्रात्मकश्रीकृष्णार्पणमस्तु इति उच्चैर्व्याजह्रुःश्रीपादाः । ततः ब्राह्मणाः आपोशनं प्राश्य भोजनायोपचक्रमिरे । श्रीपादाः सावधानं भोक्तव्यम् मा त्वरध्वमिति विज्ञाप्य सम्मिलितभक्तजनेभ्यः शेषमन्त्राक्षता. अन्वगृह्णन् प्रदाय यथायथं । तत. श्रीस्वामिन. दण्डकाष्ठपूजां कृत्वा स्वयं तीर्थं प्राश्य ब्राह्मणसुवासिनीभ्यः तीर्थं प्रदातुं तीर्थमण्डपं प्रति निर्जग्मुः ।

अलंकारब्राह्मणेषु साक्षाच्छ्रीलक्ष्मीपतिः सपरिवारं अनिरुद्धप्रद्युम्न संकर्षणवासुदेव नारायणव्यूहरूपेण सन्निहितः भक्तेभ्यः सकलाभीष्टानि दातुं प्रसन्नमुद्रः समुत्सुकते । तदा गुरुप्रसत्तिमभीप्सवः सर्वे साधुभक्ताः उपविष्टब्राह्मणेभ्यः साष्टांगं प्रणम्य भूरिदक्षिणादिकं दत्वा गुरुसार्वभौमप्रसादं प्रार्थयंते । सुगंधद्रव्याणि कर्पूरार्तिक्यादीनि समर्पयंति च गुरुमहिमानमुच्चैर्गृणंतः गायंतश्च । नूनं तद्वैभवं गिरां गृणनमतिवर्तते । भक्तिरसप्रवाहः नृत्यगानवादनाद्युपचारैः उद्वेलः प्रसर्पति गुरुराजभव्यहर्म्यप्राकारे । भक्तपुरुषाश्च प्रेमरसप्रवाहपावितात्मान. संत्यक्तप्रावरणपरिच्छदाः विस्मृतवहिरर्थभावाः मत्तोन्मत्तवत् श्रीहरिगाथाः संगीतकेन

करतालस्फालनेन ढक्कामृदंगताडनेन वीणा-तम्बूरिवेणुनादेन सनाथाः गायंति निस्त्रपमटाटंतश्चतुर्दिक्षु भृशं भ्रमंतः।

ब्राह्मणेभ्यः परिवेषितानि पक्वान्नानि शाकासहस्राणि भक्ष्य-भोज्यानि शुष्कार्द्रविविधफलशकलानि घृतभर्जितसेमापायसानि शर्करापोलिका-लड्डू-बडे-व्यंजनपदार्थाश्च न गणनागोचरा भवति। अहो तत्तत्पाकाभिमानिदेवताः स्वकौशलं प्रदर्शयंत्यः गुरुसार्वभौमांतर्गतनृहरिसेवाममायामनुष्ठातु विविधभक्ष्यभोज्यलेह्यपेयरूपेण सन्निहिता भासंते।

तदा स्फुरत्प्रतिभः कविरेकः गायति प्रेमरसाप्लुतहृदयः।

धन्या भारतभूमिरुद्धविभवा धात्री महायोगिनाम्।
यत्र श्रीहरिरात्मनीनमहसा व्याप्नोति चिच्चेत्यकम्॥
देवाः सज्जनचोदने धृतवपुर्व्यापारभाराः सदा।
व्यक्तं भांति समुत्सवेषु नटवच्चर्यां चरंतो मुदा॥१५॥

किं नारदस्त्वरितमेत्य निवृत्ततृष्णः।
भक्तस्य दैत्यतनुजस्य नृसिंहदत्तम्॥
साम्राज्यवैभवमवर्ण्यमनन्यलभ्यं।
दृष्ट्वाभिनंदितुमिह स्वयमागतो नु॥१६॥

केचिज्जनाः भावरसैः पदानि।
गायंति नृत्यंति हरेर्गुणौघम्॥
भक्त्या गृणंतो गुरुराट्चरित्रम्।
मोदाहृता ग्रस्त इव भ्रमंति॥१७॥

भुक्त्वोत्तस्थुर्ब्राह्मणा भुक्तपीताः।
भक्ताश्चक्रुः कायमुच्छिष्टपात्रे॥
व्यालोल्याग्रे धन्यमात्मानमद्धा।
मन्यंते संपश्यतां सज्जनानाम्॥१८॥

सायं सम्मिलिता भक्ताः अयुतादुपरि संख्याताः श्रीगुरुसार्वभौमाणां सायंतनोत्सव सिंहवाहनस्योपरि प्रह्लादरूपेण श्रीगुरुराघवेंद्रतीर्थानां रजतविग्रहमुपवेश्य प्राकारे समंततः सवाद्यवैभवं नीयमानं



दैत्यप्रासादतूणातटहतिकुपितः संप्लुतः श्रीनृसिंहः ।
प्रह्लादं ह्लादयन् तद्दैत्यवपुरदलत्तीक्ष्णशस्त्रैर्नखाग्रैः ॥
तत्कृत्यं वक्तुकाम. मृगरिपुवपुषः पृष्ठभागे, न्यधात्किम् ।
भक्तं प्रह्लादरूपं नरवरमधुना साधयन् स्वात्मरूपम् ॥

(प. १४७ श्लोक १९)

द्रष्टुकामाः निर्जग्मुः गुरुभवनात् संघशः ।

श्रीगुरुसार्वभौमेभ्यः श्रीसुयमींद्रतीर्थानामाध्यक्ष्ये अर्चकवराः मंगलार्तिक्यं समर्पयामासुः गुरुसार्वभौम, गोविंद गोविंद इति उच्चैः स्वरेण निनदत्सु जनेषु । भक्ताः जिह्वाग्रेणाप्पणाचार्यकृतगुरुस्तोत्र पठंतः एकस्योपरि अपर इति हस्ताहस्ति पादापादि अतिलापातसंबाधं मिलित्वा श्रीसिंहवाहनारूढं गुरुमहमहमिकया गीतैः स्तोत्रैः संभावयितुं पुरतः प्राधावन्। केचित्स्खलितगतय भुव्यपतन्नशक्नुवंतः समुत्थातुं दण्डपातेन गुरुनामाम्रेडनेनात्मानं तर्पयंत । अन्ये पुनः सरभसमुत्थाय हस्तमुत्क्षिप्य 'राय बारो नी कायबारो' (हे राय, आगच्छ रक्ष मां) इति गुरुराजमुच्चध्वनिनाऽऽकारयंतः तद्विग्रहं प्रकामं पश्यंत अक्ष्णोः फलमवापुर्निरपह्नवं। संघश दासवर्याः प्रथमश्रेण्यां स्थित्वा संगीतनृत्यवादनोपचारैः समतर्पयन्गुरुवर। जनसंमर्दं द्विधा विच्छिद्य समंतान्निर्मितविस्तारिमध्यपथे बाहाबंधेन शिष्यप्रतिमल्लैरारक्षिते श्रीपादा. गुरुराडभिमुखाः कंठमुद्यम्य दृष्टिमर्पयंतः प्रत्यक्चारेणापसर्पंतः हस्तद्वयेन चामरे उपवीजयंतः भक्तिभराक्रांतहृदयेन सानंदाश्रूणि विमुञ्चंतः उत्सवं मंदं मंदं पुरतश्चारयामासु ।

अहो धन्योऽयमात्मा यन्मयाऽक्षीणसुकृतेन प्राग्जन्मन्यनुष्ठितेन सिंहवाहनारूढः श्रीप्रह्लादात्मा गुरुसार्वभौमः साक्षात्कारविषयतामानीतः। नूनं हिरण्यकशिपुपुत्रेण सत्यसधेन विष्णुभक्तेन अनघप्रशांतेन प्रह्लादेन पाठशालायामुपदिष्टेषु दैत्यबालकेषु अहमपि तत्र सन्निहितः तत्कृपाकटाक्षक्षेपमंदाकिनीलहरीसंगसुखमनुभवन्नासमिति निश्चप्रचं। अन्यथा कथमिदानी तद्दर्शनमात्रेण प्रमोदाश्रुधाराऽविरतमारान्निःसरेदक्षिपटलादकुटिलम् ।

सिंहवाहनारूढ श्रीगुरुसार्वभौमं निर्वर्ण्य कविरेकः कृती गद्यपद्यनिर्माणधुरीणः काव्यमिदं चमत्काराकूतगर्भितं जगौ—

दैत्यप्रासादतूणातटहतिकुपितः संप्लुतः श्रीनृसिंहः ।
प्रह्लादं ह्लादयन् तद्दैत्यवपुरदलत्तीक्ष्णशस्त्रैर्नखाग्रैः ॥
तत्कृत्यं वक्तुकामः मृगरिपुवपुषः पृष्ठभागे न्यधात्किम् ।
भवतं प्रह्लादरूपं नरवरमधुना साधयन् स्वात्मरूपं ॥१९॥

दैत्यः प्रह्लादमारादसुहरमृगराजास्यमूलेऽक्षिपत् प्राक् ।
हंतुं तन्मंतुहंता कलियुगविभवं राघवेंद्रस्वरूपं ।।
पृष्ठेऽवस्थाप्य याति प्रथितपृथुबलो वन्यसत्वैकसारः ।
को न स्याद् भुग्नपृष्ठः हरिशरणमनःक्षोभयन्नुग्रकर्मा ।।२०।।

सुजनकुमुदचंद्रः निष्कलंकः स्वधाम्ना ।
शशकलितनिजांगं व्रीडयत्यद्ज मद्धा ।।
हरगिरिसुरशैलो यद्यशः स्पर्धयाऽलं ।
जित इति धवलिम्ना दुंदुभिध्वान आह ।।२१।।

अपर· प्रोत्सर्पद्गूर्जितकुतूहलकलित· वामपादमुन्नमयन् उच्छ्रित-दक्षिणबाहुदण्ड. दण्डकेन नृसिंहप्रसादभाजनं सुजनावनं प्रह्लादावतारिण गुरुवरेण्यमुपश्लोकयांबभूव ।

तत· श्रीगुरुराजप्रतीकं रजतशिविकातः वृंदावनसन्निधौ स्थापयित्वा अर्चकै. महानीराजनं प्रदर्शितं श्रीपादानामाध्यक्ष्ये । स्फीत· सम्मिलितो भक्तवर्ग· उच्चै· स्वरेण गुरुस्तोत्रं पठन् कृतकृत्यमात्मानं मेने ।

मंत्रपुष्पोपचारे वेदपठनं शास्त्रार्थविचारः संगीतगानं इत्यादिका सेवा यथाविधि निरवर्त्यत । पुनर्नीराजनावसितौ श्रीपादाः भक्तेभ्य यात्रिकेभ्य· मन्त्राक्षतावितरणेनाऽन्वगृह्णन् ।

रात्रौ प्रह्लादवरदश्रीनृसिंहप्रादुर्भावनाटकं भक्तिरसभासुरमवलोकयितुं सर्वे जना. किंचिद्विश्रम्य सायंतनान्हिकं समाप्य नाटकगृहं प्रति प्रस्थिताः ।

श्रीपादा अपि यथाऽवसरं पण्डितैः परिचारकैश्च सार्धं श्रीगुरुसार्वभौमाणा पूर्वावतारस्य प्रह्लादस्य महिमानं द्रष्टुं नाटकगृहमागताः ।

# श्रीप्रह्लादवरदनृसिंहप्रादुर्भावनाटकम्

## नांदी

यत्रोद्यद्रविबिंबबंधुरघृणिश्रेणीमृणालायिता ।
पूर्णाब्जद्युतिसारसारसमहो म्लानायितं नित्यदा ॥
शुद्धोरुद्युति वीर्यसारमहिमा नारायणः पूर्णभाः ।
भात्येवाद्भुतदंदशूकशयनः तत्रास्ति कोऽन्यः प्रभुः ॥२२॥

(नांद्यंते जयविजयौ प्रविशतः)

जयविजयौ—अनवरतकल्याणपरंपरानिधान दुःखसंस्पर्शशून्य सत्वरजस्तमोविदूरमिदं वैकुण्ठनगरं श्रीलक्ष्मीनारायणविहारमंदिरं धन्यैर्ब्रह्मादिभिरप्यप्रवेश्यप्रदेशं विभाति भानुसहस्राकुण्ठतेजसा निष्कंटकमविपल्लवम् ।

न खलु दोषकलुषितमनीषा. अरिषड्वर्गप्रतिहतसत्वगुणप्रसराः तपस्विनोऽपि निष्ठुरनैष्ठिकब्रह्मचर्येण निर्जितमनोवृत्तयोऽपि निर्गुणे गुणाकरनारायणनिवासे गतागतलाभायावकल्पंते । अतः नियुक्तावावां महाप्रभुनारायणलोकप्रवेशं निषेद्धुं तद्दर्शनकामनयाऽऽगतानां प्राकृतलोकसंचारिणां देहभाजाम् ।

प्रभुनियोगनिघ्नैर्जनैर्भवितव्यमप्रमत्तैर्नूनम् ।
विटपिविटपलंबा लतेव मालती विलोला ॥२३॥

(ततः प्रविशंति लक्ष्मीपतिदर्शनाय सनकसनदनादयश्चत्वारो महर्षयः)

सनकादयः—अरे, द्वारमपावृणुतम् त्वरितमितरातनयमातुरतयोत्कलितचित्ताः आसादयितुमागता. कातरतया । मा निरोध्य । त्वरितं प्रवेशयतम् ।

द्वारपालकौ—नतरामर्हंति भवंतो विष्णुविष्टरं प्रवेष्टुं संसारिपुरुषदोषकषायकलुषितरूपाः । तथैव तिष्ठत ।

ऋषयः—(पदाहतसर्प इव दौवारिकनिरोधममर्षमाणा. कोपावेगकम्पितगात्रयष्टयः रोषकलुषितचक्षुषाऽग्निकणान् वमंत इव

रभसा विवेकवैधुर्येण विससृजुः शापसंतमसं विज्ञानविलोपनक्षमम्) भोः मत्तौ दौवारिकौ युवां पदात्प्रच्युतौ प्रभुविरहविवर्णौ त्रिषु जन्मसु दैत्यासुरमानुषभावेन भुक्त्यात्तजन्मानौ निजनाथानाथनतांतौ वर्तेताम् जयविजयौ प्रतिजन्म नारायणावतारेण वध्यमानौ अते समुज्जृम्भितभक्त्या विष्णुप्रसादेन स्वस्वरूपमाप्नुय.तामिति ।

**जयविजयौ**—अहो ! नष्टं नो जीवितसर्वस्वं । आवयोर्मौलकुलमूल जालकं शापक्षुरप्रेण निकृत्तम् । हरिभक्तिरसकूपायितं मृदुमसृणकमलमृणालायितं हृदयनालं ऋषिरोषशोचिष्केशेन संप्लुष्टं । देववियोगेन नितांतं ताम्यत्यस्मच्चित्तम् । किं कुर्मः । प्रभुरेव नौ क्लृप्तसमये स्वलोकमानेष्यतीति जीवातुवचनं नौ प्राणान् धारयिष्यति ।

इति आलोचयंतौ तावुभावपि झटिति दौवारिकावस्थासंस्कारं सर्वथा नामावशेषं विलोप्य दैत्यकुलसहजं विष्णुविद्वेषं मनसा वचसा कर्मणा च निरूपयितुमारेभाते दैवगत्या मानुषचितातिक्रांतया ।

सद्यस्तौ जयविजयौ शापस्वधितिविशकलितचित्तवृत्ती जज्ञाते महीतले हिरण्यकशिपुहिरण्याक्षनामानौ दैत्यौ कश्यपादितिसंभूतौ ।

हिरण्याक्षः देवमृधे संहृतः श्रीनारायणेन क्रोडरूपेण तन्निमित्तं तदग्रजः हिरण्यकशिपुः विष्णुध्वंसे मतिमकरोत् । दिक्षु विदिक्षु च विष्णुप्रतीकं पश्यन् तन्निर्वापणे कटिक्षिप्तकौक्षेयकः करधृतनिस्त्रिंशः नैस्त्रिंश्येन हिंस्रशीलः सर्वान् विष्ण्वधिष्ठानशंकया संहर्तुं प्रारभत । आज्ञापयामास च भृत्यान् दूतान् सेनानीकपतीन् मण्डलेश्वरांश्च ।

**हिरण्यकशिपुः**—भोः अस्मत्परिचारका दूताः प्रणिधिवर्गा. । शृणुत सादरं मदीयं वचः । यदयं जाल्मः कितवः विष्णुः मम हृदयरसायनं प्रीतिभाजनं भ्रातरं हिरण्याक्षं निरपत्रपः निजघान कूटयुद्धे । अत. तन्निष्कृतिः विष्णुनिषूदनेन विना न पर्यवस्यति । सद्यस्तद्विघात एव मम हृदयशल्यमुच्छेत्तु-

महंति। अतः दृष्टिपातं वैष्णवाः यागीयपशुमारं संज्ञपनीयाः। वेदाः विष्णूद्रेकपरायणाः समूलमुत्सादमानेतव्याः। विष्णुमंदिराणिविध्वंसगोचराणि भवंतु। अवहितैः सर्वथा सर्वैरेकैकैरनवशेषमिदमनलसं निष्पादनीयम्।

एवं अनुल्लंघ्यशासनमाघोष्य स्वयं घोरतपसा हिरण्यगर्भं परितोषयन् मंदरद्रोणी प्रस्थित पूर्णबलमपि विष्णुं निरवशेपयितु स्वस्याप्रधृष्यतां केनाऽपि नरेण वानरेण वा दिवानक्तं वहिरंतर व्योम्नि धाम्नि वाऽवध्यतां च संपादयितुम्।

देवा.-अयमद्य सुभग. संधिरुपस्थितः दत्यानुच्चाटयितु सुरलोकसाम्राज्यपदात् हिरण्यकशीपोरसमवधाने तपश्चर्यायै मंदरद्रोणीं प्रति प्रस्थितस्य। कुंतपाशखड्गक्षुरप्रपाणिभिरस्माभिः समरांगणे दैत्यानीकं सुमुत्सार्य तच्छिरांसि कंदुकीकृत्य तत्कबंधान् भूतप्रेतपिशाचसात्कृत्वा देवलोकः पुनरिंद्रे विडौजसि प्रत्यावर्तयितव्यः। (इति संकल्प्य समीके दैत्यान् विद्रावयामासुरादितेयाः।)

गुरुविरहितछात्रनिलयवत् राजवर्जितप्रजावत् भर्तृशासनातिक्रांतभार्यावत् दैत्या. परस्परं विहिसंतः विगतसत्वा. कादिशीका. संवृत्ताः। परमचिरादेव हिरण्यकशिपुश्चीर्णतपा. तपस्तुष्टाद्ब्रह्मणः सकाशाद्यथेष्टं वव्रे वरान्।

यथा—भूतेभ्यस्त्वद्विसृष्टेभ्यः मृत्युर्माभून्मम प्रभो।
नांतर्वहिर्दिवानक्तमन्यस्मादपि चायुधैः॥
न भूमौ नांबरे मृत्युर्ननरैर्वा मृगैरपि।
व्यसुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः॥
अप्रतिद्वंद्वता युद्धे ऐकपत्यं च देहिनाम्।

तथास्त्विति चतुर्मुखादधिगताजेयवर. मदविघूर्णितलोचन· दर्पादवधीरितपरपराक्रमः उन्मथितरिपुबलावलेपः समुत्सिक्त संक्रन्दनात्स्वाराज्यमाचिच्छेद। देवाः सेंद्रा. प्राणपरोप्सया लिल्यिरे गिरिकोटरेपु दरीकंदरेपु सांद्रतमोऽवलीढमहीकुहरेषु। परमुन्मीलिताक्षाश्च सानुक्रोशा. चतुर्मुखमुखराः क्षीरसागरशायिनं नारायणमासाद्य धृतव्रताः

शरणं वव्रजुरस्तुवंश्च ।

पुरा रक्षोहत्यै विधिभवमुखाः संशितधियः ।
ययुर्देवा विष्णुं श्रुतिहरहिरण्याक्षभयत ॥
शरण्यं तद्वाक्यैर्धृतिमगुरुदारैरथ मुदे ।
सतां रक्षो हत्वा जगदखिलमावेदनुदिनम् ॥२४॥ इति

नारायणः—

तुष्टोऽस्मि घोरतपसा तव वत्स काले ।
हंतास्मि दैत्यकुलमत्र न जातु शंका ॥
भूत्यै सतां स च हिरण्यवपुर्दुरात्मा ।
व्यापाद्यतेऽथ सगणो हरिणा मयैव ॥२५॥

इति प्रकटितनिजसंकल्पं नारायण विज्ञाय देवताः समुद्धृतहृदयशल्याः समाश्वसिरे विगतशङ्काः । स्वस्वावसथं च निर्जग्मुः पुरतः स्वस्तिकालमेव प्रतीक्षमाणाः ।

## द्वितीयः प्रवेश.

(ततः प्रविशति प्रह्लादगुरुर्नारदः)

नारदः—

नारायणं निजगुरुं जगदार्तिनाशम् ।
वंदे परात्परमनन्यगतिं सुराणाम् ॥
यच्छासनानतिगतिश्चलतोद्धतेजाः ।
सूर्योऽथ तारकगणाः परिवर्तयंति ॥

अहमद्य महाराजाधिराजस्य कश्यपसूनोर्हिरण्यकशिपोः राजधानीवृत्तांतमधिगम्य, प्रशांतस्य भागवतशिखामणेः प्रह्लादस्य पितृदत्तदण्डं निवारयितुमुपायमुपकल्पयितुमुद्यतोऽस्मि । पुरा किल देवदानवसम्मर्दे पराजितेषु दानवेषु कयाधूस्तन्माता स्वर्गाधिपतिना संक्रंदनेन देवेंद्रेणापहृत्य नीयमाना मध्येमार्गं साम्नाऽनुनयेन चेंद्रहस्तान्मोचिताऽस्मदाश्रमे

विस्रब्धमुपवेशिता। तदा चिरप्रचीयमानगर्भभरप्रपीडिता तपस्विनी मत्तः इच्छासुखप्रसूतिवरं संपाद्य कतिपयवर्षाणि सुखं चिरमुवासाश्रमपदे प्रसूतिसमयमवेक्षमाणा। तत्रांतरे मया कथाविनोदेन सांत्वनवचसा च समाश्वासिता सा गर्भभरालसा कयाधूः जगदण्डमण्डलपुण्डरीकप्ररोहनिदानं सृष्ट्याद्यष्टकर्तृत्वादिगुणगणाढ्यं विष्ण्वपरनाम ब्रह्म दयाघनं आश्चर्याणां आश्चर्यरत्नमित्यादि विविधलीलाविनोदजालं विवृण्वता घृणार्णोधिगुणप्रपंचनेन। तदा मातृगर्भकर्णिकधपिहितकवाटपुटपंजरे शयानः स देवावतारः शिशुः महाभागवतललामत्वात् तत्सर्वं भक्त्याऽश्रृणोत् मननेन धारणेन च हृत्कुहरनिगूहितं रत्नमिव प्रियतमं गुणगणार्णवं ब्रह्म न विसस्मार गर्भान्निसृतः महीतलस्पर्शेन जनिमानपि। स एव बालः विष्णुभक्तः सन् श्रीहरिलीलां सदा गायन्नास्ते प्रह्लाद इति प्रथितः। क्षणलवत्रुटीमपि श्रीहरिचिंतनेन विना मुधा न यापयति सुश्लोक्यः सुगृहीतनामधेयः। परं हिरण्यकशिपुः शापनिबंधनहरिवैरभरजडीकृतचेतनः श्रीहरिगुणानुध्याने रतमपत्यं भक्तप्रह्लादं नाभ्यनंदत्। प्रत्युत प्रदिद्विषे तं निगूढभ्रातृव्यभावेन प्रसृमरमुरारिद्वेषेण च। भृगुपातनं विषप्राशनं वृश्चिकदंदशूकसंदंशनं भटैर्निघृणैः त्रिशूलशल्यासिधाराक्रांतनैर्मर्मच्छेदनं इत्याद्यासुरहिंस्रचेष्टाभिः हिंसति स्म निश्चेष्टयति दण्डताडं ताडयति पशुमारं मारयति स्म च।

एवमपघृणैर्यमभटैरिव मृत्युदूतैर्विहिंसितोऽपि निर्विकारः स बालकः जडभरत इव चण्डिकासदनेऽसिलतया शिरश्छेदनायोपवेशितः स्वमहिम्नि प्रतिष्ठितस्य प्रकृतिविदूरस्य हरेर्लीलामंतर्हृदि साक्षात्कुर्वन् विगतात्माभिमानः ममताविदूरमतिमान् नरीनृत्यति गायति तुष्णीं स्थास्यति निर्विकल्पसमाधिसुखमनुभवति विच्छिन्नकामकर्मग्रंथिः मुक्त इव श्री हरिसन्निधौ वैकुण्ठे। अहो आश्चर्यं। क्वाऽयं पञ्चहायनो मुग्धशिशुः। क्व नाम तपस्विभिर्योगिभिरपि शतजन्मसु महीतलमात्रस्पृष्टांगुष्ठमात्रक्षिप्तगात्रभरैः विगताऽहारनिद्रैरपि नावाप्तिसुलभ अव्यक्तं सत्यं ज्ञानमनंतं ब्रह्म। नमो महद्भ्यः नमोऽर्भकेभ्यः। स्वस्त्यस्तु ते प्रह्लाद आह्लादघनानंदसदन। (इति मुहुर्मुहुः श्रीहरिमायाविलासमनुसदधानः निमीलितलोचनः हर्षाश्रुधारा साराभिवृष्टभूभूधरो देवर्षिर्नारदः हृष्यत्पुलक कंटकितिगात्रः नर्यनर्त्यत्।)

## तृतीयः प्रवेशः

## महाराजमहापाठशाला

**हिरण्यकशिपुः**—अयि गुरव. राजकुमारमिममक्षरपरिचयमारभ्य राजनीतिशास्त्रपरिणति यावत् सकला विद्याः शिक्षयितुमभ्यर्थ्यते भवंतः। सर्वथा नाऽन्यत्र तस्य रतिर्विधावतात्। अस्मत्कुलमलंकरिष्णुरयं शिशुर्वर्धतां भूयसा श्रेयसा आन्वीक्षिकीपरिणतिप्रभावेण निष्कंटकां पृथिवी परिरक्षितु प्रकाममभिपोषितशक्तित्रयः सन्। [इति विसंवादाक्षमामाज्ञामश्रावयत्।]

**अध्यापकाः**—राजाधिराज, वहुपराक्, पादमूलमनुशिष्टा वयं भट्टारकाऽऽज्ञप्तिमनुवर्तामहे (इति व्यजिज्ञपन्)

यथाकालं प्रह्लादाय लघुपाठान् पाठयित्वा नीतिशास्त्रशिक्षणे प्रवृत्ता. शण्डामर्कगुरव। प्रह्लादस्तु बटुभिर्वयस्यैः समं क्रीडन् धावन्नश्नन् श्वसन् भुञ्जन् जगन्नियन्तार नारायणमेव मनसि ध्यायति स्म। न बाह्यविहारव्यवहारेषु रति दधौ।

**शिक्षका**—प्रह्लाद, अस्माभिरुपदिष्टं नीतिशास्त्रमसकृदावर्तय। अर्थशास्त्रप्रक्रिया च यथावोधमनुशासिता। ता वयस्यैः साक गुणीकृत्यास्मत्सन्निधौ उररीकुरु।

**प्रह्लादः**—मान्या। गृहीत भवदभिहितं समीहित। परं न रोचते मह्यं अज्ञलोकमनोज्ञं त्रिवर्गोपपादन। द्वंद्वारामाः खलु नश्वरफलकेषु धर्मार्थकामेषु जीवितसर्वस्व व्ययीकृत्य। निरतिशयशाश्वतसुखमलभमाना व्यथंते ससारवर्त्मस्वात्मानं क्षिपतः। इदमसाधु शिक्षित हेय निंद्यमेव भूतिकामैः साधुजनैः।

**राजगुरवः अध्यापकाः**—(प्रह्लादमनुवर्तयितुमक्षमा किंकर्तव्यविमूढाः राजदण्डत्रस्ताः मनस्यालुलोचिरे।) नूनमयं बालः निसर्गभक्तिमान् विष्णौ। अविकारि चेतोऽस्यान्यथयितु न पार्यंते मानवेन दानवेन वा। राज्ञे आवेदयामः वस्तुयाथातथ्यम्। (इति चिंतयंत. स्वगृहं गताः व्यापृताश्च गृहमेधीयकर्मसु।)

अत्रांतरे आचार्याणामसन्निधौ प्रह्लादः प्रेम्णा वयस्यानर्भकानाहूय श्रोतुकामानाह श्लक्ष्णया गिराताननुजिघृक्षुः। हे बालकाः— गुरूक्तमनर्थोदर्कं शिक्षितं मा सर्वथा गृह्णीध्वम्। गुरूक्तमपि न ग्राह्यं यदनर्थेऽर्थकल्पनम्। न जातु बिलेशयफणच्छाया कुशेशयशयनसंवाससुखमावहति। नापि तरक्षुकुक्षिनिक्षिप्तः हरिणशिशुः जननीस्तन्यपानाप्यायनसुखमश्नुते। संसारांधकूपे खद्योतमिव, विद्युल्लतेव चञ्चला निमिषमात्रावस्थायिनी निबिडवारिवाहकालिमावलीढतमिस्रायां, क्षणविध्वंसिसुखं दुःखसहचरि, कस्य नाम विवेकिनः चेतसि तृप्तिमातन्वीत। वयस्याः माऽऽयुषः प्रमोषः परिष्कार्यः शेमुषीमता सुखलवमृगमरीचिकानुसरणायासेन। सुखं वा दुःखं न मानुषपौरुषमवलम्बते। क्षराक्षरातीतः पुरुषोत्तमः श्रीलक्ष्मीपतिः नारायण एव सकलजगन्नियंता समुज्जृम्भतेऽप्रतिहतप्राभवेण समुच्छ्र्येण।

**सृष्टिः स्थितिः संहृतिश्च नियतिर्ज्ञानमावृतिः।**
**बंधमोक्षौ च पुरुषाद्यस्मात्सहरिरेकराट्॥**

इत्यादिवचनावसितं प्रमेयं न विसंवादमर्हति। अल्पेचास्मिन्नायुर्मनि शैशवमज्ञानेनापगच्छति। यौवनं रूपलावण्यमदेन व्यवायेन स्त्रीप्रसंगेषु विहारेण व्ययीक्रियते। वार्धक्यं चाधिव्याधिपीडया शरीरवैक्लव्येन दुर्बलतया कार्याक्षमं विशीर्यते। आयुषोऽर्धं निशाया स्वापे मदनकेलीकलायां च विस्रंसति अविज्ञातगत्या। न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते। अतः ब्रह्मावबोधधिषणं मानुषं जन्म संप्राप्य क्रीडांधा मा प्रमाद्यथ। कौमारे एव भागवतान् धर्मानाचरेत्प्राज्ञः। अर्थशास्त्रज्ञः राजनीतिकोविदः कथं नाम दैवसंकल्पितमन्यथयितुं प्रभवति। कामक्रोधाद्यरिषड्वर्गदुर्गायितेऽस्मिन्संसारसर्गे निशितविरक्तिहेतिसनाथेन मतिमता शत्रुयोधान् विद्राव्य विवेकशस्त्रेणाक्रम्य रिपुबलं हरिमंदिरसंदर्शनानंदानुभवपटुता संपादनीया निस्तंद्रेण पुरुषेण। दैवं संपद्विपत्पदं। अतः शैशवे एव मुकुंदचरणं शरणं व्रजेदतिकामः। इति मुग्धमनोहरप्रेमरससंप्लुतवचःसारं सर्वे सतीर्थाः बालकाः प्रह्लादमुखारविंदन्यस्तहृदयेक्षणाः अभिनंद्य जगृहिरे ललाटंतपतपनतापेन शुष्कतालवः पेलवाः पिपासवः गीर्वाणतरंगिणीस्वादुजलमिव पीयूषसदृक्षम्। तत्यजुश्च गुर्वनुशिक्षितं हालाहलमिव जगद्ध्वंसनिदानं।

गृहमेधीयं कर्म निर्वर्त्य आचार्याः निवृत्ताः पाठशालां । तत्र छात्राः प्रह्लादस्य परितः सम्मिलिताः तं गौरवेणाभिनन्दंतः अवलोकिताः आचार्यैः भयविह्वलचेतस्कैः । प्रह्लादं च मुकुंदध्यानार्पितहृदयमनिवर्त्यसकल्पमवेक्षमाणाः परमुद्वेजितहृदयाः कर्तव्यमौढयेनाऽनवगतपूर्वापरीकारा दैत्याधिपतये हिरण्यकशिपवे सोद्वेगमसूसुचन्यथादृष्टं श्रुतं च ।

## चतुर्थः प्रवेशः

### (प्रह्लादः श्रीहरिलीलां गायन्नागच्छति)

नन्दनन्दनमवन्ध्यतेजसम् ।
गोकुलोद्धरणनिष्ठितभावम् ॥
कुंददंतमधरीकृतमारम् ।
सुंदरं हृदयमंदिरमीडे ॥२६॥

हिरण्यकशिपुः विष्णुगुणगाननिवेशितहृदयमाकामं सुस्वरं गायंतं भक्तिरसवाहिन्यवगाहनप्लावितचित्तं निभालयन्नुत्तम्भितपृथुद्वेपचर्यः कोपच्छटाच्छुरितकपायितलोचनः प्रस्फुरदधररदच्छदः चलद्गात्रः चक्षुष्पटलतटात्क्रूपीटयोनिकणान् वमन्निव कटाक्षक्षेपैर्दिग्वलयं दहन्निव घनगर्जितस्पर्धिना कण्ठीरवहुकारसपत्नेन कठोररवेणाजीगदत् ककुबंतरालं निनादयन् ।

**हिरण्यकशिपुः**—अरे बालक, स्तनंधय, पोत, अस्मत्कुलदेवतां पार्वतीपतिं महादेवमपहाय गोपालबालकमकृतज्ञं वन्यकुलटाटं किमिति स्तौपि गायसि गृणीपे निरपत्रपम् । कुलपांसन, अवेहि मम कटाक्षक्षेपमात्रकवलितानसीमान् भूमण्डलप्रदेशान् यत्र मम शासनमनुल्लंघ्यमतिचकास्ति । मम शासनमतिवर्तमानस्त्वं परुपदण्डैर्विहिंसितोऽपि न क्षुभ्यसे । न लोमाऽपि हीयते ते भृगुपातपातनेऽपि । कटुपाटच्चरघोरदंदशूकैर्दंशितोऽपि हसद्वदन एव लक्ष्यसे । कस्ते रक्षिता समापतत्सु विपद्गणेषु पितृप्रसादविदूरस्य । मारणाभिचारणप्रयोगपटुषु निरतरं स्वविद्यावैदग्ध्यमविसंवादि फलमुपदर्शयत्स्वपि न तेऽनुभावः आखणाश्मसमः प्ररूढमूलो विशीर्यते । न धैर्यमवसीदति । सत्वमुत्तंभितं एवाभिवर्धते ।

[इत्यनन्वितं मुधा वाग्जालमपसारयति जिह्वाग्रात् हिरण्यकशिपुः ।]

**प्रह्लादः**—तात प्रसीदतु ते चित्तम् । प्रशाम्यतां हृदयं । आत्मन्यात्मानं विमृश्य श्रीहरिमायामनवगम्यभावां निर्व्यलीकं स्तुहि । गृणीहि । न कोऽप्यस्ति ते प्रद्वेष्टा । सत्कारो न्यक्कारस्तु बाह्य एव प्राकृतगुणनिबंधनः । सच्चिदानंदस्वरूपमात्मानं वांऽर्तनियामकं न जातु कथमपि लगति धिक्कारः सत्कारो वा । श्रीहरिरेव श्रीभूदुर्गासेवितः उद्यद्भास्वच्चिदानंदः सुरासुरनरोरगादिभेदभासुरं जगदिदं तरतमभावेन सोपानारोहणावरोहणन्यायेन सृजत्यवति संहरति । क्व अनंतकोटिब्रह्माण्डनायकः जगदंतर्यामी लक्ष्मीपतिः श्रीहरिः क्वाऽहं त्वं इमे भौतान्नमत्तारः पिशितनयनाः प्राभवाहंकारदुर्दांताः कीनाशसधर्माणः । बालः क्रीडनकैर्यद्वत्क्रीडतेऽस्माभिरच्युतः । न कोऽपि रक्षितस्तत्कटाक्षक्षेपेण समीक्षते दिक्षु प्रतिक्षेपपक्षं अधोक्षजपक्षदक्षः । तात, जोषमास्स्व ज्योतिष्पोषं हृषीकेशं पुरुषोत्तमं भक्तिरसपोषमुपासमानः चेतसाऽनुगृणन्, स्तुवन् पूजयन्नित्यानित्यवाक्कुसुमहारेण ।

**हिरण्यकशिपुः**—अरे पोत, मृगशावक, किमेवं मुधा विकत्थसे । नूनं मर्तुकामोऽसि । कृतांतावसथवीथीपथमुपस्थातुमुपक्रांतोऽसि । यदि तेऽविताऽविपालो गोपालबालः पुरुषोत्तमप्रथाप्रथितः, कुत्र निलीयतेऽयं क्षुद्रजंतुः । दर्शय तं सपदि पादतलेन निष्पिनष्मि । नो चेज्जानीहि तेऽद्य यमसदनसंचारसंभ्रमविजृंभणमुपस्थितम् ।

**प्रह्लादः**—[निर्विकारः प्रशांतमुखमुद्रया मंदं मंदं समादरगौरवोन्मेषेण हरिगुणान् ध्यायन् निगदति ।] तात, अत्रैव समाचत्वरे सन्निहित. समीक्षतेऽस्मान् भगवान् नारायणः कृष्णः अघटितघटनापटीयानद्भुतपराक्रमः । पश्य, पश्य, मम पुरतः एव मंदस्मितविकसितमुखपुण्डरीकः बाहुभ्यां प्रसारिताभ्यां मामालिगतीव आयाति प्रस्फुरत्तेजोमण्डलः ।

**हिरण्यकशिपुः**—अरे मिथ्यावादिन् वहुप्रलपस्यपलापिन्, न दृश्यते स विष्णुर्विप्रलंभको जाल्मः ।

[इति मुष्टिनाऽऽकाशावकाशं ताडयति । पश्चादपसरन् वाममुष्टिना सभास्तंभं पीडयति निविडकठोरकुट्टनेन] कुत्र कुत्र दर्शय दर्शयेत्याम्रेडनेन विरुवन् विलोलजिह्वः कटकटितदंष्ट्रादण्डः । सपदि समदृश्यत गगनतटे रौद्रताराग्रहकूटधूमकेतुमालासमाकुले विस्फुरद्विद्युन्मालावलीपरीत इव अकालभास्वान् अस्तमयसमये नरकंठीरवः । पिशंगजटाच्छटापिंजरितविशंकटस्कधफलकः व्यात्ताननः निर्यल्लोलारक्तजिह्वाग्रेण रक्तपाटलभास्वता स्त्रग्विणी लेलिहन्निव रोषरूपितताम्रतारपुटकात् तूणीरगर्भादिव निशितशरकिरणानुद्गिरन्निव हिरण्यकशिपुं शिखयाऽऽकृष्य स्वोत्संगे निपात्य शाययन् खरनखरशितासिलताभिः दैत्यस्य विशालसालसारवक्षस्थली विदारयन् कुक्षिकुहरप्रस्रवणात् रक्तस्रावं प्रस्रावयन् सायं संध्यासमये हिरण्यकशिपु प्रह्लादजनकं विगतासुमकरोत् शतधृतिविश्राणितवरवचोधाटीमवितथा विधास्यन् स्वयंभूतसंगजनिदेवर्षिवचः सफलीकुर्वन् स्वभक्तप्रह्लादसमीरितं सर्वत्र भगवद्व्याप्तिमाहात्म्यं संदर्शयन् शुक्लशोणितसंवंधवर्ज प्रकृतिविदूरतामात्मन. प्रकटयितुमचेदनात्स्तम्भादुज्जिहान ।

प्रह्लादस्तु मस्तकन्यस्तहस्तपुट. भक्तिपूतांतर्हृदय. विनयावनतकंधरः श्रीनृसिहममृतरसायनघन विशाललोचनचषकेन पिबन्निव दृष्टिपूतमपश्यदमदमानंदमनुभवन् मुक्तः पुरुषोत्तममिव वैकुण्ठे । सगद्गदमस्तावीन्निगमाक्षरैः पदसमन्वयन्यायेन ।

**प्रह्लादः**—स्वामिन् वैकुण्ठपते, नरकण्ठीरव, क्षमस्व मां दैत्यव्यापादनकर्मणि घोरे त्वां व्यापारयंतम् । अथवा स्वेच्छानधीनकर्माऽहं किं कर्म कर्तुं प्रभवामि । त्वमेव कर्ता कारयिता च । दुष्टनिग्रहस्ते स्वभाव एव । भयानकं ते रूपमिदं भगवत्संकल्पप्रतीपानां लोककण्टकानां न पुनः सत्वभूयिष्ठानां भगवदनुवर्तिना देहभाजाम् । साक्षाल्लक्ष्मीरपि मामेव पुर सरयति आद्यंतभावेन भक्तपूगसंख्यापूरणदशायाम् ।

ब्रह्मादयोऽपि देवास्त्वामनुव्रताः विष्णुभक्तिगरिमानं प्रकटयितुं ममैव नामाग्रतः गृह्णंति महानुभावाः । यथा तातपादाः मातापितरौ स्खलदक्षरमपि त्रुटितलपितमपि मुग्धबालकं वात्सल्येन गुणगौरवेण बहुधा प्रशंसंति लोक-संग्रहबुद्ध्या तदुत्कर्षसमीक्षया च । नास्ति मे कीनाशसम-स्यार्पितसत्वसंदोहः यः श्लाघनीयः स्यात् गुणग्राहिभिः । तद्दासदासोऽहं वैष्णवाग्रेसराणां निरौपधामकुटिलां सेवां विधित्सुरभिलषामि तदनुग्रहलेशम् । स्वामिन् मम चेतसि कामप्ररोह एवांकुरं माऽऽसादयतु । इन्द्रियाणि मामन्यतः प्रसभं हरंति । तन्निग्रहमनुगृह्णातु दयया । जन्मजन्मन्य-पि तव सेवा सदा संघटताम् । मम पिता ते महांतं मंतुमनु-ष्ठितवान् । तत्सर्वं क्षमापयित्वा तस्य सद्गतिसुखं प्रदास्यतु भगवान् अनुकम्पया ।

श्रीनृसिंहः—मुग्धबालक प्रह्लाद, नितरां प्रसीदति मे मानसं तवा-कुटिलया सेवया । कलियुगे ये तव भक्तास्ते एव मामनु-वर्तंते । आदर्शोऽसि मानवकुलस्य जगतीतले गृहीतवि-ग्रहस्य । देवाः दैत्या अपि सत्वप्रचुराः समं तव सुदृढां भक्तिं अतुलां ज्ञानदीपितां श्लाघंतेऽनुकुर्वंति च । अतः धन्योऽसि प्रह्लाद चिरं वर्धस्व जगतीतले महाराजपदम-नुभवन्नविकलम् । अस्मदनुग्रहेण प्रियव्रत इव स्वायंभुवः जनक इव वैदेहः राज्यपदमनुभवन्नपि न जातु कर्म-लेपदूषितो भवसि । भगवत्प्रीतिमात्रफलकं कर्म न कलुषी-करोति कर्तारम् । अतः विस्रब्धं परिपालय ममाऽऽज्ञां उपभुंक्ष्व च राज्यमाकल्पं लोकसंग्रहरिरक्षया ।

(ततः प्रविशति नारदः ।)

नारदः—धन्योऽस्मि कृतकृत्योऽस्मि यन्मम वचः सत्यं विधातुं भगवान्नारायण. सर्वत्र व्याप्तमात्मानं राजसभामंदिरे नृमृगरूपेण सकुच्य समदर्शयत् प्रकटयन्नचिंत्याद्भुत महिमानं स्वस्य । हिरण्यगर्भदत्तवरोऽपि माऽलीको भूयादिति संध्यासमये द्वारांतरे निषण्णः स्तंभादचेतना-

त्प्रादुर्भूय हिरण्यकशिपुं तद्वृतमृत्युस्थानानि दूरीकृत्य संजहार लीलयाऽघटितघटनापटुर्विकटरूपो नृसिंहः। भक्तवशवदो नारायणः निर्व्याजभक्तान् विपद्गणाद्रक्षति अनुगृह्णाति चाशेषान् पुरुषार्थानतर्कितघटनाशक्त्या परिपालयन् स्वप्रतिज्ञां—

**अनन्याश्चिन्तयंतो मां ये जनाः पर्युपासते।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्** ॥ इति।

य इमं नृसिंहप्रादुर्भावप्रसंगं शृणोति भक्त्या प्रह्लादस्य च भक्तिपरिपाकं जानाति अनुकरोति च यथासंभवं नूनं स लक्ष्मीनृसिंहप्रसादभाजनं भूयात् अते लभता च निश्श्रेयसम्। जयतु नृकण्ठीरवः भक्तप्रह्लादवरदः।

(इति सर्वे निष्क्रांता)

**॥ श्रीगुरुसार्वभौमसप्तरात्रोत्सवे तृतीयदिनोत्सव इति नवम उल्लासः ॥**

॥ श्रीः ॥

॥ संतानसंपत्परिशुद्धभक्तिविज्ञानवाग्देहसुपाटवादिप्रदात्रे नमः ॥

# दशम उल्लासः

## श्री गुरुसार्वभौमसप्तरात्रोत्सवे चतुर्थदिनोत्सवः

## मध्याराधनामहोत्सवः

श्रीगुरुसार्वभौमा अद्यैव सशरीरं वृंदावनं प्राविशन् हरिपदध्याननिविष्टचित्ता. । अत्यंतपावनोऽयं दिवस. गुरुराट्सेवयाऽभीप्सितफलसाधनाय । अद्यापि गुरवः समाधिपरिपाकेन जीवन्मुक्ता. वृन्दावने निषण्णाः सिषेविषूणां भक्तानां कामितार्थवर्षणेन सुरतरुमपि अधरीकुर्वंति क्षिप्रप्रसन्नाः । प्रत्युषसि प्रवोध्य तान् विनिद्राननिमिषान् निद्रामुद्रितनेत्रान् प्रभातसेवयाऽमायया वंदीकुर्महे प्रस्तुत्य प्रस्तवैः निस्तुलगुणगणप्रशंसिभिः वाग्लवपल्लवैः । गुरुसार्वभौमा अनिमिषा अपि निमिषंतः निद्रामिषमुद्रितनेत्रा. सुप्तोत्थिता इव सदा जागरिताः ममेमामभ्यर्थनामाकर्ण्य घृणयाऽऽनृण्यमुपकल्पयंतु गुरभिः कृतं महोपकारमभिजानतः कृतज्ञस्य । इति सर्वेऽनुसंधाय प्रत्युषसि सनक्षत्राः स्नानमाचरंति । श्रीपादपुत्रास्तु गौरवादरप्रवणशिरोधराः सुप्रभातगाथया श्रीगुरुराजं प्रबोधयंति लोकविडंबनया ।

**योनित्यं वरिवस्यया निजजनस्याराद्दूरं बास्यति ।**
**धुन्वन्विघ्नतर्तिं प्रसन्नहृदयः क्षिप्रप्रसादो गुरु. ॥**
**काणत्वं हरति स्वशस्त्रविधया दिव्यां दृशं दास्यति ।**
**रोगं रेचयति प्रवीणभिषजः तस्यास्तु कल्यं शुभम् ॥ १ ॥**

**यो नित्यं श्रुतिसंहितां पठति यान् ध्यायन् ऋषिच्छंदसी ।**
**देवानाह्वयति स्वयं कृतमति. ब्रह्माध्वरे निर्वृतः ॥**
**गार्हस्थ्येऽपि बभूव यस्य वसतिः भूतादिनिर्वासिनी ।**
**तस्य स्याच्छुभकल्यमद्भुतनृसिंहस्योपसन्नात्मनः ॥ २ ॥**

यत्काण्ठाविजये बभूवुरुरुधा विद्राविता वादिनः ।
प्रत्यर्थिप्रभवोऽपि यस्य निशितां प्रज्ञां भृशं तुष्टुवुः ॥
राजन्यैर्मणिरत्नवज्रनिचयै रभ्यर्चितः सादरम् ।
तस्य स्याच्छुभकल्यमद्भुतनृसिंहस्योपसन्नात्मनः ॥ ३ ॥

यद्वाणी न हि वेत्ति जल्पकलनां वैतण्डरीतिं मुधा ।
वैयर्थ्यं पुनरुक्तिजातिच्छलनादोषान् विसंवादिताम् ॥
यद्ग्रंथा वरमध्वशास्त्रहृदयं संतन्वते प्रस्फुटम् ।
तस्य स्याच्छुभकल्यमद्भुतनृसिंहस्योपसन्नात्मन. ॥ ४ ॥

यश्चूतस्य रसे मृतं शिशुमथो सद्वारिसप्रोक्षणैः ।
जातश्वासमकल्पयत्करुणया योगी मृतप्राणदः ॥
यन्मंत्राक्षतसन्निधिर्व्यरहयत्पैशाचवास गृहात् ।
तस्य स्याच्छुभकल्यमद्भुतनृसिंहस्योपसन्नात्मनः ॥ ५ ॥

यस्यारात्स्मृतिमात्रतः सुजडधीर्विद्यार्थरौद्रेऽध्वरे ।
जैत्रं पत्रमवाप दुर्दममतेः प्रत्यर्थिविद्वद्गणात् ॥
विद्वानप्यचलं प्रसारमतनोत्क्लिष्टाऽर्थसंवर्णने ।
तस्य स्याच्छुभकल्यमद्भुतनृसिंहस्योपसन्नात्मनः ॥ ६ ॥

यो वेत्ति वर्णनिचयं समयप्रविष्टं ।
अर्थं च शास्त्रनिचयस्य धियैव सम्यक् ॥
यो व्याकरोत्कृतिततीरनपेक्ष्य मूलं ।
स्यात्तस्य पूर्णधिषणस्य सुखप्रभातम् ॥ ७ ॥

ये त्वामनुव्रतचराः मम भक्तिभाज. ।
विद्धीत्युवाच नृहरिर्वरदैत्यबालम् ॥
प्रह्लादमात्मदयितं स बभूव सद्यः ।
श्रीराघवेंद्रगुरुराट् तव सुप्रभातम् ॥ ८ ॥

यः पूज्यते समधिया जगतीतले स्वै- ।
रन्यैश्च पक्षसविपक्षविभेदहीनैः ॥
साक्षात्कृतेश्वरममुं विगतात्ममोहं ।
वंदामहे भवतु ते वरसुप्रभातम् ॥९॥

यद्वृंदावनमावसंति नृहरिर्व्यासो यदूनां पतिः।
रामो देवगणैः समस्तमुनिभिर्दातुं स्वभीष्टं द्रुतम् ॥
मोक्षं सत्पुरुषार्थसारमनघश्रीराघवेंद्रार्थिताः।
तस्मै श्रीगुरुराघवेंद्रयतये स्यात्कल्यमानंददम् ॥ १० ॥

यत्र श्रीवरदैत्यसूनुरयजत् प्रह्लादनामा हरिम्।
शप्ता गौतमभामिनी परमयात् पाषाणतः स्त्रीपदम् ॥
तत्पाषाणेन विनिर्मितं विशति यो वृंदावनं पावनं।
तस्य स्यात् शुभकल्यमूर्जितयशोधाम्नः सुदाम्नः सदा ॥ ११ ॥

प्रभातसंगीतं सुमधुररसभावभासुरं शब्दगुणके आकाशे समीरसमयानुगुणं प्रवाह्य तुगातरंगनिनदेन ढक्कामृदंगरवसंवादिना ततानद्धसुषिरघनारिवाद्येनाऽऽतोद्येन संवलितं प्रत्यंतपर्वतगुहासु क्रीडासक्तासु गंधर्वकिन्नरीकन्यासुताललयानुसंधानेन नृत्यंतीषु अंतरिक्षे निलिंपनगराधिपसभायां विबुधभारतीशुभप्रभाविभातायां धिषणगुरुधिषणागोचरमभून्नाकलोके। देवलोकमतिक्रम्य भानुचंद्रमण्डले भित्वा मेरुपर्वते ब्रह्मसदने तुलसीपुष्पावचयापचितिप्रचारिणः शंकुकर्णस्य श्रवणाकाशतटमटीकत। तदुपरि महानागभोगाभोगे तूलशय्यांदोलिकायमाने श्रीभूदुर्गारूपिणी महालक्ष्मी परिष्वज्य मुद्रितनयनं शयानं मुक्तब्रह्मादिदेवतागणैः सेवासक्तैः ससेव्यमानं वंदिभावेन, साक्षान्नारायणं मृषानिमोलितनयनमनिमिषं सहस्राक्षं सहस्रशीर्षं सहस्रपादं सहस्रश्रोत्रगुणगणगीयमानं प्राबोधयत्। सर्वैरपि देवैः साकं ऋषिगणगुणितः श्रीलक्ष्मीनारायणः प्राङ्मया नृसिंहरूपेण दैत्यपतिहिरण्यकशिपुप्रासादसभास्थूणाखण्डमवस्फुट्योत्थितेन दैत्यरोषान्नैस्त्रिंश्याद्रक्षितः पुरुषोत्तमे मयि निरुपाधिभक्तिमान् प्रह्लादः दिव्यकर्मभूमौ महीमण्डले श्रीराघवेंद्राभिख्ययाऽवतीर्णोऽस्मदाज्ञया ज्ञानविज्ञान विस्तारेण मम ख्यातिं विस्तारयितुं जगतीतले। अद्यापि मम दयितोऽयं प्रह्लादः मन्माहात्म्यं गृणन् मंत्रालये मन्त्रतन्त्रसिद्धिसदने वृहद्वृंदावने सद्वृंदसंवलिते संवसति समाधिपरिपाकेन मां सदा संस्मरन् ध्याननिरतः। तस्याद्याऽऽराधनामहोत्सवः तद्वंशाबुधिराकाचंद्रेण सात्विकगुणसंपन्नेन तदनुग्रहभाजनेन जगन्मान्येन सुयमीद्रकर्मंदिसदीपनेन वादकथाभिः

ज्ञानसत्रहरिदाससंगीतनर्तनादिसेवाभिः अलंकारब्राह्मणानां मद-धिष्ठितानां संतृप्तिपर्येषणयाऽसंख्ययात्रिकविप्रादिभक्तजनाऽप्यायनेन निर्वर्तयिष्यते महावैभवेन । स्व एव प्रातः गुरुसार्वभौमप्रख्यया जगति प्रतीतः मदनुवर्ती मत्प्रियः राघवेंद्रः रथारोहणसंभ्रमेण भक्तानां नेत्र-प्रीतिं जनयति वरदहस्तेनाभयदानं वितरन्नार्तानां शुश्रूषूणां । सर्वे वय तत्र रूपविशेषेण गत्वा महोत्सवं निध्यायतः प्रातरारभ्य समग्रां-गप्रत्यंगकार्यविशेषेषु सन्निधानेन मांगल्यपोपमादधाना सुयमींद्रमस्क-रिमणिं सुधींद्रसुतराघवेंद्रदूतं अनुगृह्णीमः । इत्याज्ञाय सपुत्रकलत्रः सपरिवारः महाप्रभुः श्रीलक्ष्मीनारायण. मंत्रालयक्षेत्रमागतः तुगात-टिनीतटे कणिभक्षेण पक्षपातिना तार्क्ष्येण स्कंधेनोह्यमानः सहस्रभानु-दीधितितेज.कुजपुर्जपिंजरितनभोमण्डल. । सनक्षत्रोप.स्नानार्थमागताः श्रीसुयमींद्रतीर्थाः कृतमृच्छौचमृत्रिकाधारणाः प्रात सकलपगद्यमनूद्य-गजेंद्रमोक्षादिविष्णुगाथा. परिगायंतः सुभगस्नानानुकूलनिम्नगानिम्न-भूमिमवतीर्णाः वैहायसावकाशात् महीतलमवतरंतमसुरारिं ससुरगण लक्ष्मीनारायण प्रस्फुरत्तेजोविसरच्छुरितरूपं अक्षिपक्ष्म विच्छिद्य विस्फार्य व्यलोकयन् चकितचकिताः । तिष्ठंत एव सभावयामा-सुरञ्जलिना पवित्रजलार्घ्यपाद्यादिकमर्पयित्वा । सद्यस्तेजश्छटा शरवत्तरसा मठांत प्रविश्य गुरुसार्वभौमवृंदावनशरीरकुहरगामिनी अदृश्यतां गता । मठांत शुश्रूषुजनाः अतर्कितप्रसभप्रविष्टतडित्ततिप्रघा-तेन विच्छिन्नाक्षिकवाटकटाक्षप्रक्षेपा. हा ! किमिदमदृष्टपूर्व तेज.-कुञ्जमिति विप्लुतस्वरेणोदजीगिरन् भयभ्रांतनेत्रतारका. । श्रीचरणा-स्तु साक्षाच्छ्रीलक्ष्मीपतिरेव सदेवगणः समागत. रूपांतरेण सन्निहितो-ऽपि श्रीगुरुवृंदावने रूपविशेषेणं भक्ताभीष्टानि पूरयितुं क्षिप्रप्रसन्नः सेवयाऽकुटिलया भक्तवृंदस्य । इति दृढ निर्धार्य गुरुसार्वभौममहिमानं मनसि ध्यायंत एव पुरतःकार्यभरमुपचक्रमुः विस्रब्धचेतसः ।

यथाविधि स्नात्वा दण्डोदकेन भक्तान् संप्रोक्ष्याऽऽर्द्रवासस. करन्यस्तजलपूर्णकलधौतकलशा. मठमंदिरमभ्याजग्मुः । गोपीचदनेन द्वादशनामभिः पंचमुद्राभिश्चालड्कृत्याऽऽत्मानं प्रातराह्णिकं निर्वर्तयामासुः । ततः श्रीपादानुज्ञया पौराणिकमार्तंडः भागवत-सप्तमस्कंधे दैत्यबालकेभ्यः प्रह्लादेन वितीर्णमुपदेशं न्यरूरुपन् विशद-

विपुलवाचोयुक्तिभिः। यथा—

वयस्यैरुपहूतः महाबुधः महाभागवतः प्रह्लाद श्लक्ष्णया गिरा तानाह। हंत अर्भकाः शृणुत मम सर्वतः शिवं वचः। क्रीडांधा. मा प्रमाद्यथ। पुरा विवेकविधुराः बालाः जाता. मृता.। न किंचिदाचरितं। श्रीहरिशुश्रूषया परमानंदसप्राप्तये जनिमृति-यातायातदु.खनिवृत्तये नीतिशास्त्रबलेन पुरुषार्थानवाप्तुकामाः दैव-बलमपाकुर्वतो जनाः आत्मानमज्ञानांधकूपगर्ते निपातयंति।

**कः शत्रुः क उदासीनः किं मित्रं चेह आत्मनः।**
**भवत्स्वपि नयैः किं स्यात् दैवं संपद्विपत्पदम्॥**

शत्रुमित्रोदासीनान् ज्ञात्वा परिरक्षितुमात्मानं नीतिशास्त्रमभ्यस्यते किल राजकुमारैः। तत् जातु न कस्मैचित्फलायोपकल्पते। ईश्वरः सर्वभूतानि यन्त्रारूढानि मायया भ्रामयन् हृद्देशे तिष्ठति। बिंब-रूप स परमात्मा सर्वप्रेरकः तदधीनत्वात्सर्वस्य। अतः तत्प्रेरणां विना न कोऽपि शत्रु मित्रं उदासीनो वा स्थातुमर्हति स्वभावत। संपद्विप-न्निदानं साक्षात् श्रीहरिरेव लक्ष्मीपतिः न परतंत्रः मानवो दानवो वा शत्रुमित्रोदासीनपदभाक्।

दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम्। अत. ऐंद्रियिकं सुख दुःख-वत्त्याज्यमेव। नश्वरस्य क्षणमात्रावस्थायिनो दु.खानुबधिन. सुखस्य कृते सर्वथा श्रमो न वोढव्यः। आयुर्व्ययश्च न कर्तव्यः भूतिकामेन पुरुषेण। बाल्य-कौमार-यौवन-वार्धक्याद्यवस्थासु न किंचिदपि शाश्वतसुखोपयिकं साधनमनुष्ठातुमीहते पुरुष. न्यक्कृतमति विस्मृ-ततत्वसारः। तथाहि। बाल्यमज्ञानेन व्यतीयते। कोमारं क्रीडाया-मपसरति। यौवनं च काममोहमददर्पादिकेलिषु इन्द्रियारामव्यव-सायेषु व्यर्थ निरर्थमपयाति। अतः दैत्यबालकाः विषयवासनां परित्यज्य सर्वेंद्रियप्रधानप्रेरकं नारायणमादिदेवं शरणं व्रजत। स नातिदूरं वर्ततेऽस्मत्त। हृदि छिद्रवत्सत. सिद्धस्य नारायणस्य प्रीणनं न बह्वायाससाध्यम्। विषयात्मकाः दैत्या. नारायण पराङ्-मुखीकुर्वंति द्वेषासूयाद्यनिष्टनिष्ठामुत्सिक्तचेष्टां च उपजनयंति। अत. विषयवासनां परित्यज्य नारायणमादिदेवं शरणं व्रजत। आसुरं

भावमुन्मुच्य सर्वेषु भूतेषु दयां कुरुत। नारायणो हि सर्वेषु जनेषु पुरुषरूपेण स्थित्वा प्रेरयति। कालरूपेण सर्वत्र व्याप्तः सन् व्याप्य-व्यापक-भावमाप्नोति। स्वसुहृद. परमपुरुषस्यादिदेवस्य स्वात्मार्पणमेव सकलवेदसारार्थः। श्रीहरौ तुष्टे किमलभ्यमिह जगतीतले तदधीनसत्ताके। अयमुपदेशः मया नारदमुखादुपश्रुतः मातृगर्भे वसता देवर्षिगुरुकुले। नाऽद्यापि विस्मृत. ऋष्यनुग्रहबलात्।

**रायः कलत्रं पशवः सुतादयः गृहा महीकुंजरकोशभूतयः।**
**सर्वार्थकामाः क्षणभंगुरायुषः कुर्वंति मर्त्यस्य कियत्प्रियं चलाः ॥१२॥**

**एवं हि लोकाः क्रतुभिः कृता अमी क्षयिष्णवः सातिशया न निर्मलाः।**
**तस्माददृष्टाश्रुतदूषणं परं भक्त्यैकयेशं भजतात्मलब्धये ॥ १३ ॥**

सर्वमिदं भौतिकफलं क्षयिष्णु। आयुरपि देहिनः क्षणमात्रावस्थायि। तस्माददोषं गुणपूर्णं नारायणमेव भक्त्या भजध्वम्। इति। अनेन वल्गुना नारदोपदेशेन सुसंस्कृतः प्रह्लादः स्वाभाविकप्रज्ञया भक्त्या श्रीनृहरिप्रसादमाससाद।

इति सुष्ठु प्रह्लादस्य भक्त्यतिशयं श्रीनृहरिप्रसादं च वर्णयित्वोपरराम पौराणिकाचार्यः। श्रीपादाः सूनृतेन संक्षिप्तुवचसा प्रह्लाद-चरित्रस्यैदंपर्यं विष्णूद्रेकाय वैष्णवं यश इति निरूप्य पौराणिकाचार्यं समयानुगुणं प्रशशंसुः।

तदनु स्वामिनः समीरसमयसंवर्धिनी सभायाः द्वितीयाहःकार्यं विद्यार्थिविदुषां च परीक्षा-वाक्यार्थविचारौ प्रस्तावयामासुर्वित्परिषन्महामण्डपे।

ततः श्रीपादाः पञ्चमितान् अलंकारब्राह्मणान् आमंत्र्य तेभ्यः समंत्राक्षतकौशेयकलधौततंतुनिचितानर्घ्यवस्त्रयुग्मं प्रदायालंकार-पूजायै समये संनिहिता भवंतु इति आज्ञाप्य पंचामृताभिषेकमहोत्सव-निर्वाहाय श्रीगुरुराजवृंदावनं प्रति प्रतस्थिरे।

जनतासम्मर्दः अद्य प्रतिघटिकमभिवर्धमान. विंशतिसहस्रावधिमतिवर्तते इति ऊह्यते। तेषां वसतिव्यवस्थोपहारादिसौकर्यं च श्रीपादैः नियुक्ताधिकारिभिः प्रकामं निर्वाह्यते।

भव्यशिलामयमण्डपमध्यवर्तिप्रावरके चतुर्दिक्षु शिलाभित्ति-प्रावृते विराजमाने वृंदावने सन्निहित श्रीगुरुसार्वभौम श्रीसुयमीद्र-पूज्यपादानामाध्यक्ष्ये सम्मिलितजनस्तोमसम्मर्दे परित सघट्टितेऽति-लापातसंघात महापंचामृताभिषेकेण संभाव्यते सद्य एव देवद्विजगुरु-मनोनयनानदसंदोहदेन मध्यमाराधानमहोत्सवमर्यादया। अर्चकप्रवराः सकलसभारसन्नद्धाः महावृंदावनसन्निधौ अभिषेकसामग्री सन्नाह्य पंचोपचारपूजां कर्तुमनुज्ञां प्रार्थयामासु. गुरुपादान् श्रीसुयमीद्रगुरुभरून्। प्रापुश्च तां यथाविधि निर्वर्तयितुम्।

सहस्रकदलीफलगुच्छा. सहस्रसंख्यै. फलै पृथुगात्रै प्रफुल्लाः निष्कीलितत्वचः गिरिकूटाभ्युच्चयेन राशीकृता परिचारकविप्रैः अभिषेकाय सज्जीकृताः। तत्पार्श्वे गोक्षीरपरिपूर्णा शातकुम्भशतकुभाः प्रत्यग्रातंचितपयोदधिरौक्मकलशा. पञ्चाशत् शुद्धस्निग्धमधुपूर्णाः पञ्चबृहत्कलशाः। एको घृतकुम्भ पच बृहन्मूटिकाः शर्करापिष्टस्य शुष्कखर्जूरफलानामसख्येयराजतशरावा रसालरसपूर्णकलशपंचकं मृदुनारिकेलसीधुभरितं बृहत्कलशत्रयं आस्तारितकदलीपत्रफलिकाभि. आवृतमासीत् सर्वमेतच्छिलोच्चयप्रमाणम् दृष्टिदोषपरिहाराय। आगतेषु च स्वामिपादेषु सद्य एवार्चकैः तत्तद्द्रव्येषु दुग्धे गोविन्दं दधिनि वामन आज्ये विष्णु मधुनि मधुसूदन शर्करायामच्युतं अन्यत्र च तत्तदभिमानिदेवता आवाह्य महाभिषेकायानुज्ञां ययाचिरे गुरुवराः। श्रौतस्मार्तमन्त्रघोष. वेदपाठकै यात्रिकभक्तैश्च कृत दुंदुभिध्वान-स्पर्धिना रवेण दिङ्मण्डलममुखरयदेकपदे। श्रीहरिवायुस्तुतिगुरु-स्तोत्राणि सम्मिलितभक्तवृंदमपठदुच्चै स्वरेण। श्रीवृन्दावने सन्नि-हिताना नृहरिरामकृष्ण वेदव्यासरूपाणां महाभिषेक प्रावर्तत कलशो-परि कलशानुत्तानयद्भिः अर्चकवरैः तत्रैव सन्निधानेनाऽऽत्मानं कृता-र्थीकुर्वतः पंचवक्त्र (पंचमुखप्राणेश) कृत्तिवासोबिडौजसः सपत्नीकाः श्रीमध्वमुनिजयमुनि-व्यासतीर्थ राघवेंद्रतीर्थादियोगिन श्रीलक्ष्मीपति-नारायणसेव्रां सूत्रानुव्याख्यान-भाष्य-सुधा-चद्रिका-प्रकाश-परिमलादि वाक्यार्थ विवरणेन विष्णुसर्वोत्तमत्व प्रतिपादयंतश्चकाशिरे भयभक्ति-भासुरचेतसा। किं बहुना श्रीगुरुराजपंचामृताभिषेकव्याजेनेशसृष्ट-चेतनाचेतनप्रपंचसारः एव सम्मिलितः इवाभूत् श्रीहरिसर्वोत्तमत्वमुद्-

घोषयितु जगति । किमन्यत्कृत्यमस्ति महतां विदितवेदांतानां श्रीनारायणस्य निरंकुशप्रभुत्वं द्योतयितुमुज्झित्वा । पूर्वावतारेषु प्रह्लादव्यास-तीर्थादिरूपेषु श्रीनृसिंहस्य बालगोपालस्य श्रीकृष्णस्यानितरसाधारण माहात्म्यं प्रकटित किल । अद्यत्वे श्रीगुरुसार्वभौमो राघवेंद्रः चतुर्मुखादिदेवतावृन्दानुगृहीतः स्वनाम्ना कृतेनाभिषेकेण श्रीहरिवैभवं प्रकटीचकारेति तर्कयामः ।

महता वैभवेनाभिषेकोत्सवः सम्पादितः श्रीपादानामाध्यक्ष्ये । तत्रैको कविरुद्भूतरसप्रसरः एवमकवयत् ।

शंकूकर्णः स्वाधिकारात्प्रमत्तः ।
योगभ्रष्टोऽभूच्छुचिर्दैत्यपुत्रः ॥
प्रह्लादः श्रीव्यासयोग्याप्तविद्यः ।
अद्यत्वेऽयं श्रीराघवेंद्रो दयालुः ॥१४॥

मधुमधुरं दधि मधुरं क्षीरमाज्यमतिमधुरम् ।
ननु मधुरोऽपीक्षुरसो न तुलामेति हरिनाम्नः ॥१५॥

भक्तेषु दत्तो गुरुभिः स शापः ।
सानुग्रहो भूरिदयार्द्रचित्तैः ॥
यत्पापनाशेन चितैः सुपुण्यैः ।
संतन्यते लोकहितं स्वमूर्त्यै ॥१६॥

शंकूकर्णो नाशयित्वाऽपराधम् ।
जन्मत्रय्यामार्जयित्वा सुपुण्यम् ॥
लेभे शीघ्रं स्वात्मभूतिं स्वयोग्याम् ।
धन्योऽवन्यां राघवेंद्रो यतींद्रः ॥१७॥

अहो किमेतद्गुरुराघवेंद्रो नृसिंहकृष्णाच्युत राम एव ।
वैशिष्ट्यलिंगात् स नृहर्यधीनः सर्वात्मना तद्गतप्राणवृत्तिः ॥
अतोऽभिषेक. परिकल्पितोऽद्य तस्यैव नान्यस्य रघूत्तमस्य ।
यतो गुरु स जगत्प्रतीतः श्रीराघवेंद्रेतिविशिष्टनाम्ना ॥१८॥

श्रीगुरुसार्वभौमाणामुद्वार्चनं संपाद्यार्चकप्रवराः शुद्धोदककलशैः स्नपयामासुः तत्र तत्र निविष्टपंचामृतद्रव्यशेषान् शनैः शनैरुद्वासयंतः ।

ततः नाममुद्रादिभिरलंकृत्य सुवर्णविग्रहकवचं धारयित्वा रौक्मतंतु-निचित धौतश्वेतक्षौमशाटी कटितटादधस्तात्परिधाप्य उपरि सौवर्ण-तंतुखचितविचित्रकलाकृतिखचितदशावत्श्वेतकौशेयवासः शीर्ष्णि पार्श्वद्वये आलंबमानमावेष्ट्य गले अक्षमालां प्रवालमौक्तिकनीलवज्र-वैडूर्यजांबूनदगुटिकाद्यनर्घमणिमिश्रितां त्रिगुणितां मालां आनाभिस्पर्शि-नीमासजयामासुः अनतवराहलक्ष्मीनारायणनृसिंहाद्यनंतावतारमूर्ति-सन्निधानपवित्रां शालग्रामशिलामालां चाऽऽसंजयामासुः कंठे कटितट-स्पर्शिनीम्। ततश्च श्रीगुरुसार्वभौमाः आजानुबाहुप्रसन्नहसितमुख-मुद्रयाऽनुगृहीतु वद्धदीक्षाः सकलदेवतावृंदज्योतिपाऽनितरसाधारणं लावण्यमुपेत्य निरौपधभक्तिविरक्त्युपलक्षितसेवामभीष्टदानेन सफलां कर्तुमुपस्थिता इवालक्ष्यंत। कमलकल्हारसेवतिकामल्लिकासुगंधपरि-मलप्रचुरप्रसूनमालानिचयं वक्षसि समर्हणेन यदाऽर्चकाः लंबयामासुः तदा भव्यस्वरूपाः गुरुभरव. दिव्यज्योतिषा स्वावतारत्रयशोभां धंकूकर्णस्य पुष्पाहरणकौशलं प्रह्लादस्य राज्यवैभवसम्पत्ति व्यास-योगिनां च विज्ञानवारिधित्वलक्षणं राजगौरवं चैकीकृत्यामंदानंद-संदोहं मनोनयनाप्यायमानं विकिरंत इव दिदृक्षूणां समदृश्यंत।

अत्रांतरे श्रीसुधर्मींद्रतीर्थपूज्यपादाः मठीयस्नानमंदिरे उष्णोदकेन स्नात्वा धौतशाटिकां मलमल्लकं च परिधाय जपमण्डपमागत्य यथाविधि नाममुद्राभिरात्मान गोपीचंदनकल्केनालंकारयामासुः। गले कमलाक्षमालां च धृत्वा माध्याह्निकं प्रणवहंसनारायणादिमंत्रजपं संपूर्य श्रीमन्मूलरामचंद्रपूजामण्डपमागताः करधृतकरवस्त्राः विशाल-दारुमयपीठे काषायवस्त्रपरिवृते निषण्णाः पूजां प्रारेभिरे पार्श्वद्वय-परिचारकाभ्यां सन्नाहितसामग्रीकाः। पूजामण्डपं साक्षाद्वैकुण्ठविष्टरवत् श्वेतद्वीपानंतासनवैकण्ठस्थानीयसोपानत्रयविभूषितं मुक्ताजालमालास-मलंकृतं चतुर्दिक्षु वज्रवैडूर्यनीलमाणिक्यनिचितसौवर्णस्तम्भैः शोभा-यमान प्रस्फुरत्तेजसा प्रकाशते स्म। श्रीलक्ष्मीनारायणविग्रहेणोच्चै. स्थले समलंकृतेऽन्यत्र फलकत्रये आदौ केयूरमकुटायुधमौक्तिकहारा-लंकृतान् श्रीमूलरामचंद्रदिग्विजयरामजयरामविग्रहानेकत्र समतटं मध्ये वराहनृसिंहादिरूपप्रतीकानि विभूषितान्याभरणैः अधस्ता-त्तृतीयफलके लीलादेवीकरार्चितवैकुण्ठवासुदेवं च स्वयं स्वामिनः

तत्तत्सपुटेभ्यः वहिरानीय स्थापितवत. । घण्टाशंखपूजां च कृत्वा रक्ष पिशाचभूतोच्चाटनाय घंटानादमकुर्वन् । तत. कलशपूजा विधाय पट्पात्राण्यासाद्य अर्घ्यपाद्यादिकं दत्वा मठीयशालग्रामशिलाभ्यः व्यासमुष्टिचक्राकितसनाथाभ्य. क्षीराभिषेकानतरं महाभिषेकं पुरुप-सूक्तादिपचसूक्तपठनपूर्वकं वेदपाठकैरुच्चैर्वेदमन्त्रेपु पठ्यमानेपु महता संभ्रमेण निर्वतयामासु. ।

श्रीमूलरामादिप्रतिमाभ्य शंखस्थाभिपेकजलमासिच्य तुलसीदलेन शुभ्रधौतवस्त्रेण संमार्ज्य विशिष्टशालग्रामशिला. स्वयमेवोद्धृत्य शोधयित्वा संपुटे न्यवेशयन् । परिचारकस्तु इतरशिलामूर्तीर्वस्त्रेण तत्तत्संपुटेपु न्यधात् । तदनु श्रीपादाः गंधगुटिका. परिमलद्रव्यैः सुवासिताः श्रीमूल दिग्विजय-जय-राममूर्तित्रयस्य पादतले वक्षसि मकुटेचार्पयित्वा कोमलतुलसीदलानि श्रीब्रह्मसूत्र-विष्णुसहस्रनामपठन-पूर्वकमर्पयामासु । विविधवर्णककेतकीवकुल-पारिजात-कमलकल्हार-मल्लिका-जातिप्रसूनगुच्छाध्च मालिकाश्च पृथक् पृथक् दलैश्च सनाथान् सर्वत्रार्पयित्वा वहुमुखमेवामतन्वन् । ततः मूर्तिपु तत्वन्यास-मातृकान्यासान् कृत्वा तुलसीदलान् पुन. समर्प्य धूपदीपत्रिवर्त्यार्तिक्यं दर्शयामासुः । विविधपड्रससंपन्नपाकविशेपान् भक्ष्य-भोज्य-लेह्यपे-यांश्च-नानाफलानि आर्द्राणि शुष्कानि च दाडिम-द्राक्षपूर्वकाणि भूरिश कलधौतपात्रेपु परिवेपितानि श्रीमन्मूलरामचंद्राय दिग्विजय-जयरामात्मने भक्त्या तत्तद्बिबमूर्ती. चिंतयंतः सर्व समाप्नोपि ततोऽसि सर्व इति श्रीहरिस्वातंत्र्यं व्याप्ति रसप्रदत्वशक्ति च वहुधा मनसि चितयंतः ईशदासभावमनुसंदधानाः नैवेद्यं नाऽहं कर्ता हरिः कर्ता इत्यादिरूपेण समर्पयामासु. श्रीद्वादशस्तोत्रपठनेन । श्रीरमाब्रह्मादि-देवेभ्य. तीर्थ गंधाक्षता तुलसीपुष्पाणि समर्प्य रमानैवेद्यं दर्शयामा-सुश्च । तदनु महानीराजनं बहुवारार्तिक्यप्रकाशनेन दर्शयामासुश्च श्रीचरणाः भक्तिभासुरचेतसा । साक्षाच्चतुर्मुखब्रह्मैव स्वतातं परम-वैभवेन पूजयन् हृष्टस्तुष्ट इव श्रीपादाः तदनुग्रहांकिता महताऽऽनंदभरेण श्रीहरिसुदराननं नीराज्यमानं पश्यंतः निमीलिताक्षाः किंचित्तूष्णी-मासन् । भक्तास्तु गुरुभि क्रियमाणं नीराजनं दृष्ट्वा प्रमोदपुलकितगात्रा. जयजयहरे मूलराम गुरुराघवेंद्र वल्लभेति व्याजह्रुः ।

यथासंप्रदायं श्रीमूलरामादिविग्रहान् स्वयं एकांते दृष्ट्वा भक्तेभ्यः प्रदर्श्य विचित्रवर्णककौशेयवस्त्रेषु वेष्टयित्वा तत्तत्पेटिकायां न्यक्षिपन्। प्रिचारकस्तु इतरमूर्तीः शालग्रामशिलाश्च पेटिकासु निधाय रज्जुभिर्निबध्य बृहत्पेटिकायां व्यवस्थया निधाय पूजामण्डपे स्थापयामास।

श्रीमन्मूलरामचंद्रपेटिकाः पृथक् दारुमयपीठे रंगवल्याद्यलंकृते स्थापिताः पार्श्वद्वये घृतार्तिक्यनीराजिते सति श्रीचरणा. करधृतदण्डकाष्ठाः त्रिः प्रदक्षिणीकृत्य साष्टांगं प्रणम्य भक्तिपूतेन हृदा संप्रार्थयामासुर्निश्रेयसम्। तदनु दूतप्रदर्शितपथेनालकारमण्डपमागताः उपविष्टब्राह्मणेषु सपद्युत्थितेषु गौरवेण। परिचारकश्च तीर्थगंधाक्षतपात्रं श्रीगुरुराजवृंदावनानि च आनीय गुरुभरुपुरः स्थापितवान् सद्य एव। विशालासने उपविष्टाश्च, श्रीसुयमीद्राः ब्राह्मणानुपवेष्टु हस्तेन सूचयामासु.। श्रीपादनां सान्निध्ये नारायणानिरुद्धप्रद्युम्नसकर्षणवासुदेवादिस्थानेषु उपविष्टेभ्यो ब्राह्मणेभ्यः पादप्रक्षालनावाहनादिपूजानतरं गंधमाल्यादिना संभाव्य रजतपात्रेण साकं सतांबूलदक्षिणाकं वस्त्रयुग्मं दत्वा श्रीचरणाः गुरुराजवृंदावन प्रति हस्तोदकं भैक्ष्य च दातु प्रस्थिताः। जनस्तोमः वृन्दावनसन्निधौ सम्मिलित गुरुस्तोत्रं गुरुमंगलाष्टकं चोच्चैः स्वरेण पठितुमारभत। श्रीगुरुराघवेंद्रं विस्फारिनयनावलोकं संपूज्य लोचनतटादश्रुधारा विसर्पयतः भक्तिरेण चेतसा गुरुभ्यः अर्घ्यपाद्याचभनीयगंधाक्षतादिभिः श्रीमूलरामचंद्रतीर्थपुष्पतुलसीमालादिभिः स्वयमलंकृत्य रजतपात्रे परिवेपितषड्सोपेतपक्वान्नानि फलानि चानितरगौरवेण समर्पयामासुः। पुनस्तीर्थं दत्वा महार्तिक्यं प्रदर्शयामासुः घण्टातलपटहनिनादेषु शब्दायमानेषु। सर्वे भक्तजनाः गुरुवैभवमवलोक्य कृतार्था आसन्।

ततः अलकारब्राह्मणेभ्य. मंगलार्तिक्य दापयित्वा श्रीवादीद्र सुधर्मेन्द्र-सुव्रतीद्रयमिन संपूज्य भैक्ष्यं दत्वाऽलंकारमण्डपमागताः। तत्र ब्राह्मणेभ्यः तीर्थगधमत्राक्षताः सतांबूलदक्षिणाकं रजतपात्रं च ददु.। नारायण-संकर्षण-वासुदेव-प्रद्युम्नानिरुद्धसंकेतितस्थलेपूपविष्टान् ब्राह्मणान् विशालप्रत्यग्रानीतकदलीपत्रयुग्मे परिवेपितसुमृष्टपक्वान्नं स्वीकर्तुं भोजनाय विज्ञापयामासु.।

ततः श्रीपादाः स्वयं तीर्थं प्राश्य प्रतिष्ठितपण्डितेभ्यः विशिष्टाभिजनेभ्यश्च तत्रैव तीर्थमंत्राक्षताश्चानुगृह्य वहिर्द्वारं जनसामान्याय विप्रकुलाय सुवासिनीवालकोपेताय तीर्थं दातुमागताः। श्रीसुमध्वविजये सुस्वर पठ्यमाने शिष्यवृंदेन तीर्थप्रदानं संप्रवृत्तम्। घण्टाद्वयानतरं श्रीपादा. प्रत्यावृत्य स्नानं कृत्वा धौतशुचिकाषायवस्त्र परिधाय नाममुद्रादिभिरात्मानमलकृत्य गंधाक्षतादि विलिप्य भोजनाय भोजनशालां प्रति निष्क्रांताः।

तत्र महाजनाः तीर्थगंधाक्षतादींश्च स्वीकृत्य भोजनायोपविष्टा.। परिवेषकाश्च जना. आसहस्रसख्याकाः यथार्हं यथाविधि विना व्यतिक्रम सकलभोज्यादीन् यथेष्टं पर्यवेषयन् विस्तारिशुष्कपत्रमयपात्रेषु यात्रिकभक्तजनेभ्योऽतिथिभ्य· । सायं पंचवादनाभ्यर्ण ब्राह्मणसुवासिनीनामन्नसंतर्पणं पर्यवसितम्। श्रीपादानां भिक्षाऽपि रजनीमुखे समजायत ।

## मोक्षसाधनविचारोपन्यासः

सायं श्रीपूज्यपादानां श्रीसुयमींद्रतीर्थानामाध्यक्ष्ये 'मोक्षसाधन विचार.' इति विषयमधिकृत्योपन्यासः प्रवृत्तः । तत्रोपन्यासका एवमाहुः—

निखिलापेक्षितमोक्षः कथमाप्येतेति जिज्ञासव तत्प्राप्ति-साधनमाकांक्षंति । अत **अमला भक्तिश्च तत्साधनं** इति संक्षिप्योक्तं मध्वमतसंग्रहश्लोके **श्रीमन्मध्वमते** इत्यादौ। **सद्भि-र्वैराग्यभक्तिश्रुतिमतिनियतध्यानजज्ञानयोगाद्गम्यं** । इति श्री जयतीर्थमुनिभिः तत्वकाशिकामंगलश्लोके साधनकलापः संग्रहेण प्रस्तावितः। अत्र वैराग्य-भक्ति-श्रुतिमतिनियतध्यानज-ज्ञानयोगात् (योगो नाम उपायः साधनमित्यर्थ) इति व्रह्ममीमासाशास्त्रस्य साधनाध्यायस्यार्थः क्रोडीकृतः । वैराग्यं प्रथमपादार्थ । भक्तिः द्वितीय-पादार्थ । श्रुति (श्रवणं) मति (मननं) नियतध्यानं (स्वयोग्यो-पासन) तृतीयपादार्थः, ज्ञानं चतुर्थपादार्थः इति तृतीयाध्यायस्य पादचतुष्टयस्यार्थोऽत्रबोध्यः। अधिकारिनिष्ठ साधनविवक्षया भक्त्यु-त्तंभितज्ञानस्यांतिमसाधनत्वेऽपि मोक्षाव्यवहितपूर्ववृत्तित्वं ईश्वर-प्रसादस्यैवेति 'जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते' इत्यनु-व्याख्याने स्पष्टमुक्तमाचार्यैः। अत्र सर्वत्रेश्वरभक्तिः अनुषंजनीया। जिज्ञासा-ज्ञान-प्रसादानां पूर्वोत्तरहेतुहेतुमद्भाववतां च सावधारणत्वं ज्ञेयम् । जिज्ञासयैव ज्ञानं । ज्ञानेनैव प्रसादः, प्रसादादेव मोक्षः इति । अवधारणार्थकैवकारेणान्ययोगव्यवच्छेदः अयोगव्यावृत्तिश्चाभिप्रेयेते । अतः मोक्षसाधनेऽन्यवादिनां पक्षः प्रतिक्षेप्तव्यः स्वपक्षायोगव्यवच्छे-दश्च समर्थनीय. । तदर्थमयं साधनविचारः पदं लभते ।

साधनं द्विविधं । सिद्ध साध्य चेति । यथा ज्योतिष्टोमेन स्वर्ग-कामो यजेतेत्यत्र स्वर्गाय ज्योतिष्टोमयागः साध्यं (उत्पाद्यं) साधन ।

परशुना दारु छिनत्ति इत्यत्र छिदादिकार्यस्य परशुः सिद्धं (निष्पन्नं) साधनं। सिद्धं तु न स्वरूपतः साधनं किंतु सव्यापारीकरणीयम् क्रियानिष्पत्तौ। उद्यमननिपतनेन दारुसयुक्तः कुठार एव छिदां निष्पादयति न कुठारमात्रम्। इंद्रियं लिंगं शब्दश्च सिद्धं साधनं सन्निकर्ष परामर्श-व्युत्पत्तिज्ञानसमवहितमेव प्रत्यक्षज्ञानानुमितिवाक्यार्थ-ज्ञानानि यथाक्रमं उत्पादयति। अत्र श्रीहरिः मोक्षाख्यफलस्य सिद्धं साधनं। प्रसन्न एव श्रीहरि मोक्षं ददाति इति प्रसाद एव व्यापारः अन्वयव्यतिरेकाभ्यां सिद्ध्यति।

मोक्षे साध्ये फले तारतम्यमवश्यमभ्युपगंतव्यमिति मोक्ष-स्वरूपनिरूपणावसरे प्रमाणपुरःसरमुपपादितमतीतोपन्यासे। फल-तारतम्यं साधनतारतम्यानुबंधि। तच्च जीवस्वरूपतारतम्यं विना-नोपपद्यते। अतः जीवगणा हरेरनुचराः नीचोच्चभावंगताः इत्युक्तं सग्रहश्लोके। हरेरनुचराः इत्यनेन बिंबप्रतिबिंबभावरूपपारतंत्र्यमपि सूचितम्। अत्र हरेः बिंबस्यैक्येऽपि जीवानां प्रतिबिंबानां बहुत्वं (अनेकत्वं) उपाधिवैचित्र्याद्यथा रवेरेकत्वेऽपि जलसूर्यकांतकाष्ठलोष्ठा द्युपाधिभेदात्फले प्रतिबिंबे वैचित्र्यं दृश्यते तथाऽत्रापि। अत्रोपाधिः स्वरूपोपाधिः नित्य एवेति पराधीनताऽपि नित्या त्रैकालिका। अतः **अनुचराः** इत्युक्तं साध्वेव।

तृतीयाध्यायोक्तं विरक्ति-भक्ति-उपासना-ज्ञानेति पादचतुष्टये विभागेन प्रतिपादितं साधनजातं सामान्यतः निरूप्य अधिकारि-स्वरूपतारतम्यानुगुण साधनतारतम्यं निरूपयामोऽस्मिन्नुपन्यासे।

मोक्षसाधनं भगवत्प्रसाद एवेति तावदविवादम्। तत्साधनानि च विषयवैराग्यं भगवद्भक्ति, तदुपासना, तत्साक्षात्कार इति चत्वारि। तानि च न समकक्ष्याणि। किंतु आदौ वैराग्यं साध्य तेन भक्ति। न हि हेये रागवत उपादेये प्रेमोत्पत्तिरस्ति। वैराग्येण भक्तिदार्ढ्येन चोपासा भवेत्। निरंतरया चोपासनयाऽतिदीर्घम-नुष्ठितया प्रसन्नो भगवान् आत्मानं दर्शयति। 'अंबुदग्रहणात्तु न तथात्वं' 'अतोऽनंतेन तथाहिलिंगं' इत्यादि सूत्रेषु भक्ति विना न साक्षात्कारः अव्यक्तोऽपि परमात्माऽचिंत्यशक्त्या (अनंतत्वात्) व्यक्तो

भवति इत्युक्तम्। शास्त्रप्रवृत्तौ अधिकारसंपत्त्यर्थं विरक्ति-भक्ती सामान्यतः सिद्धे अपि तत्र फलोपधायकतया आधिक्य-दार्ढ्य-नैरंतर्यादिसिद्ध्यर्थं जिज्ञासुर्जीवः मोक्षोपयोगितया साधनपरिपाकं पोषयितुमर्हति।

आदौ तावदन्यमतानि मोक्षसाधने वादिभिः प्रस्तावितानि उपस्थाप्य परीक्ष्य स्फुटदोषानाविर्भाव्य वेदांताचार्यसिद्धांतं निवेदयामः। परपक्षप्रतिक्षेपेण स्वपक्षस्थापनमेव खलु सिद्धांतः।

विरक्तिर्न निरीश्वरैर्वेदबाह्यैर्जैनादिभिः सौगतैर्मायावादिभिश्च अंगीकृतः सर्वसंन्यासलक्षणः त्यागः। किं नाम परमात्मातिरिक्तवस्तुजातं नश्वरं वैषयिकसुखं दुःखानुबंधि तत्र स्वातंत्र्यभ्रमं विधूय परमात्मन्येव सर्वसमर्पणबुध्या समाश्रयणं। वस्तुगत्या अशोभने शोभनाध्यासो रागः तद्विरहः विरागः। स च शोभने शोभनत्वप्रकारकः अशोभनेऽशोभनत्वप्रकारक एव भवितुमर्हति। यथा इदं रजतमित्यत्र इयं शुक्तिः नेदं रजतम् इति। तथैव जगति पारतन्त्र्यासारत्वप्रकारकज्ञानं, परमात्मनि स्वातंत्र्यज्ञानं विना न घटते इति तदंगद्वयं अवश्यमभ्युपगंतव्यम्। सिद्धांते विरक्तिः न निषेधरूपा इति ज्ञेयम्। विः पक्षिपरमात्मनोरिति कोशबलात् विरक्तिपदेन परमात्मनि रागोऽपि लभ्यते। रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते इति गीताया सुष्टूक्तम्।

भक्तिश्च माहात्म्यज्ञानपूर्वः सुदृढः स्नेहः। विरक्तिभक्तिमत एव गुरुमुखेन परमात्मगुणश्रवणं वेदोपदेशः, तेन अज्ञाननिवृत्तिः, मननेन तत्वनिश्चयः ततः खण्डाखण्डचिंतने तेन तत्वसाक्षात्कारः संपद्यते। ज्ञानस्याव्यवहितपूर्ववृत्तिध्यानसाध्यत्वेऽपि श्रवणमनने अवश्यमनुष्ठेये इति तन्निर्धारणार्थंनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबंधः फलं इति सूत्रे वेदपतिना समर्थितम्। प्रतिबंधकनिवृत्तिरेव तयोः फलमिति। सर्वत्र भक्तिश्चूडामणीयते। अपरोक्षज्ञाने जाते परमात्मनः प्रसादः संवोभवीति। ज्ञानी प्रियतमोऽतो मे इति हि तस्य प्रतिश्रवः। अपरोक्षज्ञानेन मोक्षः नियत एव परं प्रारब्धकर्मरूपप्रतिबंधवशात् तन्निवृत्तिकालं विलम्ब्यते इति 'अनियमः सर्वेषां' इति सूत्रेऽभिहितम्।

तत्र तावत् नास्तिकाग्रेसरः चार्वाकः मोक्षमेव नानुमन्यते। निरर्गलसुखोपभोगमुपरोद्धुं वैदिकैः स्वप्रतिष्ठापरिपोषाय कल्पितोऽयं शशविषाणायितो मोक्षः क्लेशभूयिष्ठः न कस्यापि विवेकपटोः पुरुषस्य हृदयमावर्जयति। प्रत्युत मोक्षाभाव एव आबालगोपालमाजानसिद्धः प्रत्ययः। अतस्तस्मिन्ननादर एव शोभते न पुनस्तदर्थं क्लेशपंकनिमज्जनांगीकारः इति। किंच मोक्षे न किंचन प्रमाणं जागर्ति। प्रत्यक्षैकप्रमाणवादिनस्तस्य अतींद्रियमोक्षे अनुमानं आगमं वा प्रदर्शयितु न शक्यते। इति मोक्षस्वरूपमेवाक्षिपंतं चार्वाकं प्रतिबंद्या मोक्षाभावे किं प्रमाणमित्यनुयुज्महे। प्रतियोगिन. अतीद्रियत्वेन तदभावस्याप्यतीद्रियत्वान्न तत्र प्रत्यक्षं क्षमते समीक्षितुम्। अनुमानागमौ तु तेन नाङ्गीक्रियेते। चार्वाकवाक्येनैव मोक्षाभावः सिद्धयति महीयस्त्वात्तस्येति वक्त न शोभते। चार्वाकस्य महत्त्वमेव कुतः सिद्धम्। सर्वेषां समानत्व सावयतः तस्येतरेभ्यः वैशिष्ट्यं महत्त्वप्रयोजकमंगीकर्तुं कथमुपपद्येत। नोचेदन्यस्यापि तत्परिपंथिनः वैदिकस्य वैशिष्ट्यं कथमपलपितुं संभाव्यते। तपसा वा योगेन वा स विशेष उपचीयेत। तदुभयमपि अतीद्रियत्वात्तेन न मान्यते। धर्माभावमुपदिशता जनतायाः व्रतोपवासादिजन्यक्लेशनिवारणेन निरर्गलसुखोपभोगाय दत्तवरेण महानुपकारः कृतः इति जनास्तं गौरवेण संमानयंति। जनानुरागप्रभवा हि संपदः। अतः पूजनीयस्य तस्य वचसि विश्वास. संजाघटीति। इति विभावयंति चार्वाकाः स्वगुरो. गरिष्ठत्वम्। परं नैतद्विचारक्षमं बालभाषितम्। चार्वाकः अदृष्टादिकमतीद्रिय वस्तु नागीकुरुते। उपकर्तारमुपकुर्वंतीत्येतदपि सत्यामेव धर्मादिवासनायां। सा तु तेनैव निश्शेषीकृता। कुतस्तादृशनिरर्गलप्रवृत्तेर्लोककंटकस्य महीयस्त्वप्रत्याशा। अत. चार्वाकेण धर्माभावसाधनमाकाशरोमथायितम्।

पर वेदप्रामाण्याभ्युपगंतृणां आस्तिकधुरंधराणां मते मोक्षसद्भावे प्रत्यक्षादिप्रमाणत्रयमपि उदाहर्तुं प्रभवाम। यद्यपि नास्तिकाग्रेसरः अनुमानागमौ नांगीकुरुते। तथाऽपि नाऽसौ यथार्थवादी। जगति व्यवहारनिर्वाहाय तेनापि तौ अवश्यमंगीकार्यावेव। अन्यथा परचित्तगतस्यातीद्रियत्वात् तद्वचनस्य प्रतिवचन दातु स्वयं कथं प्रवर्तेत

विनाऽऽगमानुमानाभ्यां तदवगमं। लोकायतः स्ववाक्येन स्वस्य वचसि प्रामाण्यं साधयितुमीहते किल। तर्हि अभ्युपगतमागम-प्रामाण्यं व्याहतभाषिणा तेनैव। किंच तन्मतप्रवर्तनेन महाननर्थः संभवति लोके। निष्प्रत्यूहं जनाः परधनवनिताद्यपहारे स्वैरविहारे परोपकारव्याजेन व्यापारयंत्यात्मानं। कपर्दिकालाभाय कोटिव्ययकर्ता लोकायतः न प्रेक्षावान् समीक्ष्यकारी भवितुमर्हति।

नैतावता अलम्। धर्माभावः न केवलमप्रामाणिकः किंतु महतीं विनष्टिमादधाति जनतायाः। धर्मे पुनः प्रत्यक्षादिप्रमाणत्रयं स्फुटमवगम्यते। ज्ञानविज्ञानपारज्ञा योगनिष्ठाश्चामलचक्षुषः योगसामर्थ्येन परदेवतां साक्षादुपलभ्य तत्प्रसादासादितप्रकाशैश्वर्यवंतः वसिष्ठादयो महर्षयः लोके दृश्यंते यैः मानुषमानातीतं विध्यपर्वत-स्थगनादिकं समुद्रपानादिक चाद्भुतं कर्म चरित्वा स्वमाहात्म्यं प्रकाशितम्। प्रत्यक्षीकृतं च जनैः तन्माहात्म्यं यत्तैर्योगिभिः दत्ता वराः शापाश्च सदा अव्यभिचारेणावितथा भवति इति। वेदस्य नित्यत्वं प्रामाण्यं चाभ्युपगम्य तदप्रामाण्ये मतिः कथं प्रवर्तते विवेकिनां पटुधिषणानाम्। प्रतीतार्थप्रच्यावनेनाविसंवादः समर्थनीयः। अतः वेदोक्तार्थस्य क्वचिद्विसवादस्तु कर्तृकर्मादिवैगुण्यनिमित्त इत्येव पर्यवस्यति। पौरुषेयशब्दप्रामाण्यमभ्युपगंत्रा वेदप्रामाण्यमगत्यां-ऽगीकरणीयमेव। अन्यथा सर्वप्रामाणिकव्यवहारोच्छेदः प्रसज्येत। लोकायतेन एकाकिना स्वैरमतिना महांतं लोकसंघातमनादृत्याऽव-स्थातुं न जातु पार्यते विनोन्मत्तेन विवेकशून्येन। अनुमानमपि जागर्ति अस्मिन् विषये। यथा फलभोगवैराग्यवतां योगिनां प्रवृत्तिः सफला प्रेक्षावत्प्रवृत्तित्वात्। यथा संप्रतिपन्न इत्यनेन परमपुरुषार्थस्य मोक्षस्य सिद्धिः। प्रत्यक्षागमानुगृहीतानुमानप्रामाण्यं 'अभ्युपगमेऽप्यर्थाऽभावात्' 'तर्काप्रतिष्ठानादत्यन्यथानुमेय' इत्यादि सूत्रभाष्येऽनुव्याख्यानसुधा-प्रमाणपद्धत्यादिग्रंथेषु निपुणतरमुपपादितम्।

किं चातीद्रियार्थाभावेन प्रत्यक्षेतरस्याप्रामाण्यात् कथं शास्त्रा-दीश्वरसिद्धिरित्याक्षेपे, सूत्र भाष्ये मोक्षधर्मवचनमुदाहृत्य समाहितं। यथा—

रेतोधातुर्वटकणिका घृतधूमाधिवासनं ।
जातिस्मृतिरयस्कांतः सूर्यकांतोऽबुभक्षणं ॥
प्रेत्यभूताप्ययश्चैव देवताभ्युपयाचनम् ।
मृतेकर्मनिवृत्तिश्च प्रमाणमिति निश्चयः ॥

इति मोक्षधर्मवचनान्न नास्तिक्यवादो युज्यते । इति । अयमत्राशयः । रेतःशरीरयोः कार्यकारणभावोऽस्ति । न चाऽसौ प्रत्यक्षः अतोऽन्वयव्यतिरेकित्वाख्यानुमानस्य मानत्वसिद्धिः । मृतशरीरे सिक्तस्याकारणत्वेन यदधिष्ठिते परिणमते तज्जीवसिद्धिः । न च जीवत्सर्वशरीरे पतितं कार्यकरमतस्तत्प्रेरकेश्वरादृष्टसिद्धिः । ततस्तत्प्रतिपादकागमप्रामाण्यसिद्धि. । एवं वातादिधातुरपथ्याद्विक्रियते नाऽपि मृतशरीरे न जीवच्छरीरेषु सर्वेषु । धूमादिवासनेन वृक्षेषु पुष्पादिसपत्तिर्जायते । न च शुष्केषु नाऽप्यशुष्केषु सर्वेषु । साधनविशेषाज्जातिस्मृतिर्भवति न चेतनाभावे सा युक्ता न चास्ति सर्वेषा। अयस्कांतेन अयो भ्रमति नचाचेतने चेष्टकत्वम् । न च सर्वाचेतनानां । सूर्यकातेन अग्निर्जायते न चासौ शक्तिः अचेतने युक्ता । अंबुभक्षणेन तृष्णा निवर्तते न च तन्मृतशरीरे पच्यते न च जीवत्सर्वशरीरेषु । मरणेन देहस्य भूतेष्वप्ययो भवति न च जीवतो न स्वेच्छया । देवताभ्युपयाचनेन संपदादिकं भवति न च सर्वेषां । मरणेन चेष्टानिवृत्तिर्भवति न पुनः स्वेच्छया । एतैः प्रमापकैरनुमानजीवेश्वरागमादृष्टादिसिद्धेर्न नास्तिक्यवादो युज्यते इत्यर्थः । इतश्चासौ न युज्यते इत्याह । दर्शनाच्च तपआदिफलस्य इति । अत्युत्कटतप पापाभ्यां प्रत्यक्षत एव फलं दृश्यते । न च तत्र कारणांतरमस्ति । अतस्तत्कार्यकारणभावोऽनुमानवेद्यः इति ततन्मानत्वसिद्धिः । तप आदीनां वैदिकत्वादागममानत्वसिद्धिः । ततश्चेश्वरादिसिद्धिरिति न नास्तिक्यवादो युज्यते । (तत्वप्रकाशिका) । अतः मोक्षसद्भावः प्रामाणिकत्वादभ्युपेय एव चार्वाकेणाऽपि ।

तार्किकोक्तिरपि मोक्षास्तित्वसाधिका न क्षोदक्षमा विदुषां परितोषायावकल्पते । मोक्षमंगीकुर्वतोऽपि तेऽन्यथा भाषंते । एकविंशतिदुःखध्वंस एव मोक्ष इत्याचक्षतेऽक्षपादपक्षपातिनः । अनुमिमते च—

दुःखसंततिः अत्यंतमुच्छिद्यते संततित्वात् दीपज्वालासंततिवत्

इति। जीवगतदुःख संततिपक्षीकारे नित्यसंसारिजीवानां केषांचिद्दुःखसत्वस्य तैरंगीकृतत्वात् अंशे बाधः। तद्व्यतिरिक्तजीवांगीकारे तत्रैव नित्यसंसारिषु व्यभिचारः। अनुमानमात्रेण मोक्षस्वरूपं निरूपयता तार्किकेणाऽपि विस्पष्टं वस्तुतत्वं विस्मृतमेव। मोक्षस्वरूपमेव न निर्णीतमिति तत्साधनचिंताऽनवसरप्राप्ता। तथाऽपि तदुक्तं किंचिद्विव्रियते पुरस्ताद्वैदिकाभासमतनिरास प्रस्तावे।

अवैदिकधुरंधरः जैनः आदौ विचारपदमानेष्यते। चार्वाकापेक्षया जैनस्येदमेव ज्यायस्त्वं यत्स मोक्षं तत्साधनं चाभ्युपैति। तथापि तद्विशेषे बहुला विप्रतिपत्तिर्दृश्यते। सम्यग्ज्ञानसम्यक्चारित्र्यसमुच्चयसाध्यं मोक्षमाचक्षते जैनाः। अस्मिन् विषये नाऽतीवविवाद. यतः अस्माभिरपि मोक्षस्य कथं चित् धर्म-ज्ञानसमुच्चयसाध्यत्वमंगीक्रियते। इद साधन अनुमानाद्यवगताप्तभावजिनवाक्यादवसीयते इत्याहुः। आप्तोक्तत्वानुमानाज्जिनवाक्यस्य प्रामाण्यावधारणं सुतरां नोपपद्यते। यतः आप्तिः विवक्षितार्थतत्वज्ञानं अविप्रलिप्सा करणपाटवं चेति गुणत्रयघटिता। धर्मो ज्ञानं च मोक्षसाधनं इति मोक्षसाधनं वदतः जिनस्यातीन्द्रियस्य धर्मस्य प्रत्यक्षविषयत्वं नांगीकारार्हम्। प्रत्यक्षागमानुग्राह्याऽनुमाऽपि नाऽऽकलयितुं प्रभवति धर्माधर्माद्यतींद्रियवस्तु। प्रत्यक्षस्याप्रसरात् आगमस्य परस्परानभ्युपगतेः। तदागमस्य नाऽस्माकं प्रामाण्यं। अस्मदीये न तदभ्युपगतिः। अविप्रलिप्सा च दुरधिगमा। अस्खलितवाक्त्वेन तस्याऽऽप्तत्वसाधनमपि न संभवति। जिनः आप्तः अस्खलितवाक्त्वादित्युक्तेऽसिद्धिमुद्घाटयामः। मन्वादिवाक्येषु अपौरुषेयवेदमूलेषु प्रामाण्यं उपजीव्यप्रामाण्येन सिद्धं। जिनेन वेदप्रामाण्यानंगीकारात्तद्वाक्यस्य निर्मूलत्वात् कथं तत् प्रामाण्यमश्नुयात्। जिनस्यास्खलितवाक्त्वं निश्चायकाभावादसिद्धमित्युक्तम्। तद्वाक्यस्य स्खलितत्वमपि प्रसिद्धं। स शरीरपरिमाणमात्मस्वरूपमाह। तच्च सर्वथा नोपपद्यते। यत शरीरस्यानित्यत्वादात्मनोऽपि अनित्यत्वं प्रसज्येत। पिपीलिकागजादिदेहेषु आत्मनः आधिक्यमपर्याप्तिर्वा स्यात्। जिनस्य सप्तभंगीनयोऽपि सूत्रकारेण दूषितः नैकस्मिन्नसंभवादित्यादिसूत्रेषु समयपादे जैनसमयनिरासप्रस्तावे। पुद्गलदर्शनं मोक्षसाधनमिति ब्रुवाणो जिनः तस्य पुद्गलस्य सप्त प्रकारानाह।

आत्मप्रतिनिधिभूतस्य पुद्गलस्य (पुद्गलनाम्नः आत्मनः) पुंस्त्वादिवत्त्वस्येति सूत्रे आनंदादिस्वरूपत्वं साधितं। सुखस्य दुःखाभावरूपत्वं मनुते जिनः। तेन आत्मनः सुखात्यंताभेदः पुंस्त्वादिसूत्रसिद्धः व्याहन्येत। एवं जिनस्य स्खलितभाषणवत्त्वात् आप्तत्वं तेन तत्प्रामाण्यं च नोपपद्यते इति स्फुटमावेद्यते। युक्तिविरुद्धं च तदुक्तात्मज्ञानस्य मोक्षसाधनत्वं। साक्षान्मोक्षसाधनत्वे आत्मज्ञानं (जिनोक्तं) न मोक्षसाधनं अचेतनत्वात् इति सत्प्रतिपक्षानुमानं जागर्ति। नहि अचेतनस्य मोक्षदत्वं कुत्रापि दृष्टम्। ज्ञात आत्मा प्रसन्नः सन् मोक्षं ददाति इत्यपि वक्तुं न शक्यते। 'अस्वातंत्र्यात्पुद्गलस्य ज्ञातोऽपि सुखदो न हि। न हि दुःखपरिज्ञानाद्दुःखित्वं विनिवर्तते।' (अनुव्याख्यानम्) इति आचार्यैः स्पष्टं जिनोक्तात्मनः दुःखित्वादस्वातंत्र्यमुपपादितं। प्रकाश अंधकारं यथा निवर्तयति तथाऽऽत्मज्ञानमपि दुःखं निवर्तयति। तत्र किमचैतन्यं करिष्यति। तथाऽऽत्मज्ञानेन दुःखनिवृत्तिर्भवत्येवेत्युक्ते ज्ञानेन दुःखनिवृत्तौ तदैव अविलंबेन ज्ञानादुत्तरकालमेव सदा निरंतरमदुःखी स्यादात्मा। तच्च न दृष्टं जिनस्यापि अवगतात्मतत्त्वस्य। विलंबे चेतनस्य स्वतंत्रस्येच्छैव नियामिका। तच्च नांगीकृतं जिनेन। एवं जिनोक्तात्मज्ञानस्य मोक्षसाधनत्व निराकृतं। तदुक्तधर्मस्यापि मोक्षसाधनत्वं नोपपद्यते एव।

धर्मस्य (जडत्वात्) निश्चेतनत्वात्तस्य मोक्षदत्वं कथमुपपद्येत। विमतो धर्मः न मोक्षसाधनं अचेतनत्वात् पटवत् इत्यनुमानेन तस्य मोक्षसाधनत्वाभावः साध्यते। अस्माभिस्तु ईशप्रसादेन मोक्ष नान्यथेति सिद्धांतितं श्रुत्यादिप्रमाणबलेन। प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्यही'त्यत्र वेदप्रामाण्यं समर्थितं। अनुमानेनाऽपि ईश्वरप्रसादस्य मोक्षसाधनत्वमवगम्यते।

संसारबंधहानिः समर्थपुरुषांतरप्रीतिनिबंधना। बंधहानित्वात् राजप्रसादाधीनभृत्यनिगडबंधहानिवत्। यश्चासौ पुरुषः स एवेश्वरः। विप्रतिपन्ना प्रीतिः गुणोत्कर्षादिज्ञानजा अनिजप्रीतित्वात् राजप्रीतिवत्।

शक्तस्यान्यस्य विज्ञानं तत्प्रीतिजनकं यदि।
तयैव बंधहानिः स्यादिति किं नाम दूषणम्॥

सर्वथाऽत्यनिष्टनिवृत्तिः ईश्वरप्रसादाधीनेति तत्वविदां पंथा। धर्मादिज्ञानेन मोक्ष इति वदतो जिनस्य स्खलितवाक्त्वं स्फुटमेव। धर्मादिज्ञाने प्रमाणं वक्तव्यम्। जिनवाक्यादित्युक्ते जिनस्य तद्वाक्यस्य च प्रामाण्य न सुसाधमिति प्रागेव दूपितम्। किं च तदुक्ताहिंसाया धर्मत्वं सत्प्रतिपक्षितं भिन्नकाचार्येण हिंसाया धर्मत्वं वदता। तथा च न धर्मनिश्चयः स्यात्। तदुक्तधर्मादे. मोक्षसाधनत्वमपि अप्रामाणिक।

**अहिंसायाश्च धर्मत्वं केन मानेन साध्यते।**
**हिंसाया एव धर्मत्वमित्युक्ते स्यात्किमुत्तरम्॥**
**धर्मस्य सुखहेतुत्वमपि केनावगम्यते।**
**हत्यायाः मोक्षहेतुत्वं कुतोमानान्निवार्यते॥**

अनुव्याख्यानम्

एवं च जिनस्य तद्दर्शिनां च आप्तत्वाभावात् तद्वाक्यमप्रमाणं। प्रमाणविरुद्धं च। तदभिमतधर्मज्ञानादिक न मोक्षसाधनमिति सुष्ठूपपादितम्।

एव तथागतमतमपि मोक्षसाधनं नांगीकारार्हं। पूर्ववत् शून्यपरिज्ञानादिक मोक्षसाधनमिति वदंतो बौद्धाश्चतुर्विधा अपि निरस्ता वेदितव्या.। तत्र प्रमाणाभावात्। ज्ञानोत्तरकाले एव बधनिवृत्तेरदर्शनात्। अध्यासस्य च सवृतिनामकाज्ञाननिमित्तस्य प्रमाणविरुद्धत्वादप्रामाणिकत्वाच्च न तदभिमत मोक्षसाधनं प्रेक्षावद्भिरुपादेयं भवितुमर्हति। विज्ञानशून्याद्वैतवादे क्षणिकवादे च अकृताभ्यागमकृतविप्रणाशादयोऽपि दोपाः स्फुटा एवेति नोक्ता.।

**विज्ञानभावनाच्चैव मोक्षो न घटते क्वचित्।**
**अंतर्ज्ञाने च बाह्ये च क्षणिकत्वस्य वेदनात्॥**
**भावनाच्चोक्तमार्गेण मानाभावान्न मुच्यते॥**

अनुव्याख्यानम्

वैदिकंमन्येषु साख्यतार्किकादयोऽपि मोक्षसाधनं विपरीतमाहुः। तथाहि। प्रकृतेः अतःकरणरूपायाः पुरुपाद्विवेकः स्वरूपतो धर्मतश्च भेददर्शनं मोक्षसाधनमिति सांख्याः प्राहुः। तन्न चारु। ईशप्रसादेन विना केवलं प्रकृति-पुरुप विवेकः मोक्षसाधनमित्यस्मिन्नर्थे मान नास्ति।

प्रकृति-पुरुष विवेको हि वैराग्य-भक्ति-प्रसादद्वारा मोक्षसाधनमिति स्पष्टं प्रतीयते ॐ अथाऽतो ब्रह्मजिज्ञासेति सूत्रे जिज्ञासोत्थ ज्ञानजात्त-त्प्रसादादेव मुच्यते इत्यनुव्याख्याने च । श्रुतयस्तु, यस्य प्रसादात्पर-मार्तिरूपात्, अज्ञानां ज्ञानदो विष्णुः ज्ञानिनां मोक्षदश्च सः । आनंद-दश्च मुक्तानां स एवैको जनार्दनः । इत्याद्याः ईश्वरप्रसादमपेक्षते मुक्तिप्राप्तौ । अतः लांगलेन जीवाम-इतिवत् प्रकृतिपुरुषविवेकः परंपरया मोक्षसाधनमित्युक्ते वयमनुमोदामहे ।

एवं वैशेषिका· योगाः (पातंजला.) अपि अनुपपन्नभाषिणः । य त्तैरीश्वरप्रसादः अंगीकृतस्तथाऽपि न साक्षान्मोक्षसाधनत्वेन किंतु तत्व-ज्ञानसहकारित्वेन । अक्षपादो वदति आत्मादि ज्ञानमपि न साक्षान्मो-क्षसाधनं । किं नाम परमेश्वरप्रसादोपेतमेव । पतंजलिरपि तपः-स्वाध्यायादिसमानकक्ष्यतया ईश्वरप्रणिधानमाह । एवमेते त्रयोऽपि वादिनः ईश्वरप्रसादस्य प्राधान्यं नानुमन्यंते । किं च भोगेनैव कर्मक्षयः इति सौभर्यादियोगिन. कायव्यूहेन कर्मक्षयमापुरिति सुविदितमेव । वैशेषिकास्तु तत्वविद इव ज्ञानात्पूर्वेषां कर्माणां ज्ञानादेवेश्वरप्रसादोपस्कृतान् विनाशं न मन्यंते किंतु समाधिपरि-पाकमहिम्नाऽपरिमितदेहनिर्माणेन अनंतान्यपि कर्माणि विषम-विपाकसमतान्यपि पिंडीकृत्य तत्फलंसुख दुःखं भोगेनैव ज्ञानिनः विनाशयंतीत्याहुः । तदेतच्छ्रुतिस्मृत्यादिप्रमाणविरुद्धं । ज्ञानेन प्रसन्नो भगवानेव अभुक्तफलान्येव कर्माणि विनाशयतीति 'तदधिगमे उत्तर-पूर्वाघयोरश्लेषविनाशौ" इत्यादि सूत्रेषु सूत्रकारैः वादरायणमुनिभिः सिद्धांतितम् । एवमन्यथोपपत्त्याऽप्रामाणिकं भोगादेव कर्मक्षयः इति न कल्प्यम् । नाऽभुक्तं क्षीयते कर्मेतिवचनं अकृतप्रायश्चित्तपरं अज्ञ-विषयं ज्ञानिनामपि प्रारब्धविषयमिति ज्ञातव्यम् । 'उपमर्द च' इति सूत्रेऽपि ज्ञानिप्रारब्धकर्मण्यपि क्वचित् ह्रासोऽभ्युपगम्यते । भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः । क्षीयंते चास्य कर्माणि तस्मिन् दृष्टे परावरे इति श्रुतिस्तु भगवद्दर्शनेन प्रारब्धातिरिक्ताशेषकर्मक्षयं ब्रूते नतु भोगेनेति भावः ।

पाशुपता अपि शैव-पाशुपत-कालामुख-महाव्रतभेदेन चतुर्विधाः

स्कांदसौरादयोऽपि संसारधर्मैरीपदप्यस्पृष्टपरमशिवप्रसादेन मुक्ति-रित्याहु. । तदपि न प्रामाणिकं । अस्माभिरपि शिवादीनां मोक्षसाधन-त्वमभ्युपगम्यते एव । न साक्षात् कि तु परंपरया । 'मोक्षो ज्ञानं च क्रमशो मुक्तिगो भोग एव च । उत्तरेषां प्रसादेन नीचाना नान्यथा भवेत् ।' इत्युक्तेः । स्वातंत्र्येण शिवादीनां मोक्षदानेऽसामर्थ्यात् तथो-पासने महाननर्थो भवतीति श्रुतिस्मृत्यादिषु जोघुष्यते । पाशुपता अपि ज्ञानिनो भोगादेव कर्मक्षयमाचक्षते । परं तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयते एवमेवेहास्य सर्वे पाप्मानः प्रदूयंते इति श्रुत्या ज्ञानेनैव प्रारब्धातिरिक्तकर्मक्षयः प्रतिपादितः ।

अतो विष्णुपरिज्ञानादेव मुक्तिर्न चान्यथा ।
तद्यथेतिश्रुतेश्चैव ततः कर्मक्षयो भवेत् ।।

अनुव्याख्यानम् ।

भाट्टास्त्वाहुः । कर्म नानाविधं नित्यं नैमित्तिकं काम्यं निषिद्धं चेति । सुखदुःखतत्कारणरूपो हि संसारः । स च कर्मनिमित्त एव । नित्यनैमित्तिकयोरकरणे अधर्मप्रचयेन दु.खतत्साधनावाप्तिरस्य भवति । निषिद्धकरणेऽपि तथा । काम्यकरणे तु धर्मोत्पादनेन सुख-तत्साधनावाप्तिर्भवति । मुमुक्षुस्तु नित्यं नैमित्तिकं च नियमेन करोति । परित्यजति च निषिद्धमिति न दुरितोपचयः । काम्यमपि परित्यजतीति न धर्मोपचयः । एवमनागतयोः धर्माधर्मयोरनुत्पादे प्रागुपात्तौ च भोगेन क्षपयन्निर्बीजाया. संसृते र्मुच्यते इति ।

नित्यनैमित्तिकं कर्म कुर्वन्नन्यत्परित्यजन् ।
मुच्यते संसृतेश्चैतदप्येतेन निराकृतम् ।।

अनुव्याख्यानम् ।

नाऽन्यः पंथा अयनाय विद्यते इति श्रुत्या भगवज्ज्ञानव्यतिरिक्त-मोक्षसाधननिषेधेन कर्मणामनंतत्वात् प्रायश्चित्तस्य सम्यगनुष्ठातुम-शक्यत्वात् भोगेन तत्परिक्षय इति वार्ता तु दूरतोऽपास्ता इति वेदि-तव्यम् ।

एवं भ्रममूलानि मोक्षस्वरूपतत्साधनविषये प्रवृत्तानि मतानि निराकृत्य परमवैदिकमतमुपस्थापयितु अस्मिन् विषये ज्ञानकर्मसमुच्चयवादिनां वृत्तिकाराणां मतमपि विमृश्यापाकृत्य भगवत्सिद्धांतमुपपादयिष्यामः ।

तमेवं विदित्वेति नाऽन्यः पथा अयनायेति द्विरुक्तत्वात् समादरेण ज्ञानस्यैव मोक्षसाधनत्वमवसीयते । ससारनिवृत्तिमात्रं केवलेन ज्ञानेन भवति । आनंदवृद्धिस्तु कर्मसापेक्षेणैव ज्ञानेनेति भगवतः पंथाः । अतः ज्ञानकर्मसमुच्चयनियमे न किमपि प्रमाण जागर्ति । कर्मणा ज्ञानमातनोति ज्ञानादेव तु कैवल्यमित्यनेन कर्मण ज्ञानद्वारा मोक्षसाधनत्वमवसीयते । तत्कर्म हरितोपं यत् इत्यनेन अधमः प्रसाद. सूचितः येन स्वर्गादिनश्वरफलमुदेति ।

**कर्मणात्वधमः प्रोक्तः प्रसादः श्रवणादिभिः ।**
**मध्यमो ज्ञानसंपत्त्या प्रसादस्तूत्तमो मतः ॥**
**प्रसादात्त्वधमाद्विष्णो स्वर्गलोकः प्रकीर्तितः ।**
**मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः ॥**

श्रवणादिजन्यमध्यमप्रसादेन जनलोकप्राप्ति ज्ञानसंपत्तिफलेनोत्तमप्रसादेन मोक्षो भवतीति साधनव्यवस्था कृता । ज्ञानयोगिनः कर्मयोगिनः इत्यादिविभिन्नाधिकारिषु तत्तदंशप्राचुर्येण साधनफलयोः भेद अंगीकार्यः । अपवर्गस्य कृते ज्ञानमेव भक्तिप्रसादद्वारा परमसाधनं । अन्यथा ब्रह्ममीमांसा शास्त्रमेव निर्विषयं निरधिकारिकमापद्येत ।

मायावादिनस्तु प्रच्छन्नबौद्धाः बौद्धमतनिरासेन निरस्तप्रायाः । तथाऽपि पारिभाषिकसंकेतभेदमाश्रित्याऽऽत्मनस्ततो वैलक्षण्यमभिमन्वाना. तेऽपि विमर्शपदमानीय निराकार्याः सत्सिद्धांतप्रतिष्ठापनाय । ते आहुः । द्विविधो हि मोक्षः । परः अपरश्चेति । तत्रापरः वैकुण्ठसत्यलोकप्राप्तिलक्षणः । परस्तु अविद्याऽस्तमये सति अद्वैतब्रह्मावस्थानरूपः । प्रतीकादिविषयमन्यथोपासनं अपरस्य साधनं । परस्य तु एकत्वज्ञानमिति । एषा स्वकपोलकल्पिता प्रक्रिया निर्मूला सर्वथा

नांगीकारार्हा भवति । 'न प्रतीके न हि स' इति सूत्रे मिथ्योपासनायाः निदितत्वात् तया न किमपि फलगुदेति प्रत्युतानर्थफलमेवभवतीति सर्वैरभ्युपगंतव्यम् । वैकुण्ठादिप्राप्तिस्तु दूरतोऽपास्ता । तमेवं विदित्वातिमृत्युमेतीति एवं इति सप्रकारकज्ञानस्यैव मोक्षहेतुत्व-श्रवणात् निर्विशेषत्वज्ञानं गगनकुमुमायितं । परापरविभागोऽपि मोक्षे न प्रमाणपदवीमारोहति । पृथगुपदेशादित्यादि सूत्रेषु ऐक्य-ज्ञानस्य मोक्षसाधनत्वं निवारितं । अद्वैतवादेऽज्ञानस्यैवासभवात्तन्म-तमखिलमपाकृतं वेदितव्यम् । ज्ञानेनाऽज्ञाननिवृत्तौ सद्य एव मोक्षप्रसंग. स्यात् । तन्न दृष्टचर ।

अतः

**अज्ञानां ज्ञानदो विष्णुः ज्ञानिनां मोक्षदश्च सः ।**
**आनन्ददश्च मुक्तानां स एवैको जनार्दनः ।।**

इत्यादि प्रमाणबलात् प्रसन्न. ईश्वर एव (ईश्वरप्रसाद एव)। मोक्षसाधन। तदर्थं विरक्ति भक्ति. श्रवणादिरूपा जिज्ञासा ज्ञान अत्यर्थप्रसाद. इति साधनप्रपचे क्रमोऽनुसंधेय । ध्यानेनैव ज्ञानसिद्धौ श्रवणमनने अप्रतिपत्तिविप्रतिपत्ति रूपप्रतिबधनिवृत्त्यर्थमवश्यमपेक्षिते इति तन्निर्धारणार्थनियमस्तदृष्टे पृथग्ह्यप्रतिबंधः फलमिति सूत्रे समर्थितम् ।

एवं अनेकयुक्तिभिः श्रुतिस्मृतिप्रमाणैश्च प्रतिपक्षनिरासपूर्वकं समर्थितं भगवत्सिद्धांतं मोक्षसाधनविषयकं विदित्वा आत्मानं कृत-कृत्यममन्यंत सम्मिलिता. यात्रिकभक्ताः । श्रीचरणाश्च उपन्यासकस्य पण्डितवरेण्यस्य उपन्यासपाण्डित्य मुक्तकण्ठं श्लाघयामासुः ।

## रजतरथोत्सवः

अद्य मध्यमाराधनानिमित्तं रजतरथोत्सवः गजवाहनोत्सवश्च उभौ सवैभवं संपद्येते । स रजतरथः धनिकैनैकेन श्रीगुरुराजाय सकलपरिष्कारसंपन्नः गुरुसार्वभौमयात्रोत्सवार्थं प्रदत्तः । यथाविधि तक्षणाग्निसंस्कारशस्त्रनिकर्तछेदनादिप्रयुक्तदोषनिवर्हणार्थं होमहवनादिस्मार्तसंस्कारः पावित्र्यसंपादनाय रथायोपकल्पितः आसीत्प्रागेव । श्रीगुरुसार्वभौमाणामुत्सवविग्रहः आनीय रजतरथे स्थापितः । गजवाहनस्योपरि श्रीगुरुसार्वभौमाणां सुंदरपुरुषाकारमूर्तिं रजतमयी कनकमौक्तिकर्निचितरत्नमाणिक्यहारैर्भूषितां कौशेयवासःपरिधानांशुकपरिष्कृतां आरोप्य सवाद्यवैभवं एकवारं गुरुवरमंदिरं प्रदक्षिणीकृत्याऽनीय रजतरथे न्यधापयन् कार्मिकपुरोहिता नियुक्ताधिकारिणामाज्ञया । गजवाहनमपि रजतरथस्य पुरोभागे निदधुः । महानयं संभ्रमः समजनि यदस्मिन् रात्रिसमये श्रीगुरुराजः गजवाहनयात्रां समाप्य पुनः समतात् यात्रायै प्रस्थितः जनमनोनयनानंदाय । भव्य स्वरूपः श्रीराघवेंद्रयतींद्रः रजतरथारूढः शोभतेतराम् । विकसयति जनमनःकुमुदकोरकाणि विद्रावयति चित्तव्यथां । सम्मेलयति साक्षिमनः आत्मना स्वरूपानंदमनुभवितुम् । विसंवादमपसारयति । विप्रलंभं प्रलंबयति । नेत्रमन्यतः प्रपंचादपसार्य परमात्मन्यासंजयति । कि बहुना सगजराजतरथोत्सवः श्रीहरिमदिरं वैकुण्ठमवतारयति भूतले । कविरेकः गजवाहनं रजतरथोत्सवं च दृष्टवा भक्तिरसप्रवाहं वाहयन्निजगाद पद्यपट्केन ।

रजतस्यन्दनारूढं प्रह्लादं दैत्यबालकं ।
दृष्टवा सुजनसंह्लादं कोऽन तृप्येत निर्वृतः ॥ १९ ॥

संसारकर्दमोद्विग्नं कामाद्यरिगणार्दितं ।
विवेकशून्यं शुण्डालं गुरुरारुह्य मोचयेत् ॥ २० ।



श्रीसुयमीन्द्रतीर्थपूज्यपादाः परितः पण्डितप्रकाण्डैः छात्रवर्गैश्च परिवेष्टिताः कलधौतरथस्याग्रभागे विराजते स्म सुधांशुरिव तारागणैर्गगनमण्डले क्षणदायाम् । (प. १८७)

रजतस्यंदनारूढं प्रह्लादं दैत्यबालकम् ।
दृष्ट्वा सुजनसंह्लादं को न तृप्येत निर्वृतः ।।
(प. १८६ श्लोक १९)

इत्थं संशिक्षयन् श्रीहरिगुरुचरणांभोजभृंगः कृपालुः ।
प्रह्लादो राघवेंद्रः स्वचरितविधया सज्जनानां धुरीड्यः ॥
आरोहन् राजति स्म द्विरदतनुतटं ध्यानसक्तः परात्म- ।
न्याजह्लुभंक्तिभूषामणिगणनिधयः स्वागतं भूरिधाम्ने ॥ २१ ॥

संवर्णयंतु कवयः कतमः शुशोभ ।
मेरू रसातलगतः सितशेषभोगः ॥
कैलासशैल उत नाकजनागराजश्चंद्र- ।
प्रभा शिवरथो वृषभः प्रतीत. ॥ २२ ॥

सर्वे समीक्ष्य हतकांतितया निचिक्युः ।
श्रीराघवेंद्रगुरुरेव गंजाधिरूढः ॥
निर्जित्य षड्रिपुगणं गतभीः श्रितश्री- ।
जानिश्चकास्ति विदिताखिलवेद्यजात. ॥ २३ ॥

कौंतेयवद्रथारूढः यादवेंद्रनियंत्रित ।
गुरुराट्प्रतिभात्यत्र पुरुरूपवशंवद. ॥ २४ ॥

श्रीसुयमींद्रतीर्थपूज्यपादाः परितः पण्डितप्रकाण्डै छात्रवर्गैच परिवेष्टिताः कलधौतरथस्याग्रभागे विराजंते स्म सुधांशुरिव तारागणैर्गगनमण्डले क्षणदायाम् । कलाकृतिप्रतीकोऽय रौक्मशतांगः प्रह्लादवेषेण श्रीराघवेंद्रेण समारूढः कलिनिग्रहायोत्तरेयेण परीक्षिता धनुर्भृता समाक्रातः स्यन्दन इव घोटकचतुष्कसवाह्यमान परिदृश्यते। सप्तसप्तिर्वा तमस्ततिविलापनेऽनूरुचोदितं रथमारुह्य सत्पुण्डरीकप्रबोधनाय विजययात्रामुपक्रांत इव विभाव्यते । युगावसाने साक्षान्नारायण. कल्किरूपेणावतीर्य दुष्टराक्षसपिशाचादिराजन्यक्षत्रियानुत्कृत्य सद्धर्मप्रवर्तनाय रथमधिरुह्य समायात इत्यूह्यते । अथवा व्यासो नु वेदव्यासः धर्मत्रातरिरक्षया चतुर्वेदचक्रोपलक्षितब्रह्मसूत्रनेमिधारितब्रह्माण्डविज्ञानरथमधिरुह्य वरदहस्तेन पुन. कार्तयुगमवतारयति किम् । इति बहुधा तर्कयंतः कविकुजराः संसारकर्दमगजमवमृद्य तत्पृष्ठमारोहन् जितेंद्रियो विरक्तचूडामणिरीपणात्रयातीति साक्षादपरोक्षीकृतश्रीश. श्रीगुरुसार्वभौमः वैराग्यविज्ञानफलमीदृगिति बोध-

यितु जगच्चक्ररथमधिष्ठित इति दण्डकाष्ठकापायवासोविशेपलिंगेन निरणंषीरन् युक्तिप्रयुक्तिसशोधितधिया । ब्रह्माण्डशरीररथे श्रीभाविपद्मभूवायुसारथिचोदिते श्रीहर्यधिष्ठिते इन्द्रियाण्यश्वरूपेण चेष्टंते इति लोकप्रवृत्तिगाथामावेदयति गुरुसार्वभौमस्तत्र तत्र तिष्ठन् विकसितनयनवदनः प्रसन्नमुखमुद्रया । प्रदक्षिणावर्तनेन गच्छन्नंतरांतरा रजतशकटः किंचित् स्थास्यति सरति गच्छति च महता संभ्रमेण । मध्ये दृष्टिदोषपरिहाराय घृताक्तकौशेयवासःप्लोपणम् विनतजनतादृष्टिमावर्जयति स्म वृजिनवर्जन सुमंगलसुकृतार्जन च पोपयति स्म। गीतैर्नृत्यैश्चविविधरसभावमेदुरैः सगीतनाट्यकलाविद. स्वस्वपरिणतिवैभवं प्रदर्शयंतः विस्मृतवहिरर्थभावाः गुरुसार्वभौमस्यामायां सेवामाचरंति स्म। जनाः भक्तिभरेण राजाधिराज, गुरुसार्वभौम, गोविंदेति उच्चैर्गर्जंति । हस्ताऽऽस्फालनेन सम्मदं प्रकाशयति । निमील्य नेत्रमंतर्हृदि हरिगुरुमनोज्ञमूर्ति ध्यायंतः आनंदस्य परं सीमानं आस्पृशंति । वैणिका. मार्दंगिकाः डमरुकाः वंशवादननिपुणाः तालनिस्सालकुट्टनकुशलाः पुर.पङ्क्तौ रथोत्सवे आत्मनः कलावैदग्धी प्रकटयंत. प्रचलंति स्म ।

प्रदक्षिणामेकां समाप्य महाद्वारदक्षिणपार्श्वेऽवस्थिताद्रथाद्गुरुसार्वभौमप्रतीक रजतशिविकायामवस्थाप्य मंदं मंदं अंतर्गृहमानीय महावृन्दावनाभ्यर्णमुपास्थापयन् शिविकावाहपुरुपाः । तत्रोच्चासने गुरुप्रतीक निधाय मगलार्तिक्यसेवां कृत्वा सद्य एव उत्सवमूर्तिमादाय गुरुराजवृन्दावने पुरत निदधुः अर्चकमहोदया. । ततः प्रज्वलता एकार्तिक्येन नीराज्य मत्रपुष्पोपचार प्रवर्तित. । चतुर्वेदसेवा सच्छास्त्रसेवा न्यायव्याकरणमीमांसादिसेवा पुराण-गद्य-संगीतज्योति.शास्त्रनिवेदनादिसेवाश्च तत्तद्विद्यापरिणतै. पण्डितै कृताः समर्प्य महानीराजनेन गुरुसार्वभौमवृन्दावनस्थगुरुभरुं संभावयामासुः । श्रीचरणास्तु सर्वत्राध्यक्षपदे सन्निहिता तत्तत्कर्म निरवर्तयन् यथाविधि । महानीराजनसमये प्रसन्नवदनं वृन्दावने विराजमानं श्रीगुरुसार्वभौममस्तौषीत् परितुष्टमनाः कविरेकः सरसहृद्यपद्यानि सद्यो निर्माय तत्प्रसादपरीप्सया ।

कलियुगवरकल्किरेष भूपः ।
पृथुरिव जनरक्षणैकदक्षः ॥
रिपुगणमवमृद्य जैत्रयात्रा- ।
मधिगत इह रुक्मचक्री यतिः ॥२५॥

विधुर्विवस्वान् मणिदीपजालं ।
ज्वलत्फणारत्नलसत्प्रभाश्च ॥
ब्रह्माण्डभारं वहतोहि मूर्ध्नः ।
निर्यत्स्फुरज्ज्योतिरहे रसायाम् ॥ २६ ॥

सुमेरुकांतिश्च समं मिलित्वा ।
न स्पर्धया जेतुमलं स्वभासा ॥
कर्मंदिधौरेयमनल्पकांति ।
श्रीराघवेंद्रं रथमध्यसंस्थम् ॥ २७ ॥

जैवातृको म्लानमुखः कलंकी ।
निर्दोषमालक्ष्य सदा प्रपूर्णं ॥
दिवा हतार्चिर्गुरुराजमारात् ।
प्रद्योतमानं सततं प्रफुल्लम् ॥ २८ ॥

सूर्यस्तमः संक्षिपति स्वगोभिः ।
दिवा पुनश्चंद्रिकया क्षपायाम् ॥
चंद्रस्तथाऽपि श्रुततत्वसारो ।
नक्तं दिवं चाऽऽन्तरमौढ्यमारात् ॥ २९ ॥

विद्रावयत्यद्भुतमेतदस्येत्युदारवाचं गुरुमस्तुवन् जनाः ।
व्यासप्रसादाद्गुरुमध्वसेवया सर्वत्र जेता खलु राघवेंद्रः ॥ ३० ॥

मितंपचं वाक्ययमर्थगर्भमुद्घाटयंतं कृतिभावमद्धा ।
विद्योतमानं वरटिप्पणीषु समभ्यनंदन्विबुधा नभस्तः ॥ ३१ ॥

दशप्रकरणोटीकाटिप्पण्यो यत्कृता बभुः ।
षट्शास्त्रसारसंवादैः मध्वसिद्धांतबोधकाः ॥ ३२ ॥

तत्वप्रकाशिकाकूतं चन्द्रिकातः प्रकाशितं ।
प्रत्यक्षरं प्रतिपदं प्रतिभाति सुधाऽयाऽपि ॥ ३३ ॥

भावपूर्णेत्यादिवाग्भिः गुरुभक्तिर्गुरोः स्फुटा ।
यथा भाति जायतीर्थो वाक्सुधाप्रक्रमेऽतुला ॥ ३४ ॥

वाय्वाविष्टो दैत्यसूनुः कयाधू पुत्रः सम्यक् सेवयाऽतर्पयच्छ्री- ।
कण्ठे सिंहं व्यासयोगी सिषेवे ग्रंथैष्टीकाभावदीपैस्त्रिरत्नैः ॥ ३५ ॥

तद्भावं यो राघवेंद्रस्तताान ।
स्वोपज्ञाभिष्टिप्पणीभिः स भाति ॥
रौक्मे याने भूसुरै पूज्यमानः ।
गीर्वाणाग्र्यै. पुष्पवर्षे सभार्यैः॥ ३६ ॥

तत सर्वे जना मुदितहृदयाः रजतरथारूढं गुरुसार्वभौमं संस्मरंतः गुरुवैभव सस्तुवत. स्वस्वावसथ प्रति जग्मुः रात्रौ श्रीव्यासविजय-नाटकं द्रष्टुकामा ॥

॥ श्रीः ॥

# ॥ श्री व्यासविजयनाटकम् ॥

## मंगलम्

सृजत्यवति संहरत्यहो लीलया जगदिदं स्वमायया ।
तं रमापतिमनंतचिद्घनं नौमि नित्यवचनैरनारतम् ॥ ३७ ॥

दृप्तो यः पृथुमस्तकेन तरसा वेदान् लुलुण्ठे पुरा ।
योऽहार्षीज्जगतोतलं पृथुबलो दैत्यो हिरण्याक्षकः ॥
तावेतावचिराद्धरिर्गुणनिधिः ब्रह्मादिभिः संस्तुतः ।
हत्वा दैत्यरिपुर्वराहवपुषाऽरीरक्षदस्मान्नुमः ॥ ३८ ॥

पूर्वस्मिन् जनुषि प्रचण्डतपसा शप्तो जयः सत्यवाक् ।
जातो दैत्यकुले हिरण्यकशिपुस्तत्पुत्रतां ब्रह्मणा ॥
शप्तः शंकुककर्ण आप भगवद्भक्तः कृती सन्मतः ।
प्रह्लादः सुरकार्यकृद्यतिरभूद्यो व्यासतीर्थाभिधः ॥ ३९ ॥

यो ब्रह्मण्ययतेर्वरान्मृतित उज्जीवन् धृतो बल्लणः ।
तस्माद्बल्लममातृतो जनिमगाद्भूसंगहीनः शिशुः ॥
सौवर्णे करके प्रसूत उत तैः संपोषितः प्रत्यहं ।
तं विज्ञाननिधिं यतिं गुरुभरुं व्यासाभिधं नौम्यहम् ॥ ४० ॥

यः पञ्चहायनो बालः सन्न्यासपदभूषितः ।
पृथुं संपुटगं कृष्णमनीनृतत गोपतिम् ॥ ४१ ॥

(ततः प्रविशति सूत्रधारः)

अहो धन्योऽस्मि यदहं प्रभुणा यतिसार्वभौमेण सुयमीद्रसंयमिमणिना समाहूयाज्ञप्तोऽस्मि यदागामिन्यां सप्तरात्रोत्सवविद्वद्गोष्ठ्यामभि-

रूपमणिभूयिष्ठायां सुजनहृन्मनोविनोदिनीं हरिगुरुभक्तिलताप्ररोहिणी कांचनाख्यायिका द्रुताभिनयैरभिनीय अस्मदनुग्रहभाग्भूया इति। का नाम कथा संपाद्या या नूनं विद्वत्परितोपायावकल्पेतेति चिंता मां भृशं वाधतेऽपरिज्ञातलोकचित्तगतिमविदितविनोदलहरिप्रकारम्। आ! स्मृतं!! अस्मदाचार्यैः पितृचरणैर्विद्यागुरुभिरूपदिष्टा प्रह्लादावतारिणां श्रीव्यासयोगिनां कथा विचित्रज्ञानभक्तिभरभासिता दैवैरपि सुरसभासु रसभावमेदुरासु सततं संगीयमाना दुरितौघविध्वंसिनी मंदैः पापयोनिभिरनादृताऽपि सतामनवरतकल्याणपरम्पराप्रदायिनी सुबहुमानिता जागर्ति जगतीतले प्रत्यग्रजातेव नवनवरसोन्मेषविशेषशालिनी। या खलु पठिता स्फुट स्मृतिपथमवतारयति देवदैत्ययोः संघर्पलीलामतर्कितविचित्रगति चराचरजगन्नियंतुर्विष्णरप्रोधृष्यप्रभावं च। विष्णूद्रेकाय वैष्णवं यश इति नून विदितचरमेव परतत्वविवित्सूनामनपहृतचित्तवृत्तीनाम्। तामेवास्मिन्महीसुरसदसि प्रयोगपाटवेनाभिनीय परिणच्चित्तवृत्तिमावर्जयामः। गुरूणां चित्तोपहारमुपकल्पयामश्च तदनुग्रहकाम्यया।

आः! कोऽत्र भो.। सर्वै शैलूषै यथाविभाग पात्रसाधनानि संपाद्य प्रयोगनैपुण्यमवहितचित्तैः सपोषणीयम्। (इत्यादिश्य निवर्तते)।

(ततः प्रविशति अखण्डभूमण्डलप्रभुः श्रीविजयनगरसाम्राज्याधिपतिः
श्रीकृष्णदेवरायमहाराय समंत्रिगण. दूतजनैः परिवृतः)

कृष्णदेवराय—

धन्योऽहं वरयोगिराजगुरुणा सच्छास्त्रसंवेदिना।
कर्णाटांध्र कलिंगवंगविदुषां मूर्धन्यरत्नेन स- ॥
द्विद्यां छात्रवरेषु मौनितिलकेष्वाधाय विद्यापुरी-।
षट्शास्त्राध्ययने नृपेड्यविभवे शीर्षायिता भूतले ॥ ४२ ॥

लक्ष्मीनारायणमुनिप्रेषितोऽयं यतिः प्रधीः।
भाति संप्राप्तराज्यश्रीः नीतिशास्त्रविशारदः ॥ ४३ ॥

त्वद्वच. सुधयाऽऽश्वस्तो ध्वस्तकण्टकसंहृतिः।
निरातंकं बिभर्म्यद्य राज्यभारधुरं भुवः ॥ ४४ ॥

इति प्रणतिततिमाचरन् मनसा, राजनीतिशास्त्रोपदेशाय सिधु-सौवीरसौराष्ट्रपतिः श्रीरहूगणमहाराज परतत्वविवित्सया देवहूतितनय साक्षान्नारायणावतारं कपिलाचार्यमिव, विद्यानगरे विद्याकर्णाटक-सिंहासनाधीश्वरं श्रीब्रह्मण्यतीर्थकरकमलसजातं श्रीलक्ष्मीनारायण-मुनिशिक्षितसच्छास्त्रपारावारमुपाजगाम श्रीव्यासयोगिनं पादचारं चरित्वा। मठीयप्रतीहारिभ्य दौवारिकेभ्यः गुर्वनुज्ञां परांगणे प्रतिपालयन् यथाऽवसरं संपाद्य कुतूहलोच्छ्रितकंधरः कटिनिबद्धधौतोत्तरीयः गृहिपरिवृढप्रौढवेषं जुषाणः सांजलिबंधं मंदं मंदं गुरुगुणाननुगृणन् अंतःप्रावरके चामीकररसनिचितफलकघट्टितचातुर्दिशस्तम्भनिचयैः मणिगणखचितैः सर्वतः प्रतिबिंबितव्यासतीर्थगुरुविग्रहप्रतीकैः बदरीक्षेत्रे बृहदश्वत्थद्रुमपादमूलेऽतेवासिभिर्मुनिजनैः परिषेव्यमाणं वासवीसूनुमिव परिशोभिसिंहविष्टरे हरिणीचर्म-व्याघ्राजिनप्रास्तरणव्यास्तीर्णे प्रवचनपीठे निषण्णं श्रीव्यासयोगिनं श्रीविजयींद्रवादिराजगोविंदवोडेयरप्रभृतिभि. शिष्यमतल्लजजनैः संसेव्यमानं पुरंदरदासादि हरिदासवरिष्ठैः जेगीयमानहरिमंदिरमहिमानं श्रीव्यासदेवहृदयातिवल्लभं यतिवरेण्यं दूरत एव अक्षिपूतं निषेव्य ‘उरसा शिरसा दृष्ट्या मनसा वचसा तथा। पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टांग ईरितः।’ इत्यादि स्मृतिवचस्सु प्रदर्शितरीत्या दण्डप्रणाममाचरन् गुर्वनुज्ञयोदतिष्ठत् प्रकामं पराक्शब्दमुच्चरन्। दरविकसितकमलनयनः हृद्युद्रिक्तप्रेमरसप्रवाह श्रीव्यासमुनिः भ्रूभंगसंज्ञयोपवेष्टुमन्वजानान्नरपतिं निकटविशंकटभूतले। विद्यार्थिभावेनागतो महाराजाधिराजः श्रीकृष्णरायभूपालः उपाविशदनावृतमहीतले साधारणशिष्यनिर्विशेषम्। तत समारभत नीतिशास्त्रप्रवचनं वैषयिकसुखप्रधानचार्वाकमतनिरासेन संपद्विपदोरादिकारणं नारायणमहिमानं व्यावर्णयन्नितिहासपुराणाख्यायिकाकथानुवादपुर.सरं दुष्टनिग्रहशिष्टप्रतिपालनरीतिमुद्बोधयन् श्रीव्यासयोगीश प्रह्लाद इव दैत्यकुमारेभ्य कर्णाटकसाम्राज्याधिपतये विनयावनतवैभवमूर्तये नीतिमूर्तये जगतीतलगीतकीर्तये।

**व्यासतीर्थः**—महाराज अवधारय। नीतिसारमस्माभिः प्रबोध्यमानम्। यदुकुलतिलकस्य ते कुलदेवता ननु भगवान् श्री कृष्ण. पाण्डवप्रियः यद्वचनमाकर्ण्य कुंतीपुत्रा साम्राज्य-

मापुः दुष्टदुर्योधनादीन्कुरुक्षेत्रे प्रध्वस्य लोकहितकाम्यया धर्मसंस्थापनाय। स च निजगाद संक्रंदननन्दनस्य युद्धान्निवृत्तप्रायस्य क्षात्रधर्ममनुस्मारयन् कर्मयोगं भगवतस्तोषपोषम् स्वविहितवृत्त्या भक्त्या नारायणद्विट्तदनुबंधिनिग्रह एव क्षत्रियाणां परमो धर्मस्तद्विरुद्धः सर्वोऽप्यधर्मस्तदधीनत्वात्सर्वस्येति। प्रजापालनाय कृतावतारस्य क्षत्रस्य शौर्य वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा। ब्रह्मण्यता प्रसादश्च रक्षा चेति लक्षणं नारदेन देवर्षिणाऽनुशासितं धर्मसूनवे युधिष्ठिराय। न सर्वथा राज्ञा कामचारेण भवितव्यम्। राज्यं श्रीहरिणा निक्षिप्तमव्ययं धनमिति भावयन् राजा प्रजाः परिपालयन्वर्णाश्रमधर्ममर्यादया निश्रेयसायावकल्पते। आधुनिकनीतिशास्त्रविशारदाः कामंदकबृहस्पत्यादयः लोकायतमतमवलंब्य स्वैरं स्वबाहुबलेन परचक्रनक्राण्याक्रम्याधर्मसंख्यैरसंख्यैर्निस्त्रिशं निस्त्रिशसहायै नृपैः कोश. संवर्धयितव्य। तेन प्रमदामोदविलासै कालो यापनीय. इति राजधर्म प्रक्रमते। पर तन्न साधु। उपरिनिर्दिष्टक्षत्रधर्ममनुस्मरन् राजाऽधर्मयुद्धं परपीडनं वृथा परचक्राक्रमणं परित्यजेत्।

**कः शत्रुः क उदासीनः किं मित्रं चेह आत्मनः।**
**भवत्स्वपि नयैः किं स्याद्दैवं संपद्विपत्पदम्॥**

भगवान् श्रीकृष्णोऽपि 'दैवं चैवात्र पंचमम्' इति कर्मणः फलनिष्पत्तौ देवतानुग्रह एव प्रधानं कारणमित्याह। शक्तित्रयसंपन्नो भवान् स्वविहितयुद्धकर्मणि संनद्धः दुष्टान् शत्रुराजान्निगृह्य प्रजाः परिपालय। वर्णाश्रमधर्मानुज्जीवय। [इति युक्तिभासुरैः वचनैर्नीतिमार्गमुपदिदिशुर्गुरुवरेण्याः व्यासयोगिनः श्रीकृष्णरायभूपालाय।]

**श्रीकृष्णराय**—(समाहितचेतसा भक्त्याऽगृह्लाद्गुरूक्तं सूनृतं पथ्यं वच।) भगवन्ननुगृहीतोऽस्मि मितपचेन वचसा राजनीतिसुधानिष्यंदिना यत्प्रभावादहं धर्मेण प्रजा पुत्रनिर्विशेषमनु-

रंजयन् दुष्टनिग्रहेण शिष्टानभिवर्धयन् श्रीहरिसमर्हणायां जीवितमर्पयितुमुत्सहे । एव एव सर्वैभव राजप्रासादे भक्तिवशंवदः श्रीचरणपूजां कर्तुमभिलषामि । तदनुजानंतु महांतः प्रसन्नहृदयाः ।

अयमहमद्य गुरवे समर्पितराज्यसर्वस्वः संक्रंदनः सुरेंद्रो धिषणाचार्यमिव सद्विद्यानिधानं श्रीव्यासतीर्थं गुरुपादपूजाव्याजेन मणिमाणिक्यरत्नवैडूर्यवज्रकणिकागणसौवर्णगुटिकापूगैः सौवर्णमंचासने समासीनं रत्नाभिषेक वैभवेन ससंभ्रममाराधयामि । कृतकृत्यतां च जीवितस्यात्मनः घोषयामि स्वयमेव भक्तिरसप्लावितपदस्फुरितबंधैर्गीतिपद्यैः ।

यद्विद्याविभवेन नष्टहृदयाः व्रीडावलीढाननाः ।
वादे त्यक्तशिखण्डखण्डनिचयाः व्यात्ततृणा जिह्वया ॥
विक्रुश्याऽध्वनि कांदिशीकरवमातिष्ठंत एवाधुना ।
सोऽयं व्यासमुनिर्ध्रुवं विजयते रत्नाभिषेकार्चितः ॥ ४५ ॥

धन्योऽहं यदनर्घ्यवाक्यनिचयैः हार्दैः प्रजापालने ।
शास्त्रे नीतिविदां विधौ परिणतिं संप्रापितः संमुदा ॥
येनाऽस्मद्भुवि संति नो रिपुजनाः चार्वाकनीतिं श्रिताः ।
सर्वे भागवताः स्वधर्मनिरताः अन्योन्यसंग्राहकाः ॥ ४६ ॥

नृत्यत्ववदसमागमे शिखिकुलं वर्षत्वखण्डं घनः ।
क्षेत्रं सस्यसमृद्धमस्तु विपिने सस्यानि जीवंत्वथ ॥
क्षीरिण्यस्तु गवां ततिः कुलजनाः स्फीताः स्वदाररताः ।
सर्वं सद्गुणजृंभितं विकसतात् व्यासे गुरौ शासति ॥ ४७ ॥

(निष्क्रांताः श्रीकृष्णदेवरायमहारायः श्रीव्यासमुनिश्च ।)

## (द्वितीयः प्रवेशः)

**(ततः प्रविशंति श्रीव्यासतीर्थगुरुमतल्लजाः शिष्यवृन्दोपसेविताः)**

**श्रीव्यासतीर्थाः**—अस्मत्प्रियशिष्य विजयींद्र, शृणोत्वस्मदनुशासनं समाहितमनसा। जगति कलिकालकालिमा साधुनजमनोनयनानि मलीमसयन्नभिवर्धमान आस्ते। अनियंत्रितश्चेत्स प्रसरति सर्वतो दिग्विवरेषु। साधुजनमनःशल्यविकर्तनोऽस्मद्गुरुवर्यपूर्णप्रज्ञप्रज्ञांकितोपदेशसार' निर्जने ज्योत्स्नेव महिषश्रोत्रपुटे किन्नरीगानमिव एडमूके वीणानाद इव स्त्रैणकामुके नैष्टिकब्रह्मचर्योपदेश इव निष्फलतां व्रजेत्। अतः दक्षिणदिग्विजयाय प्रस्थाय दुर्वादिनिग्रहेण तत्ववादवैखरी प्रस्फुट सतां चेतसि प्रभासयतु भवदीयप्रवचनपीयूष सेकेनाचिरात्। अस्मत्प्रियच्छात्र तौळववादिराज, भवानपि दक्षिणाकूपाररोधसि जैनशैवविप्लवप्लोषपरिप्लुष्टे कालवलेन लीनं दूषितधियामपथ्यवच पटलघनाघनेनांतरित अविद्ययाऽधायितं स्वप्रकाशं वैदिकवैष्णवसिद्धांतभास्वतं मध्वसिद्धातभास्करमस्मद्गुरुवरेण्यमरुदंशयुक्त्युत्तम्भितसूक्तिभंझावातेन प्रसृमरमावरणमपसारयन् अविद्याघनमण्डलमभिद्रावयन् अपावृणोतु।

ॐ तथेति मूर्ध्ना गृहीतशासनभराः संन्यासिशिष्या. अन्ये च गृहस्थाश्रमिण स्वं स्वं स्थानमुपाजग्मुः। वृहंतं कार्यभर' च व्यातेनिरे स्वगुरुपरितोषम्।

**(ततः प्रविशंति पुरंदरदासादिदासश्रेष्ठाः श्रीगुरुवदनारविंदगभस्तिमालिनः तन्मुखन्यस्तभयभक्तितरलितकनीनिकाकालिमगुटिकाः)**

**दासवर्याः**—पूज्यपादा। किमनुष्ठेयमादेष्टव्यमस्माकं। गुर्वाज्ञा प्रसादसुमुखा खलु स्वाभीष्टं घटयितुमभीष्टे। अर्चनीयचरणतरीसरणिमनुसरन्नविपन्नो जनः कामक्रोधादिकरालकल्लोल समाक्रांतं मिथ्यावादझंझावातविशकलितरूपमतिमात्रं प्रक्षुब्धतरंगमालापरीतं संसारसागरमनायासमतिवर्तितुं प्रभवति स्यातजलनिर्झरीमिव वटुवामनः। (इति वदंतः गुरुमुखमभिवीक्षमाणाः तूष्णी जोषामासन्)।

श्रीव्यासतीर्थाः—भो. दासकूटाधिष्ठातार· भक्तिपथप्रतिष्ठातार·, नूनमतीव प्रसीदत्यस्मच्चेतः यद्भवंतः भक्तिपरवशाः वेदैकवेद्य परमपुरुषार्थदातारं अचिंत्याद्भुतशक्तिमंतं श्रीनारायणमात्मसात्कृतवंतः निर्व्याजनिरंतरप्रेमप्रवाहोपायनेन। दूराद्दूरतरं यत्तु तदेवांतिकमंतिकात्', 'अणोरणीयान् महतो महीयान्' इत्यादि श्रुतिषु विरुद्धवत्प्रतीयमानाः धर्माः अचिंत्यशक्त्युपेते नारायणे विरोधमपहाय सहावस्थिताः विजृंभंते। भवंतः तमेनमद्भुतमहिमानं श्रीहरिं स्वरूपेंद्रियेण साक्षिणाऽवगाह्य तस्य निरवग्रहमनुग्रहं भेजिरे। सर्वे च भवंतः ग्रामैकरात्रं संचरतः दासदीक्षया श्रीहर्येकशरणा. परित्यक्तसर्वपरिग्रहाः तर्जितेषणात्रयाः भावाद्वैतद्रव्याद्वैतक्रियाद्वैतानुसंधानेन पूतांतरंगा· जनतायै भक्तिभरनतायै श्रीहरिकारुण्यं गुह्यप्रमेयं च ललितसंगीतकलपदमाधुरीनिष्यंदिभिः गद्यपद्यसुळादिश्लोकोगाभोगादिविविधवृत्तप्रबंधैः उपदिशंतः विष्णुवैष्णवभक्ति तत्र रूढमूलामुपकल्पयंतु लोकसंग्रहचिकीर्षया।

दासाग्रणीः श्रीपुरंदरदासः अमृतायमानमिमं वचःसारं हृदि निधाय गुर्वाज्ञां शिरसि आरोप्यानुपदमेव सपुत्रकलत्रः शिष्यपरिवारपरीत. तारापतिरिव गगनाभोगे तारागणसेवितः नितरां शुशुभे ग्रामाद्ग्रामांतरं संचरन् पीयूषसदृशमुपदेशरसायनं जनमनःश्रोत्रपुटेषु विकिरन्ननुदिनम्।

तामविकलशासनप्रसाररीतिं शास्त्रप्रवचनलाघवधाटी सर्वत्राग्रहारब्रह्मपुरीदेवमंदिरेषु नक्तंदिनं प्रचीयमानां शास्त्रचिंतां आचीर्यमाणां श्रुतिस्मृत्यविसंवादिभागवतधर्मपरंपरां च मनसि विमृशंतः श्रीव्यासतीर्थाः अमंदानंदतुंदिलाः वैकुण्ठमेव भूलोकमागतं मेनिरे। साधुजनसंतृप्तिरेव लोकोत्तरचेतसां जीवितधृतिमातनोतीति किं वक्तव्यम्।

एवं जनतापसंतारोपायमुपदेशं वितन्वंत. प्रमोमुदिरे व्यासतीर्थाः।

(निष्क्रांता व्यासतीर्थाः सशिष्या·)

## तृतीयः प्रवेशः

(ततः प्रविशति कृष्णदेवरायः मन्त्रिवर्गसनाथः
कतिपयैर्ज्योतिष्कैः परीतः)

श्रीकृष्णदेवरायः—(ज्योतिर्विदः उद्दिश्य) स्वस्ति भवद्भ्यः। नूनं कतिपयदिनेभ्यः मनसि काचन चिंता मां बाधते। न जाने तन्निदानं। अखण्डदोर्दण्डखण्डितरिपुमण्डलोऽहमसकृदुदधिवेलापिरिमिताभोगभूभागमंगवंगकालिंगकाम्भोजसौराष्ट्र द्राविडांध्रकर्णाटकानीकनिवहेनाक्रम्य परितः प्रसृमरम्लेच्छतुरुष्कहूणबलमुद्यम्य खण्डाखण्डि मुण्डामुण्डि रणभूमौ प्रतिवीरान्निपात्य परबलावलेपनिर्वापणेनासेतुविंध्याद्रिप्राज्यं राज्यमासादितवान् निष्कण्टकं भुजादण्डेन शक्तित्रय महिम्नोपायचतुष्टयप्रयोगेण श्रीव्यासराजगुरूपदिष्टमार्गेण। तत्प्रदर्शितराजनीत्या च प्रजाः परिपाल्यंते वर्णाश्रमधर्मव्यवस्था पर्यायेण स्वाध्यायनिरतशमदमाद्युपेतमौलवृद्धोपदेशेन श्रुतिस्मृत्युदितानुल्लंघ्याध्यात्ममार्गेण। दिष्टचा वर्धतेऽस्मत्कुलपरंपरा देवद्विजगुरूपसत्त्याऽऽसादितपुण्यनिचयेनापचयपरिचयविदूरेण। अतः ज्योतिर्गणगतिविज्ञानिनो भविष्यत्परिणामवेदिनो ग्रहगतिफलावेदननिष्णाताः मौहूर्तिकाः विमृश्य निभालयंतु मदीयं जन्मजातकं येन विपर्यस्तस्थानमहिम्ना नवग्रहैरपरितोषात् आधिव्याधिशूलान्याधीयंते। कृतस्य विकर्मणः अकृतप्रायश्चित्तस्य विपाकः अनुभोक्तव्य एव। नाऽभुक्तं क्षीयते कर्मेति स्मृतेः। निर्निमित्तमापातसुभगरमणीयं शरीरमंतरेव कृमिनिखातपूर्णकलशवद्विशीर्यंते। रुष्टाश्च नीचदेवताः प्रतीपकारिण्यः संपद्यंते। दैवज्ञा राजगुरवः अनुगृह्णंतु मामविलंबितं ग्रहगणनया जातकानुशीलनेन। निवेद्यतां च तदनिष्टप्रतीकारोपायः शांतिकर्मव्यतिकरोऽपि।

**पुरोहितः दैवज्ञाश्च**—(ससंभ्रमम् ।)

राजाधिराज, कर्णाटकसाम्राज्यसिंहासनाधीश्वर, बहु पराक् । भवदास्थानमलङ्कुर्वाणा. वयमचिरादेव ग्रहकुण्डली विमृश्य फलमाकलयामः । राजाज्ञापरिपालनपरायणा वयमनिर्वधमकैतवं वस्तु याथातथ्येन भाषमाणा अतर्कितं राजनिग्रहमपरितोषनिरोधं च शकामहे । तथ्यं ब्रूयात् सूनृतं ब्रूयात् इति हि लोकप्रतीता व्यवहारनीतिः । सूनृतं तथ्य पथ्यं चैकत्र समारोहेण सहसा नाऽवस्थातुमर्हति । अत इदमावेद्यते भयभक्तिविनम्रैरस्माभि. यद्ग्रहपरीक्षायां तत्फलविमर्शे विवरणे च अवग्रहवर्जं स्वातंत्र्यमनुज्ञेयं प्रभुभिः ।

**कृष्णदेवरायः**—[सहर्ष] अहो ग्रहगतिपरिशीलनपटवः, ज्योतिःशास्त्रनदीष्णा । ज्ञातमावेदित भवतां परहितरतानां । शङ्काकलंकितप्रज्ञया विचारे तथ्यं दूरतोऽपसरति । न काऽपि फलनिष्पत्तिः संजाघटीति सोपाधिकचिंतनयाऽनर्थजनन्या । विस्रब्धा भवंतु भवतः यदस्माभि कारणपौष्कल्येऽपि मनःप्रशमनाभावनिदानपरिज्ञाने कंटकपरिहारोपायावगतौ दत्तावधानैः श्रद्धया निमन्त्रितास्तत्रभवंतोऽस्मिन्निभृतसदसि निगूढरक्षारक्षितप्रावरके । शंकाशूकमपसार्य विमुक्तमनसा प्रवर्ततां भवंत प्रसन्नचित्ताः ।

**ज्योतिष्काः**—जयतु जयतु राजा महाप्रभु । अतीवपरितुष्टा वयं राजाज्ञां शिरसि निधाय गणयितुमारभामहे [इति सांजलिबधं निवेद्य, अपसार्य एकाते मिथः सम्मिलिताः सर्वे ज्योतिष्का ।]

सायननिरयनपद्धतिविभेदेन स्वीयगुरुशिक्षामहिम्ना कुलक्रमागतसंप्रदायेन च महाराजस्य जातककुण्डलं परस्पर चर्चयितुमारभंत । कतिपयाहोभिः अष्टग्रहसंयोगेन जगतः महती विनष्टिः समापतति । सार्वभौमपदवीमारूढानां ध्रुवमत्याहितमुत्पद्यते । तत्रापि राज्ञः जन्मकुण्डलीस्थग्रहस्थानविमर्शेनांशांशकुण्डलीगतग्रहपरीक्षया च कृष्ण-

रायमहीपतेः अकालमृत्युयोगः अनिवार्यप्रसरो जागर्ति कठोरगतिः सार्वभौमसिंहासनं नवरत्नखचितं मयूरध्वजविभूषितमनर्घ्यं समारोहतः नित्यविधिनाऽलंघ्यराजधर्मपरिपालनप्रसितस्य । कुहूयोगस्पर्शमात्रेण राजा प्रज्वलद्रोचिष्केशेन ज्वालावलीभिर्निगीर्णः सद्यः प्रदग्धगात्रः अंगारमात्रावशेषो भवतीति ग्रहपरीक्षा पर्यवसाययति । धिगिदं शास्त्रविज्ञानं यदस्मन्मनसि शल्यशूलमारोपयति ।

एवमाहृत्य सुदीर्घमालोच्यैकमत्येन निर्णयकोटिमाटीकमानाः नितरामुद्विज्यमानहृदयाः दरनिमीलितलोचनाः अक्षिपटलादश्रुधारामुपसर्पयंतः, हा ! कथं राजाधिराजायाऽखण्डदोर्दण्डसंसाधितभूमण्डलाय सत्वैकमूर्तये ब्रह्मण्याय लोककण्टकानपसार्य वर्णाश्रममर्यादां सार्वजनीनां सुभद्रं रक्षितवते श्रीकृष्णदेवरायभूपतये रदनच्छदमपावृत्य जिह्वानिर्भेदेन नितांतमनिष्टफलघटितं वाग्विसर्गं व्यापारयितुं प्रभवामः । हा धिक् ! कष्टं कष्टं !! प्रभुणा दत्तस्वैरगतयोऽपि जिह्रेति जिह्वा दुर्भगं पदकदंबकमुच्चारयितुं । संकुचति मनः आत्मानं शब्देन योजयितुं । नाऽस्माकं हस्तपादं प्रसरति प्रचलितुं । नयनेऽस्रपृषदुपरुद्धे अतर्कितांध्येन न वीक्षितुं प्रभवतः । मस्तिष्कं च संमोहजमांद्येन वीतबलं न पौर्वापर्यं विवेक्तुं पर्याप्तं । गात्राणि च कम्पंते । राजाज्ञा च निरपवादमनुष्ठेया तदनुवर्तिभिरस्माभिः । अहो वयस्याः । अस्यानर्थस्य प्रतीकारे उपायश्चिंत्यताम् । गर्गाचार्योक्तशांतिप्रकरणं सूक्ष्मेक्षिकया विमृशामः । मूर्च्छितेषु मृतप्रायेषु कपिवीरेषु मृतसंजीविनी विशल्यकरणीत्यादिऔषधचतुष्टयेन श्रीरामचन्द्रानुगृहीतेन प्रसन्नांजनेयेन गंधमादनपर्वतादानीतेन पुनरुज्जीवितानीकः पृथुबलः श्रीदाशरथिः प्रभूतं दशकंधराधिष्ठितं राक्षसबलं सपदि संहृत्य जानकीं लोकमातरं नित्यावियोगिनीमलभत किल लोकदृष्टिमनुसंदधानः । अत्र पुनर्महदनर्थपरिहाराय श्रीरामचंद्रपादपङ्कजभ्रमरायमाणाः आंजनेयांशवलोपोद्बलिता बाल्येऽप्यपरोक्षीकृतगोपीवल्लभा राजगुरुप्रधानाः श्रीव्यासतीर्था एव नः शरणं प्रमाणं च चिंताकांतारसंतारेऽनर्थपरंपरापरिहारे च । शांतिप्रकरणे च दैवबलं गुरुदृष्टिश्चानिष्टविषमूलजालमुपमर्दयितुं प्रभवतः इति सूचितम् । अतः अस्मद्गणितपरिणाममावेद्य राज्ञे तदनर्थप्रतीकारोपायमपि संसूचयामः । संप्रार्थयामश्च कुहूयोगात्याहितं निर्वा-

पयितु झटित्ययं योग. प्रकल्प्यतामिति ।

एवं सर्वे आमंत्रिता. राजस्थानज्योतिर्गणनाप्रवीणा. एकांतसभायाः निर्गत्य मंदं मंदं प्रभुनिकटमासाद्य यथावद्गणितफलितं न्यवदेयन् ।

**तत्र ज्येष्ठो वैज्ञानिक आहः—**

प्राणा न यांति मम दुर्घरवृत्तिचेष्टाः ।
जिह्वाग्रतः कथयत कुकथां ग्रहाणाम् ॥
हा ! दुर्विदग्धमतयो गणका विनष्टाः ।
देवं भविष्यमनुसूचयतां वरिष्ठाः ॥४८॥

राजन् अवेहि गणितैर्ग्रहयोजनायाः ।
यद्दुर्निमित्तफलितं तदलंघ्यवृत्ति ॥
सद्यः कुहूयुतिरधृष्यबला जगत्यां ।
राज्ञः कुलं दहति विश्रुतसत्वशालि ॥४९॥

देव, अनुशीलय मनाक् ममाभ्यर्थनाम् । अत्याहितप्रतीकारप्रकरणे शांतिप्रस्थाने एव संसूचितं । विशुद्धसत्वाः अनूचानवैदिकषोडश-संस्कारविशोधितबाह्यांतरंगाः यमनियमप्रत्याहारप्राणायामस्वा-ध्यायध्यानधारणमौनानुष्ठानजपसमाधिशीलगुणसंपन्नाः विरक्ताः शांताः विष्णुभक्ताः विप्रा. एवानिष्टनिवृत्तिनिष्णाताः अभीष्टातिसर्ग-धुरीणा. शापानुग्रहशक्तिसंपन्ना. वरीवर्तते भवतः साम्राज्ये कर्णाटक-जनपदे । विरलविरलेषु तेषु यद्ब्रह्मतेजोनिधानं लोकोत्तरप्रज्ञाखलीनं असंस्पृष्टकामक्रोधादिदोषलेशमदूनं मुनिकुलभूषणं जन्मनः प्रभृ-त्यसंगगुणप्रसाधनं स राजगुरुसार्वभौम. ज्ञानेऽधरीकृतसुरगुरुः विरक्तौ व्रीडितवैयासकि. हरिगुरुभक्तौ दाशरथिदूतायितः यतिकुलावतंसः श्री-व्यासतीर्थगुरुमतल्लजः जगति प्रतीतशेषावेश. वात्स्यवंशसभूतः जगज्जी-वनप्रद इति विख्यातमूर्तिः प्रभूणां सकलसंपन्निदानं विपन्निवृत्तौ सुतरां प्रभवति विदितवेद्य. प्रसभप्रतिक्षिप्तविपक्षकक्षः । तमेव शरणं व्रज महाप्रभो । (इति सगद्गदं नियंत्रितगलनालिकं मंदमुच्चार्य विरतः वैज्ञानिको नक्षत्रविदामग्रणीस्तपस्वी विप्रकुलललामः ।)

**श्रीकृष्णदेवरायः**—[सर्वमिदं ज्योतिर्वित्प्रोक्तं तूष्णी निशम्य निर्विकारः

दरहसितसितभाभासितकपोलफलकः निजगाद]—

भो, विप्राः। साधु निगदितं सम्यग्व्यवसितैस्तत्रभवद्भिः भवद्भिः। अनुगृहीतोऽस्मि भूयो ममैष्यनिधन वार्ता प्रबोधयद्भिः भविष्यवाण्या। आभिमन्यवः परीक्षिद्विष्णुरात इव अहमपि परित्यक्तममतः हरिगुरुसपर्यायां समर्पितसर्वस्वः भक्त्याऽऽराधितगोपालबालः चितासंतापक्लेशविनिर्मुक्त खगेद्रध्वजपादमूलं शरणं व्रजामि। अस्मिन्नवदातकर्मणि गुरुसार्वभौमा यतिवरेण्या. श्रीव्यासतीर्था एव प्रमाणम्। कुहूयुतिसमये तानेवावधूतशिखामणीन् निर्जितकामादिषड्रिपून् विजयनगरसाम्राज्यसिंहासने सुवर्णमणिगणरत्नगुटिकानिचितमेरुमन्दरायमाणे भद्रासने वाद्यवैभवविजृम्भित शुभावहमहे अहमहमिकया सकलराजपुरुषैः भटैश्चतुरगबलै सामंतमण्डलेश्वरैः करदीकृतमहासामतैश्च आत्मना सह ससेव्यमानान् राज्यवैभवेन स्थापयित्वा भक्त्या पूजयिष्यामि। साम्राज्येन सह सर्वस्वमर्पयामि महामुनिभ्य. मौनीद्रव्यासयोगिभ्य। एव देवद्विजगुरुब्राह्मणेभ्यः सर्वस्वमर्पयित्वा कुहूयुतिसमये शांतमनसा श्रीहरिपदनिखातदृष्टिः कलेवरमिदमुत्सृजामि जगतः कल्याणमभीप्सुः।

एवंविधा पुण्यनिचयसंदोहनचुंचुः दिव्यसमयसपत्तिः न सर्वमानवसुलभा। धन्योऽस्मि कृतकृत्योऽस्मि अद्य सर्वसाधुजनचरणकुमुदचकोरायमाणोऽहं सपदि संसारनिगडान्निर्मुक्तश्चराचरगुरोर्हरेः परमप्रसादमासादयेयम्।

क कोऽत्र भोः। यतिवरेण्याय श्रीव्यासराजाय श्वः सर्वस्वार्पणमहोत्सव. सिंहासनसमारोहेण संवलितः प्रवर्त्यमानः दुंदुभिघोषेण मितंपचवचोभि जोघुष्यताम्। राजकीयपुरुषाणा मण्डलेश्वराणां च अस्मै महोत्सवाय निमंत्रणपत्रिका यथाविधि राजकीयमुद्रया समलंकृता सत्वरं राजभटै. प्रेषणीयाऽश्वारूढैस्त्वरितगतिभिः। यावदह यतीश्वरमठमासाद्य श्रीव्यासयोगिनमनुनयामि साम्राज्यसिंहास-

नेन साकं सर्वस्वदानस्वीकाराय। कुहूयोगः राज्ञां साम्राज्य-सिंहासनारूढानां मृत्युकारकः। न पुनः योगीश्वराणां निर्जि-तकामानां यत्पुरतः स गतसत्वो विनश्यति।

(इति निवृत्तः मन्त्रिवर्गानुयातः प्रभुः श्रीकृष्णदेवरायः।)

## चतुर्थः प्रवेशः

### व्यासाश्रमः

(ततः प्रविशतः कृष्णदेवरायः आचार्यपुरुषश्च)

**कृष्णदेवरायः**—

स्फुरति मम दक्षिणाक्षि भव्यं।
प्रविशत एव दिव्यमाश्रमावसथम्॥
शुभशंसि भावि हरिणाः।
नृत्यंति पार्श्वतो विगतदराः॥५०॥

राजाऽहमासमिति यन्मम भव्यभर्म।
त्यक्तं तदद्य गुरुपादसरोजभाजा॥
विस्रब्धमत्र सकलं गतशत्रुभावं।
मैत्र्याहिमूषकमथो मृगसिंहसत्वम्॥५१॥

यावदहमाचार्यपादपरिसरमुपसर्पामि।

**आचार्यपुरुषः**—स्वागतं महाराजाय कृष्णरायमहीपतये। इदमासनम्। कतरत्कारणमानयदत्रभवंतं महाभागमत्र। राजकुलवृत्तांतः सर्वांगीणः ऋजुः सम्पद्यते किल।

**राजा**—स्वामिन् प्रणतोऽस्मि पादयोः। श्रीगुरुसार्वभौमचरण-वीक्षणमपेक्षे मंक्षु श्रेयःकामसमीक्षया। अनुगृह्णन्तु दर्शन-लाभायानुज्ञां।

**आचार्यः**—आस्ताम्। यावदहं गुर्वादेशं प्रतिपालयामि।

इति निगदन् गुरुनिकटमुपगतस्तदाज्ञामधिजिगमिषुः। गुर्वनुज्ञां संप्राप्य पुनरागतः आचार्यः राजानं गुरूणामंतःप्रावरके प्रवेशयामास।

**कृष्णदेवरायः** –

(श्रीगुरुनिकटे राजा दण्डवत्प्रणम्योपातिष्ठत । अवदच्च ।) स्वामिन् । गुरुदर्शनमाकाङ्क्षन् आगतोऽहं त्वरितगतिः संपिपादयिषया किंचित्प्रयोजनं । श्व एव कुहूयोगः लगति राजकुलविध्वंसायेति आस्थानज्योतिष्कपण्डिता. ग्रहगतिगणनानदीष्णा. निर्धार्य मह्यं समसूचयन् । यत्तस्मिन् कुसमये साम्राज्यसिंहासनमारुरुक्षुः पार्थिवः क्षत्रियः सद्य एव दवदाहप्लुष्टद्रुम इव निर्दग्धः भस्मावशेषो भवति । इति । नूनमीशातिसृष्टोऽय पुण्योदर्कः समयः इति बहुमन्यमानोऽहं कुहुयोगस्य विफलतां संपादयितुं विरक्तिगुरुभक्तिप्रचोदित. श्री गुरुचरणपादसन्निधौ सर्वस्वदानेन साकं साम्राज्यसिंहासनमप्यर्पयितुं संकल्पितवान् । करुणालवाला. पूज्यपादाः ममेमं व्यवसायमनुमोद्य कृतार्थं मां करिष्यतीति बलवता विश्वासेन सन्निधिमागतोऽहम् । पूज्यपादा एव प्रमाणम् । (इति व्याहरन् तूष्णीमवतस्थे) ।

**श्रीपादाः**—राजन् । विदितमस्माकं यत्सद्यः समुद्भवन् कुहूयोगः राजाधिराजविप्लवाय संपद्यते । सर्वथा तत्प्रतीकारः समनुष्ठेय इति । वयं तु संसारनिबंधनविषयरागपरिग्रहशून्या. राजकुलक्षेमाय बद्धादराः न क्षुद्रकाममपेक्षामहे । गणकगणना क्षत्रियभूपतौ किलार्थवत्तां धत्ते । वयं तु सन्यासिनो ब्राह्मणकुल संभवाः । न मूर्च्छति कुहूरस्मासु व्यधिकरणशुक्तिमती । सम्यक् चिंतितं भवता सर्वस्वदानेन कृतार्थीकर्तुमात्मनो जीवितं भक्तिभरक्रीतहृदयेन । मा कृथाश्चिंताम् । भवानपि वैराग्यभाग्यभूषितः विष्णुरात इवापवर्गाध्वरे दीक्षितः ।

**राजन् अपेहि भवनं निजधर्मनिष्ठः ।**
**श्रेयोऽभियास्यसि भृशं कुरु दानदीक्षाम् ॥**
**सिंहासनोपगमने मम दृष्टिपाते ।**
**दग्धा पतत्युरुबला कुहुराक्षसी सा ॥५२॥**

**दध्यङ्मुनिः सुरकृतेऽस्थिचयं स्वकीयं ।**
**दत्वाऽऽरुरोह किल स्वर्गपदं निराशीः ॥**
**क्षेमंकरा वयमथो जगतीकुटुंबाः ।**
**स्वात्मार्पणेन नृहरिं परितोषयामः ॥५३॥**

न दहत्यथ वह्निरुद्धवेगः ।
प्रतिरुद्धो मणि मन्त्रमूलजालैः ॥
मम सन्निधिमात्रतः कुहू सा ।
ज्वलनात्माऽप्यवसीदतीत्यवेहि ॥५४॥

(इति राजानं समाश्वास्य राजभवनमरं गंतुमादिदिशुः । राजा तु गुरून् संस्तुवन् राजभवनं प्रतस्थे ।)

## पंचमः प्रवेशः

### (राजभवने दुंदुभिनादकोलाहलः प्रवृत्तः)

अद्य शुभमुहूर्ते श्रीमत्परमहंसेत्यादिबिरुदावलीसमलंकृताः श्रीमद्ब्रह्मण्यतीर्थकरकमलसंजाताः श्रीमद्विद्याकर्णाटकसिंहासनाधीश्वराः श्रीमद्व्यासयोगिमुनिवराः श्रीमद्विजयनगरसाम्राज्यसिंहासनमधिरोहंति कुहूयोगसमये श्रीकृष्णदेवरायमहाराजस्य समापतितमहाविपद्विनिवृत्त्यै जनताहितसंप्राप्त्यै । श्रीगुरुमतल्लजाः अप्रधृष्यब्रह्मतेजस्वितयाऽऽखणाश्मसमवाप्त्याविष्टतया दहनपवनयोरनिमित्त मैत्रीवैचित्र्येण च सपदि कुहूराक्षसी भस्मावशेषां करिष्यंतीति देवतासंकल्प. सुतरां जागर्ति । अतः सर्वे जनाः स्वामिकार्यं कुर्वाणाः आविपालगोपालमाबालवृद्धं राजपुरुषाः शासनाधिकृताः मण्डलेश्वराः सामंताधिपतयः सेनान्यश्चः दण्डनायकाः स्वस्वकार्यनिर्वाहक्षमाः आत्मनः सन्निधिविशेषेण महांतं महममु संघशः भूषांकुर्वंतु । इति ।

यथाकालं श्रीस्वामिन श्रीमध्वसिद्धांतप्रवचनप्रवीणाः प्रासादगजपृष्ठारोपितसुवर्णरत्नखचितभव्यभद्रसिंहासने स्वोपास्यश्रीजगदंबारूढनितंबपट्टाभिरामं गोपालकृष्णं श्रीरामदूतमांजनेयं श्रीमन्मध्वाचार्यकृत मूलसप्तत्रिंशद्ग्रंथान् श्रीमन्न्यायसुधा-चंद्रिकादि सत्सिद्धांतप्रतिष्ठापककृतिरत्नानि समारोप्य स्वयं पादचारिणः एव चतुर्वेदमंत्रघोषिभिः विप्रश्रेष्ठैरनुगम्यमानाः राजभटैर्वंदिभिश्चाघोष्य माणसाम्राज्यसूचकबिरुदावलय. हस्तांदोलनेन पार्श्वयोः प्रतीक्षमाणान्

पुष्पवृष्टिभिः सजयघोषैरर्चनापिशुनैरालोकशब्दैरभिनंदतो जनान् संमानयंतः हसद्वदनाः हर्षोद्गारान् गिरतो भक्तान् प्रसन्नेक्षणकटाक्षप्रक्षेपेण अनुरञ्जयन्त. तप्तकांचनसंकाशांगनियंद्रश्मिप्रग्रहैरंतेवासिस्वांतमाकर्षयंतः श्रीविजयींद्रवादिराजाद्यनेकसंन्यासिशिष्यप्रवरैश्चांतरांतरा श्रीहरिसर्वोत्तमत्वसाधकश्रुतिस्मृतिपुराणेतिहासवचनैर्निरवकाशवृत्तिभिः ब्रह्मसूत्रार्थसर्वस्वं निर्णयद्भिर्युक्तिजातैश्च मध्वसिद्धांतसारं व्याकुर्वद्भिः संस्तूयमानप्रज्ञाविभवा पुरंदरदासैः सहानुगैः श्रीहरिकारुण्यश्चरणि नित्याभियुक्तभक्तरक्षणैकदीक्षां विविधालंकाररसप्रस्फुटितपदविन्यासै प्राकृत (कन्नड) पद्यैः संगीतशास्त्रलक्षणलक्ष्यै. गाननर्तनभङ्ग्या नाट्यशास्त्रप्रक्रियां भावगां भीर्याभिव्यंजकांगविक्षेपै प्रदर्शयद्भि गानापरोक्षीकृतनंदनंदनैः दासश्रेष्ठैः गीयमानोदारचरिताः सर्वत्र श्रीलक्ष्मीनारायणरूपाणि जगच्चेष्टाप्रवृत्तिकारणानि भारतीरमणमुख्यप्राणांतर्गतानि सततमनुसंदधाना व्याप्तोपासकाः श्रीव्यासतीर्थयतिप्रवेकाः नवरत्नखचितं मत्स्याद्यवतारलीलाविभवविग्रहगर्भं साम्राज्यसिंहासनमासादयामासुः अंचितपदैः पंचाननमंचंतः। आगच्छंत एवाघटितघटनापटोर्हरेरचित्यशक्ति निरंकुशप्रभुत्वं च मनसा स्मरंतः करगतपटखण्डं सिंहासनोपरि चिक्षिपुः। तदैव सपदि धगधगायमानप्रज्वलज्ज्वालामालासमूहजिह्वाहेतिभिः स चीवरच्छेदः प्रदग्धः। भस्मापि नाऽवशिष्टम्। अहो। अत्यद्भुतेयं श्रीहरेर्लीला यत्क्षणार्धे एव कुहूर्नामिशेषा बभूव। नृपतिरपि अकालमृत्युभयाद्विनिर्मुक्तः। मिलिताश्च संख्यातीताः जना ब्रह्माण्डकटाहनिर्भेदं शब्दायमानै करतलास्फालनैर्हर्षोद्गारिभिः स्तोत्रपदैश्च समभ्यनंदन् महायोगिवरं श्रीव्यासतीर्थम्। आशीर्भिश्च बहुलाभिः श्रीकृष्णदेवरायप्रभुं बहुमानयन् समादरस्नेहकटाक्षसनाथाभिः।

श्रीकृष्णराजोऽपि गुरुवरेण्यान् श्रीव्यासयोगीश्वरानुपसर्प्य बद्धांजलिर्भक्तिभराक्रांतहृदयः सन्नस्तौषीत्।

**यस्याऽभूद्गुरुरुद्धदीधितियशः स्फूर्त्या जगद्भासकः।**
**ब्रह्मण्यो मृतविप्रजीवनसुधासूतिः प्रजारक्षकः॥**
**सोऽयं व्यासमुनि र्मुमूर्षुनृपतेरायुर्बलं मे ददौ।**
**दग्ध्वा तां करवस्त्रखण्डपिहितां दुष्टां कुहूं राक्षसीम्॥५५॥**



यस्याऽऽभूद्गुरुरुद्घदीधितियश स्फूर्त्या जगद्भासक । ब्रह्मण्यो मृतविप्रजीवनसुधासूतिः पजारक्षकः ।
सोऽय व्यासमुनिर्मुमूर्षुनृपतेरायुर्बल मे ददौ। दग्ध्वा ता करवस्त्रखण्डपिहिता दुष्टा कुहू राक्षसी ॥
(प २०६, श्लोक ५५)

तदनु राजा श्रीकृष्णदेवरायः यतिवर्याय राज्यभाराधिकारं साम्राज्यसर्वस्वसनाथं त्रिपथगाजलधारापूर्वं यथासंकल्पं समर्पयांबभूव विधिविधानैः ।

प्रह्लादपौत्राद्बलिचक्रवर्तिनः हस्तात्काश्यपिर्वटुर्वामन इव तौळववंशाब्धिहिमकिरणात्कृष्णभूपतेः प्राज्यमखण्डसाम्राज्यैश्वर्यं प्राप्य मघोने इव वटुः श्रोत्रियेभ्यो ब्राह्मणेभ्यः नौकाग्रहारान् ब्रह्मपुरीदेवदायांश्च प्रददौ करुणालवालः धर्मज्ञाननरिरक्षया ।

(अद्यापि श्रीव्यासराजमठे तत्पीठाधिष्ठितयतयः सायं प्रत्यहं राज्यसिंहासनप्रतीकमुन्नतालंकृतपीठमारुह्य वंदिभिर्मागधैः विशिष्टाधिकारिपुरुषैराचार्यपुरुषैश्च जोघुष्यमाणां राजयोग्यां विरुदावलिं स्वीकुर्वंति श्रीव्यासतीर्थसाम्राज्यारोहणस्मरणेन ।)

## षष्ठः प्रवेशः

## तिरुपतितिरुमलै शेषाचलसंनिवेशः

## (विदूषकः राजभटश्च प्रविशतः)

**विदूषकः**—भोः भोः शृणुत शृणुत समादरेण विदूरितदुराग्रहाः श्रीविजयनगरसम्राट् श्रीकृष्णदेवरायः सर्वस्वदानेन मम साधर्म्यमागतो निःस्वः अन्नपानादिकर्मण्यपि परावृत्तः समभूदिति श्रूयते । अहो विचित्राऽघटितघटनापटोरीश्वरस्य लीला । कथमहं संपश्येयं तमसदृशविभवावतारमपर संक्रन्दनमैश्वर्ये भोगे च धनाधिगमे कुबेरमिदानीं सपदि कठोरदुर्गतपरीभावपदमनुभवंतम् ।

**राजभटः**—मूढ, किमेवं विकत्थसे क्षणमात्रावस्थायिनीयमवस्था सत्वशालिनां विक्रमैकधनानाम् । नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण । स एव महाप्रभुः शक्तित्रयसम्पन्नः न जातु स्थातुमुत्सहते दुर्गतिक. । अद्यैव श्रुतं यत्सः प्रचण्डदण्डनायक प्रकाण्डकाण्डमण्डितानीकखण्डः खड्गशक्तितोमरगदाहेति

भिरनुल्लंघ्यपराक्रमै अप्रधृष्यतेजःप्रसरैः चतुरंगबलनायकैः परीतं वेदण्डखण्डशिखण्डिखण्डभेरुण्डपुण्डरीकवन्यहिंस्रपशुभूयिष्ठे कलिंगराज्यभूपायिते पूर्वदिक्पर्वतशृंगायमाणे प्रथितमुदयगिरिदुर्गं रभसा श्येन इव कपोतसंहतिमाक्रम्य पृथुपराक्रमः जलदुर्ग-गिरिदुर्गस्थलदुर्गाणि स्वायत्तीकृत्य प्रचण्ड प्रतापेन राराज्यते भार्गव इव जामदग्न्यः । उदयगिरिदुर्गमवसाद्योष्ट्रै र्गजैस्तुरगैरसंख्यकोटिभारसुवर्णरत्ननिचयानानाय्यानपायिन्याः स्वरूपनित्यायाः नैजे उत्पत्तिस्थाने विजयनगरमहानगरप्रासादपटांगणे महामेरुहिमगिरिशिखरसमुच्चयोच्छ्रयसदृक्षे कूटे निक्षिप्य समताद्दात्मनोऽप्रतिहतप्रभावपथेषु पराक्रमकटाक्षविक्षेपान्विकीर्य निरीक्षमाणो राराजते ।

सम्राट् कृष्णदेवराय क्षेत्रसमुचितवेषेण विरलविरलसामंतचक्रानुक्रांतः गिरिकूटमधिरुह्य वेंकटपतिसन्निधिमुपागच्छति ।

## (प्रविशति राजप्रतिनिधिः कार्यकर्ता)

गंगा तुंगतरंग संगसुभगा पापौघविध्वंसिनी ।
याता भूधररूक्षदेशनिकटे पुण्यांबुवाहा स्वयम् ।।
लक्ष्मीजानिनिवासमद्भुतमहोलीढं महीमण्डनं ।
वैकुण्ठादुदधे रगादिव हरिर्यातोऽत्र भूत्यै प्रभुः ।।५६।।

तं दिदृक्षुरलमद्य भूविभुः कृष्णदेवनरपः समागतः ।
स्वागतं कुसुमगुच्छवर्षणराह्वयामि गिरिराजसन्निधौ ।।५७।।

स्वागतं महाराजाधिराजाय । यथाऽऽदेशमनुष्ठातु बद्धकक्षा वयम् । आज्ञापयतु महाराज ।

**कृष्णदेवः**—अहो सौभाग्यं गुरुचित्तवृत्तिमनुरुन्धानाना अस्मद्विधानां यत्संपत्तौ विपत्तौ च चित्तस्य निर्विकारता । गुरुवराणां व्यासयोगिनां घृणार्णवः क्षीरार्णवमतिशेते यदद्य मया असंख्यरत्नानि—न तु नवैव—असंख्यराज्यलक्ष्म्यः—न तु नारायणावियोगिनी एकालक्ष्मीः । असंख्यापेक्षितदातारो

दानशोण्डाः हस्तसात्कृताः नतु मंदारः पारिजातः कल्पवृक्षः कामधेनुश्चिंतामणिः पंचैव नियतसंख्याकाः । अहो आश्चर्यमनुपश्यत । अतीतदिने निःस्वोऽहमद्य सहस्रणीः संवृत्तः सुदामा कुचेलः श्रीकृष्णदर्शनप्रसादादिव । श्रीव्यासयोग्यपि कुहूयोगे प्राप्तव्यविपत्ततिमपहस्तीकृत्य निष्कंटकां महीमस्मत्कुले एव विसृष्टवान् ।

उदयगिरिविजयेन या प्रभुता जिता परचक्रचंक्रमणेन निमिषमिषेऽप्यनेहसि सा न मानवबलावलम्बा । दैवंचैवात्र पंचममिति भगवतः कृष्णस्य वचनमेव प्रमाणं यदस्मिन्नवमर्दे साक्षाच्छ्रीहरिः वेंकटेशवपुष्टा व्यासयोगिगुर्वतर्यामिणा आत्मानमविरतं सन्निधाप्य पुपोषोपजोषं निकषा निषीदन् कार्षापणकोशमुपवर्षयन्ननुपक्षयं । न देवतोषणं वृथा । अतः अस्मत्कुलदेवतां श्रीवेंकटेशस्वामिनं समुचितसेवयाऽनुव्रज्य परितोषये द्वित्रदिनानि ।

अहो अहमत्र संप्राप्तः सपर्यामाचरितुं जगदण्डमण्डलप्रभोः देवदेवोत्तमस्य लक्ष्मीपतेः वेंकटगिरिनिवासिनः श्रीहरे. प्रसादलेशकाम्यया । नाऽस्माकं सेवा काचन भृत्यवर्गादपेक्षिता । तथाऽपि श्रीवेंकटपतेर्दर्शनेन पावितांतरंगः निरस्तमनोमलीमसः उदयगिरिदुर्गनिर्गतमशेषसमरससंक्रांतवित्तसंचयं गजतुरगसेनासनाथंजगज्जन्मादिकर्त्रे वैकुण्ठपतये भक्त्या समर्प्य तदनुग्रहभाजनमात्मानं संपत्स्ये विगताहंममतः । तदुदर्कं कार्यभरमाकलयंतु यथाविधि भवंतस्तत्रभवंतो भृत्या ।

श्रीकृष्णदेवभूपाल. वेंकटेश्वरसंनिधौ नवनिधिसमुच्चयमेव समर्पयांबभूव नित्यापचितिव्ययाय ग्रामपंचकमभटप्रवेशं सर्वबाधापरिहारं प्रधानोत्सवनिर्वाहाय भक्त्युद्रिक्तहर्षाश्रुधारया संकल्पवारिधारया । अगायत च राजशिखामणिः हरिगुणगाथाम् ।

ततो निवृत्ताः सर्वे परिचारकाः विना राजप्रतिनिधिं विशिष्टाधिकारिजनपरीतम् ।

**राजप्रतिनिधिः**—स्वामिन् निभालयत चित्तेऽवधारयतास्माकमभ्यर्थनाम्। श्रीवेंकटपतेः महाप्रभोरर्चकसंततिः विनष्टप्राया। सद्य एवोद्वृत्तलुण्ठाककूटजनसंमर्दे अर्चकावसथावलिः आबालवृद्धस्त्रीपुरुषपरिवारगर्भा निर्दयमग्निसात्कृता। सर्वेऽपि निष्ठावंतो महात्मानः आचार्यपुरुषाः सम्प्रदायाचारसमर्थविदिनः निष्करुणमुत्सादिताः। पर्यायोपचाराय मन्त्रतन्त्रनिपुणः न कोऽप्यवशेषितः। अर्चककुले एकैव तपस्विनी दैवलीलया गर्भवती पुत्रसंतानमपेक्षमाणा ध्रियते भद्रकामा। श्रीवेंकटपतिरेव शरणं नः समर्थार्चकजनार्जनकर्मणि। किं कुर्मः। कथङ्कारमनादिकालतः निरपवादं विधिवत्प्राप्तार्चनसेवा जह्येत विना प्रत्यवायात् जगतः क्षेमंकरैः देवयुभिः। इयमेव चिंता नितांतं निकृंतति ममांतरंग। नतरां वयं स्वैरं प्रवर्तितुं प्रभवामः। महाराज एव समयप्राप्तं निर्धारयितुं समर्थः।

**महाराजः**—हा! कष्टमापतितं। किमत्रानुष्ठेयं। श्रीलक्ष्मीपतिरेव प्रेरयतु नः अघटितघटनाचतुरः येन तदभीष्टं साधितं भवेत्।

तत्रांतरे सद्य एव कंचिदनभ्यस्तलोकव्यवहारं अनधीतं प्राकृतं पुरुषं प्रविश्य श्रीहरिः एवमुदघोषयत्। भो भोः विदांकुर्वंतु अतीतानागतवर्तमानाः सर्वे साधुपुरुषाः। न ना स्पृष्टुं अर्चितुमाराधयितुं वा षोडशोपचारैः प्रभवति स्थूलधिषणः मानुषान्नभोक्तोपधाचतुष्टयशुद्धिशून्यः शुद्धित्रयविहीनः स्त्रीपुंसमलसंपर्कजन्मा मानवः। आश्चर्यवत्पतति दृष्टिपथमधुनातनयुगे तादृशः पुरुषः अन्विष्यमाणोऽपि जगतीतले। तथाऽपि मम नियोगादवनिमवतीर्णः विरिञ्चप्रणिधिः शंकुकर्णः वायुना समाविष्टः प्रह्लादः समभूत्कृतयुगे। स एव कलियुगे व्यासयतिरूपः परमहंसाश्रमे विराजमानः विद्योतते शुक इव वैयासकिः ध्रुव इवौत्तानपादिः साक्षाद्भरत इवार्षभः कृतमतिः ज्ञाननिधिः निरंगरागः तर्जितरिपुषड्वर्गः मूर्तिमतीव धर्मकला तपोभूमिरूर्ध्वरेतसां काष्ठा विरक्तिविभूषितचेतसां। यः आजन्मब्रह्मचर्यमासेवमानः पक्षीश इव विष्णुपदविहारी मरुदंशो मध्व इव सदध्वप्रवर्तकः विजयनगरराज-

वंशस्य राजगुरुः श्रीकृष्णदेवरायमहाराजस्य नीतिमार्गोपदेष्टा प्रकाशते जगति प्रसृमरयशोविसरः वैदिकवैष्णवसिद्धांतप्रचयनिचितमतिः। स एव नूनमचिरादेव श्रीवेंकटेशदेवपरिचर्यामनुष्ठातुमासादयति शैशवे एव साक्षात्कृत्य नर्तितवेणुगोपालबालः विष्णुभक्तितरंगिणीसुभगावगाहननदीष्ण। श्रीवेंकटेश एव तमानाय्यास्थानवेदण्डशुण्डादण्डावलम्बितम्लानमन्दारकुंदकुसुममालां यतीश्वरस्य गलफलके आसंजयति। तेन स एव देवदेवोत्तमस्य पूजां यथाकाममातनोतु।

अपि च, देवस्थानवरिष्ठाधिकृताः सभक्तिगौरवं विज्ञापयंतु महानुभावं तं देवतापुरुषं पंचोपचारसंभारैः। विदितवेद्यः स मुनिः समयसुबंधुरमातिष्ठमान अस्मत्सेवाफलमनुभुङ्क्ते इति।

अथ प्रभाते स जगद्गुरु. ब्रह्मण्ययतिशिष्यः व्यासतीर्थः राजपुरुषैः देवकिंकरैरभ्यर्थितः गिरिकूटमधितिष्ठन् पुष्करिणीं निकषा निषीदति यावत्तावदेव राजप्रतिनिधिना संपूजितो गजराजः शुण्डाग्रन्यस्तपरिमलद्रज पूरिताम्लानपुष्पहारः वेदघोषैः दिगंतसीमानमाचिन्वद्भिः द्विवेदि-त्रिवेदि-चतुर्वेदिवेदमन्त्रपाठकैरनुगम्यमानः सवाद्यवैभवं मंदं तालगतिक्रमेण समंचितकांताराध्वा यतिराजाभ्याशमागत्य तद्गले पुष्पहारमासंजयत्। संनिहितप्रभूतजनसंमर्दः करतलसंघट्टनेन गगनाभोगं प्रतिनिनदयता हर्षोद्रेकं सूचयन् सानंदाश्रुपृषंति निष्यंदयन् कंटकितगात्रयष्टिः महता आलोकशब्देन स्वागतं व्याजहार गुरुवरेण्याय श्रीव्यासयोगिने। राजाधिराजोऽपि श्रीकृष्णदेवरायः राजगुरवे प्रमोदनिर्भर. मुहुर्मुहुः प्रणिपातसहस्र समर्पयन् चराचरजगन्नियंतुर्विष्णोरगाधलीलावैभवं भक्तिभासुरपदविन्यासैः पद्यैरुपश्लोकयांबभूव।

कृष्णदेवरायः—

धन्योऽस्मि वैष्णवगुरुं मम राज्यसूर्ति।
त्र्य्यंतभास्करवचःप्रसरैर्गुणाढ्यैः।
संसाधयंतममलं श्रुतिसारतत्वं।
वव्रे हरिं करिवरो वरवेंकटस्य॥ ५८॥

श्लाघार्हमेव विबुधैर्यदमी महांतः ।
निर्दग्धषड्रिपुगणाः वरयोगिवर्याः ॥
श्रीशार्चने सुकृतिनः प्रथितप्रभावाः ।
कल्याणमाशु जगतः परिपोषयंति ॥ ५९ ॥

विद्या विरागसचिवा ननु शोभतेऽस्म-।
न्मौनींद्रराजगुरवो यतयो विरक्ताः ॥
भक्ता हरेरनुनयेन कृतापरोक्षाः ।
श्लक्ष्णो ध्रुव लसति पूजकपूज्यभावः ॥ ६० ॥

श्रीवेंकटेशमहामन्दिराभ्याशे महान् हर्षनिनाद जनताहृदयनिःसृत. आकाशावकाशमासाद्य भूरिरभसोर्व्वीवरकटाहं निर्भिद्य नाकिनिकायकर्णकुहरमाविशद्विशालम् । श्रीहरे. करुणानिधेरनूनं महिमानं मुहुर्मुहु. स्मारं स्मारममदानंदमन्वभूवन्व्यासमुनीद्रा. । तदहरेव देवमन्दिराधिकारिभि विज्ञप्ताः श्रीनिवासस्य स्वहस्तेन पूजा तंत्रसारोक्तविधिना कर्तुमारेभिरे । देवमन्दिरं प्रविश्य श्रीवेंकटेश्वरसन्निधौ भक्तिरसाप्लुतचेतसा स्वैरमलमवर्णयन् श्रीहरिमहिमानम् ॥

श्रीव्यासतीर्थाः अगायन्—

पापापनोदनपटुर्ननु वेंकटेश ।
कल्याणकृद्विहितकर्मकृत प्रपत्त्या ॥
चिंतामणिः कृतमतेर्वरमुक्तिदाता ।
व्यासार्यहृत्कमलकोरकतिग्मभानु. ॥ ६१ ॥

षट्कारकाणि प्रभवंति कर्तुम् ।
स्वीयां क्रियां यद्बलतो नियत्या ॥
नैमित्तमात्रं ननु कारकाणि ।
तस्मै नमोऽशेषनियामकाय ॥ ६२ ॥

यद्भ्रूविजृंभेण जगद्विचेष्टते ।
स्वपित्यथो नश्यति क्लृप्तगत्या ॥
तस्मै नमो वेंकटशैलधाम्ने ।
श्रीब्रह्मरुद्रादि निषेविताय ॥ ६३ ॥

लक्ष्मीपतिर्नेच्छति वित्तदानं ।
नार्घ्यादिकं वाञ्छति वार्धिशायी ॥
स्रष्टुर्हि सृष्टस्य नियंतृता स्यात् ।
को वा स्वतंत्रः परवित्तदाने ॥६४॥

### मत्स्यावतारः

सत्यव्रताय लयवारिविगोर्णधाम्ने ।
यो मत्स्यरूप्युपदिदेश परात्मतत्वम् ॥
नावा वहन् विविधजीवकुलं ररक्ष ।
तस्मै नमो भगवते झषरूपिणे ते ॥ ६५ ॥

### कूर्मावतारः

यः पृष्ठदेशफलके व्यवहद्गिरींद्रम् ।
मंदारमब्धिमथने सुरकार्यसिद्ध्यै ॥
तं कूर्मरूपमनिशं वरवेंकटेशम् ।
भक्त्या प्रणोमि भगवन् दिश मे सुतत्वम् ॥ ६६ ॥

### वराहावतारः

वाराहरूपमजितं वरकाश्यपीहृ- ।
द्दैत्यं निहत्य पृथुवेदततिं जुगोप ॥
यज्ञात्मने विबुधवंद्यमहामहिम्ने ।
स्वस्त्यस्तु तेऽखिल जगद्भवकारणाय ॥ ६७ ॥

### नरसिंहावतारः

यः शापतो भुवि बभूव जयो हिरण्य- ।
कश्यपात्मना जगदिदं भृशमातुतोद ॥
प्रह्लादमात्मतनयं च स विष्णुभक्तम् ।
व्यापादितो नृहरिणा तव भव्यमस्तु ॥ ६८ ॥

सत्यं विधाय विधिवाक्यमृषेः प्रतिज्ञां ।
प्रह्लादसूनृतवचो विबुधैः सुलाल्यम् ॥
देवो नृसिंहवपुराविरभूत् सभायां ।
दैत्यं हिरण्यकशिपुं न्यहनन्नखाग्रैः ॥ ६९ ॥

वामनावतारः

बल्यध्वरे बटुवपुर्हरिराविरासीत् ।
संक्रंदने दिवमभीप्सुरचिंत्यलीलः ॥
पादत्रयं भुवमयाचत वामनात्मा ।
त्रैविक्रमेण वपुषा जितवान् त्रिलोकीम् ॥ ७० ॥

स वामनो भामनश्च भूतभव्यस्य चेश्वरः ।
जेजीयात्स हरिर्भव्यं दद्यान्नो मंगलालयः ॥ ७१ ॥

परशुरामावतारः

यो दृप्तानवधीत्सुदुर्धरबलान् क्षत्रान् नृपान् भूतलम् ।
निःक्षत्रं व्यतनोद्भृशं स्वधितिना छित्वा शिरः कंदुकैः ॥
क्रीडन् रौद्रकृती रराज समरे श्रीभार्गवो मार्गणैः ।
शत्रूच्छित्तिकरो नृसिंह इव नश्छिन्द्यात्स पापावलीम् ॥७२॥

दाशरथिरामावतारः

यो बाल्ये मुनिवाक्यतः समहरद्दुर्दांतरक्षोगणान् ।
यज्ञान् दण्डककानने वरगुणः संरक्ष्य रेजेऽधिकम् ॥
वैदेहीं सहधर्मिणीं वरगुणां लंकां हृतां रक्षसा ।
प्रत्यानीय कपींद्रसेवितपदः रेजे स रामो हरिः ॥ ७३ ॥

पैत्रीं वाचमवेक्ष्य वल्कलधर. हित्वा सुराज्यं ययौ ।
कांतारं दयितानुजानुगत इत्येतं विचित्रं जनाः ॥
श्रुत्वोदंतमुरुव्यथाकुलहृदः नाऽशुक्नुवन् सत्पथा- ।
त्सद्यश्चालयितुं न जातु हृदयं दोलायते धीमताम् ॥ ७४ ॥

रक्षो निहत्य जनताहितविप्रतीपम् ।
संरक्ष्य साधुजनतामखिलार्तिहारी ॥
संस्थाप्य सुष्ठु भुवि कीर्तिलतां सुराज्यम् ।
लोकत्रये व्यधित सज्जनसंग्रहाय ॥ ७५ ॥

कृष्णावतारः

यशोदानंदनो बालः कृष्ण इत्यभिनंदितः ।
आश्चर्यरत्नं लोकानां हितकृद्दैत्यसूदन ॥ ७६ ॥

भूरीणि भूरिकर्माणि कृत्वा लोकोत्तराणि सः ।
यादवान् पाण्डवांश्चैव ररक्षोत्सादयन्नरीन् ॥ ७७ ॥

बुद्धावतारः—

रामकृष्णप्रतीपा ये भुवि जाताः कलौ युगे ।
तानुत्सादयितुं भक्तवल्लभो बुद्धरूप्यभूत् ॥
शून्यक्षणिकविज्ञानवादान् वंचयितुं जगौ ।
असुरान् लोकदस्यून् स दद्याच्छुद्धां धियं प्रभुः ॥ ७८ ॥

कल्क्यवतार.—

अंते युगांते विषमं दयालुः ।
कलिं निहत्याद्भुतवाहवाही ॥
शांतिं प्रतिष्ठापयति स्म कल्की ।
यथा स कृष्णो दिशतात्समृद्धिम् ॥७९॥

वेंकटेश्वरावतारः—

तारो यथा व्याहृतिसारभूतः पुंसूक्तवेदत्रयबोध्यबोधी ।
तथैव भो वेंकट सर्वरूपाण्यसंभिदा सन्निहितानि मन्ये ॥
उन्मील्याक्षि सहस्राक्ष पश्य मां कुक्षिसंस्थितम् ।
आनीय बहिरानंदभोग्यभाग्यं प्रदेहि मे ॥८०॥

(निष्कांता व्यासतीर्थाः सशिष्याः श्रीकृष्णदेवरायश्च सपरिवारः)

## सप्तमः प्रवेशः

### (श्रीव्यासतीर्थाः छात्रैः साकं प्रविशंति)

श्रीव्यासतीर्थाः—एता. समा. यथाविधि श्रीभूवैकुण्ठपतिं श्रीनिवासं पूजयित्वा, सत्सिद्धांतप्रवचनेन शिष्यवृन्दं परविद्याविचारेऽधिगतधीपरिणतिं कल्पयामासिम । तत्रोषःकालमारभ्य रात्रौ शयनदोलोत्सवपर्यंतं श्रीपतिसपर्यायां नूतनविधानान्याकलय्य अंगप्रत्यंगेषु सौष्ठवपाड्गुंण्यसिद्ध्यर्थं त्रिविधान्

क्रियाकलापान् निवेशयामासिम । अर्चकवंशीयकुमारमेकं प्राप्तवयस्कं ज्ञात्वा तमुपनीय वेदाविद्यामध्यापयितुमभिलषामः यथाऽयं क्रमागतपूजाधिकारं सम्पद्येत ।

(शिष्यमेकमाहूयाऽऽहुः)

अरे छात्र, अस्मद्वचनात् अर्चकवशीयः कुमारः आनीयतां त्वरितम्

छात्रः—यथाऽऽज्ञापयंति गुरवः। (इति निष्क्रातः कुमारमामन्त्रयितुम्) शिष्यो गत्वाऽर्चकपोतमाह श्रीपादानामाज्ञाविशेषम् ।

कुमारः—(भयभक्तिभराक्रांतः स दशवर्षदेशीयः पोतः त्वरितं गृहान्निर्गत्य श्रीव्यासयोगीश्वरमठमागत । साष्टांगं प्रणम्य व्यजिज्ञपत् ।)

स्वामिनः। वितरंतु अनुग्रहादेश मयाऽनुष्ठीयमाणम् ।

**स्वामिनः**—अयि वाल, तुष्टा वयं प्रफुल्लोपनयनवयसि वर्तमानं त्वां निरीक्ष्य । क्षिप्रं ते उपनयनसंस्कारः संपाद्यः इत्यस्मन्मनीषा वर्तते । तव मातर बधुजनांश्च विचार्याऽऽवेदयाविलंबं तेषां मनोगतम् । अस्मिन्नेव मासि शुभमुहूर्ते ते वेदविद्याऽधिकारसप्राप्तये ब्रह्मतेज.संग्रहनिदानं गुरूपसत्तिसंपादकं कर्म सर्वथाऽनुष्ठेयम् ।

(बालकः मातर बंधूंश्च विचार्याऽऽगच्छत्)

**बालक**—स्वामिनः। अवधारयंतु अस्मद्बंधूनां मनीषितम् । अस्मत्कुलरक्षकाः नूनं श्रीपादा एव । यथासंकल्पं पूज्यपादाः कुर्वंत्विति ते संप्रार्थयंते । श्रीपादा एवात्र प्रमाणम् ।

**श्रीपादाः**—आस्ताम् । वैशाखशुद्धपंचम्या शुभग्रहयोगे पवित्रं कर्मेदं संपाद्यते । तव मात्रा बांधवैश्च साकं अस्मदाश्रममायाहि ।

तथा क्लृप्तदिने श्रीपादाः अर्चकवंशीयकुमारकाय तत्कुलक्रमागतसप्रदायमनुरुद्धय उपनयनसस्कारं निर्वर्तयाकासुः पुरोहिमुखेन । श्रीपादाः गायत्रीमन्त्रमुपदिश्य वेदविद्यामध्यापयितु चतुर्वेदपण्डितमुपाध्यायं नियोजयामासुः ।

**अध्यापकाः**—बाल, सुष्ठु पठ यजुर्वेदं श्रीनिवासहृदयतर्पणम् । अन्येऽपि वेदाः ब्राह्मणारण्यकोपनिषद. धर्मशास्त्राणि पंचरात्र-वैखानसागमाश्च सविमर्शम् सार्थविवरणमध्येतव्याः ।

**बालकः**—यथाऽऽज्ञापयंति गुरवः ।

(श्रीव्यासतीर्थाः पाठशालामागच्छंति अध्ययनक्रमं बालकस्य परिणतिं च परीक्षितुम् ।)

**श्रीव्यासयोगिनः**—बालक पठ तैत्तिरीयोपनिषदि भृगुवल्लीमर्थविवरणेन साकम् ।

बालकः "भृगुर्वैवारुणिः" इत्याद्युपनिषन्मंत्रं अस्खलितोदात्तानुदात्तादिस्वरविवेकपूर्वमुच्चैर्गायति ।

**गुरुपादाः**—धर्मशास्त्रे वर्णाश्रमविभागेन विहितकर्माणि विशदं विवेचय यथाधीतम् ।

बालकः ब्राह्मणादिवर्णानां ब्रह्मचर्याद्याश्रमाणां च विहितान् कर्मविशेषान् धर्मशास्त्रवचनान्युदाहृत्य अप्रमत्तः अन्ववोचत् ।

तत्सर्वं दृष्टवा श्रीपादाः नितांतं परितुष्टाः 'समयः समागत. श्रीश्रीनिवासपूजां अर्चकवंशीयकुमारकाय वेदविद्यापारंगताय प्रतिपादयितुमिति मनसि विचार्य तदर्थं राजकीयप्रभुभ्यः तत्तद्देशीयधर्माधिकारिभ्यः मण्डलेश्वरेभ्यश्च पत्रिकाः प्रेषयामासुः ।

**श्रीपादाः**—

भो भो. धर्मदर्शिन. पीठाधिपतयः साम्राज्यपट्टाधिष्ठिताः श्रीकृष्णदेवराजाः अन्यमण्डलाधीश्वराः । निशामयंत्वस्मन्मनोरथम् । श्रीनिवासमंदिरस्य परंपरागतार्चकवंशीयः कुमारः प्राप्तवयस्कः अस्मदाध्यक्ष्येऽधीतवेदवेदांगः निपुणस्तेजस्वी सदाचारसंपन्न. पूजां निर्वोढुं समर्थः लक्ष्यते । वयमेतान् द्वादशसंवत्सरान् श्रीशप्रेरणया चक्रवर्तिराजविज्ञापनया च श्रीनिवासस्य वैकुण्ठाधिपतेः पूजां निरवर्तयाम । सांप्रतं अर्चककुलावतंसाय कुमाराय तां पूजां विवर्तयितुमुत्सहामहे । अस्मिन्नेवाऽऽगामिनि विजयदशम्यां शुभमुहूर्तेऽयं संसभ्रमो

मह' वर्तिष्यते । सर्वे भवंतः समागत्यास्मदनुग्रहं संपाद्य श्रीनिवास-प्रसादभाजो भवतु ।

एवं राज्ये सर्वत्र महान् घोषः आश्रावित. पट्टणेषु खेटखर्वटेषु दुंदुभिनादेन ।

## महान् पूजावितरणसंभ्रमः

श्रीपूज्यपादाः व्यासयोगिनः स्वहस्तेन अंतिमदिनपूजां सवैभवं संपाद्य अश्रुबिंदूनक्षपटलाद्विसृजंतः श्रीवेंकटेश चरणारविंदयोः मस्तकं न्यस्य जन्मजन्मनि विष्णुभक्तिं श्रीहरिपूजासंपत्तिं च संप्रार्थयामासुः । पादौ भक्त्योभाभ्या हस्ताभ्या निबिड संवाहयतः सगद्‌गदमाहु. । स्वामिन् वैकुण्ठपते भवदनुग्रहविशेषात् सर्वदा भवतः नामस्मरणं मम मनसि स्थिरं तिष्ठतु । तव पादे भक्तिरभिवर्धताम् । संसारकर्दमान्मामुद्धृत्य तव पादमूलमुपनय ।

प्रह्लादध्रुव नारदेंद्रजगजेंद्राद्यैः प्रभो त्वत्कृपा- ।
पात्रैः प्राप्तमनूनसौख्यपदमद्य ब्रूहि किंतैः कृतम् ।
चार्वाकार्हतबौद्धमायिविमतैः निःशेषिता त्वत्स्थिति. ।
दुर्भेद्याद्भुतश्रौतयुक्तिततिभिः प्रोज्जीविता रक्ष माम् ।। ८१ ।।

बाल्ये नर्तननीतिनिपुणः साक्षात्कृतस्त्वं मया ।
शास्त्राण्यग्रगुरुभ्य आप्य मनसाऽऽलोड्य प्रहृष्टो मुदा ।।
कीर्तिष्ये तव केलिलोललहरीं त्वत्पादरेणुप्लुत' ।
त्रायस्वार्तरवं निशम्य दयितं वत्सं कृपावारिधे ।। ८२ ।।

त्वन्नामस्मरणं भयार्तिहरणं सर्वस्वसौख्यप्रदं ।
त्वन्नामश्रवणं दुरंतदुरितध्वंसि प्रभो श्रीनिधे ।।
त्वत्पादश्रयणं सतां सुमनसां सन्मुक्तिसंपादनम् ।
देव त्वां शरणं व्रजामि सततं मां पाहि मुक्ताश्रय ।। ८३ ।।

श्रीव्यासयोगीशसपर्यया सर्वसमर्पणानुसंधानलसितया प्रसन्न इव श्रीवेंकटेशः स्वकण्ठान्मुक्तामाणिक्यमाला विस्रस्य श्रीव्यासतीर्थस्वामिनां गले प्राक्षिपत् ।

सर्वे मिलिता श्रीस्वामिनामनन्यसाध्यां हरिभक्ति श्रीनिवासस्यानितरसाधारणंप्रसादं चावलोक्य चकितचकिता अभवन् ।

पूजाधिकारवितरणमहोत्सवे श्रीकृष्णदेवरायः मण्डलेश्वराः धर्मपीठाधिपतयश्च तत्तद्देशीयाः श्रीपादानां चरणयोः महार्घ्याण्युपायनानि भक्त्या परमादरेण समर्पयामासुः ।

**श्रीकृष्णदेवरायः—**

स्वामिनः, श्रीहरिप्रेरणया श्रीनिवासपूजाभारः अतर्कितं विलोप्यमानः पूज्यपादैः शिरसि निर्व्यूढः । महाननर्थः अपोहितः । श्रीचरणैः निरौपधं जगत्कल्याणमनुष्ठितम् । महती विनष्टि. पूजास्थगनसंभाव्या निवारिता जगत्याः । श्रीगुरुभिः प्रदर्शितः प्रेमंकरक्रियाभरः कथं नाम प्रतिनिष्क्रियेताऽस्माभिरल्पविभवैः मानुषैः । सद्य एव श्रीनिवास श्रीपादानां मस्तके स्वकण्ठगतंमुक्तामाणिक्यमालां वितीर्य आत्मनः निरौपधं कारुण्यं सपर्यातृप्ति च प्रदर्शयामास । आचंद्रार्कतारं श्री पादानां सेवा सर्वथा सर्वैः स्मर्तव्या । न कदापि विस्मरणमर्हति । सर्वे वयं राजकीयाधिकारिणः धर्मपीठाधिपाः अर्चकवंशधुरीणाः मिलित्वा एकरवेण संप्रार्थयामः । यद्भवंतः यथेच्छममागत्य श्रीनिवासस्य सवैभवपूजां कर्तुं प्रभवंति । न कोऽपि कैश्चिदपि प्रतिरवः उदीरितव्यः। आक्षेपांगुलिः प्रदर्शिता चेत् कर्ताऽनुमंता च तीक्ष्णदण्डेन योजयितव्यः । प्रत्युत सकलदेवस्थानगौरवेण छत्रचामरादिमर्यादां गजारोहणाभ्यर्णनां च श्रीव्यासयोगीश्वराः तत्पीठाधिष्ठिततन्मठीयस्वामिनश्च शाश्वतमाचंद्रार्कतारं समनुभोक्तुमधिक्रियंते । इति राजशासनेनोद्घोष्यते । श्रीचरणाः अनुगृह्य स्वीकुर्वंत्विमामभ्यर्थनामस्याः परिषदः ।

**तद्देशीय राजानः मण्डलेश्वराश्च—**

स्वामिनः श्रीकृष्णदेवरायमहाराजस्यापतितं कुहूयोगमिव, श्रीनिवासपूजाविलोपप्रसंगं जगदनर्थनिदानं सज्जनसंभूतये परावर्त्यैमानि द्वादश वर्षाणि लोके क्षेमस्थैर्यशांतिमूलानि प्ररूढानि कृतानि । अतः सर्वे वयमविसंवादं निरपवादं श्रीकृष्णदेवराजवचनमनुमोदामहे । समर्थयामश्च । अतः शाश्वतशासनमिदं श्रीचरणेभ्यः तन्मठीय-

पीठाधिष्ठितसन्यासिगुरुभ्यश्चागगनतारमण्डला वस्याथि हर्षभरेणो-द्घोषयामः । श्रीपादाः अनुगृह्णन्त्विति ।

धर्मपीठाधिष्ठिताः सर्वे धर्माध्यक्षाः द्वैताद्वैतविशिष्टाद्वैतमतानुयायिनः शैवशाक्तसम्प्रदायमुनयश्च समुत्थायाहुरेककण्ठेन । महाज्ञानिनः अद्वितीयषट्शास्त्रवादमहामल्लाः श्रीव्यासयोगिनः अस्मदभ्यनुज्ञां राजकीयपुरुषैः सम्सूचिता स्वीकर्तुं सर्वथाऽर्हंति यतस्ते ज्ञानेन भक्त्या तपसा औदार्यधैर्यादिगुणैश्च जगति अनन्यसाधारणगौरवेण प्रतीताः ।

एवं सर्वे महाजना. संघश. मिलित्वा अर्चकवंशीयकुमारहस्तेन शाश्वतताम्रशासनं श्रीव्यासयोगिभ्यो दापयामासुः । विहायसि देवताः पुष्पवृष्टिं ववृपु. । गंधर्वकिन्नराप्सरोगणाः हर्षभरेण ननृतुः संगीतकातोद्यैः । दुंदुभिपटहवंशवाद्यैः समुत्सवोऽयं महता संभ्रमेण निर्वर्तितः शेषाचले श्रीवेंकटेश्वरसन्निधौ ।

ततः श्रीव्यासतीर्था. श्रीहर्याज्ञा सर्वथा शिरसि धार्या । श्रीवेंकटेशएव अस्माकं गजहस्तेन मालामस्मत्कण्ठे निक्षिप्य स्वपूजामस्माभिः कृतां स्वीचकार । तेनैवाऽयायं शाश्वतपूजाधिकारः अस्माकं अस्मत्पीठाधिष्ठितानां यतिवरेण्याना विश्राणितः । तथास्तु । श्रीहरिसंकल्पः प्रकामं वर्धता इति तत्ताम्रशासनं स्वीकृत्य सर्वानपि आशिषाऽनुजगृहुः। श्रीवेंकटेश्वरानुग्रहं स्मारं स्मारं परमा तृप्ति ययुः ।

अर्चककुमाराय स्वयं श्रीपादाः देवमन्दिरगर्भगृहमुत्कील्य पूजासंभारान् प्रददुः । आशीर्भिश्च तमभिननंदुः । सोऽपि कुमारः गुरुभ्यः प्रणम्य विनयावनतमूर्धा साजलिर्बंधोश्च भूरीणि भव्यानि प्रार्थयामास ।

सर्वे पार्षदाः राजादयश्च स्वस्वावसथं प्रजग्मुः । श्रीव्यासतीर्थाश्च पण्डितैः राजदूतैश्चानुगम्यमाना श्रीविजयनगरराजधानी प्रति प्रतस्थिरे ।

(सर्वे निष्क्रांताः)

॥श्रीगुरुसार्वभौमसप्तरात्रोत्सवे चतुर्थदिनोत्सव इति दशम उल्लासः ॥

॥ श्रीः ॥

अगम्यमहिम्ने नमः

# एकादश उल्लासः

## श्रीगुरुसार्वभौमसप्तरात्रोत्सवे पंचमदिनोत्सवः

## महारथोत्सवः

श्रीपादपुत्राः नवीनकविविरचितं सुप्रभातपद्यपंचकं सुश्लाघमगायन् सुस्वरं श्रीहरितुष्ट्यै सगीतविद्वत्सुपुष्ट्यै ।

– यो मथ्नन् श्रुतिलुण्ठकं करुणया प्रास्थापयद्वैदिकम् ।
सिद्धांतं जनताघवारणपटुं वाराहरूपी हरिः ॥
यन्नामग्रहणेन पापनिचयः दंदह्यते विश्वशः ।
तस्याप्तस्य पितुर्गुरोश्च नृहरेः स्यात्सुप्रभातं हरेः ॥ १ ॥

यस्याज्ञां शिरसा निधाय बलवान् वायुस्त्रिरूपी भुवो ।
भारं मारुतभीममध्ववपुषा निस्तार्य रक्षां न्यधात् ॥
तं वंदे रघुरामकृष्णमुनिपप्रख्यं सुरेड्यं मुदा ।
स्यात्कल्यं शुभदं सुरासुरजगद्धात्रेऽथ गोप्त्रे सताम् ॥ २ ॥

वायोर्वर्त्मनि यस्य भर्म तरसा संप्राप्य मेधाविनः ।
टीकाकृद्वरयोगिवर्यगुरुराण्मुख्या वितेनुर्भुवि ॥
ग्रंथान् मुक्तिपथाऽऽहृतान् सुविमलज्ञानोदयान् भूरिशः ।
तस्मै ज्ञानकलार्णवाय सततं स्यात्कल्यमानंददम् ॥ ३ ॥

बादरायणसुसूत्रभावदीप प्रकाशकृदवाप्तधीर्गुरुः ।
वेदभाष्यविवृतिं ततान यो दुर्मतानि वितथानि दर्शयन् ॥ ४ ॥

मन्त्रसिद्धिमधिगम्य सूरिधीस्तत्त्ववित्स हरिचित्तवर्त्यभूत् ।
राघवेंद्र इति नाम विश्रुतं यस्य तस्य भवतात्सुमंगलम् ॥ ५ ॥

नानाऽरण्यकुवृक्षकृंतनपटुः सच्चंदनक्ष्माधरं ।
लक्ष्मीशार्चनसंपदे नियमयन् ख्यातः सुतीक्ष्णः त्सरुः ।
श्लाघ्यः सर्वबुधैर्विवेकपटुभिः रक्षोघ्नसद्रक्षकः ।
श्रीशो यद्वदसौ गुरुर्महितधीः स्यात्तस्य कल्यं शुभम् ॥ ६ ॥

भो भो पण्डितप्रवरा विख्यातधीविलासा. । सममागच्छंतु श्रीपादनियोगेन प्रातराह्निककलापमुपकल्प्य विद्वत्संसदुपसंहारोपन्यासश्रवणेन कृतार्थीभूय गुरुशीर्षण्यसंप्रसादमासादयितुं । द्वादशघटिकासमये परिषदियं निष्पादितकार्या भविष्यति । तत ऊर्ध्वं श्रीगुरुसार्वभौमस्य महारथमहोत्सव सम्पद्यते । मा कुरुत विलंबं । सर्वै. शास्त्रसारनदीष्णै गुरुप्रसादजिघृक्षुभि. रथोत्सवयात्रायां श्रीमदानंदतीर्थभगवत्पादसेवा समनुष्ठेया सिद्धांतविवरणक्षमैरुपन्यासैरंतरातरा । हरिगुरुभक्ता अपि हरिदासा संगीतमेलापकेन पदपद्यानि गायंतः नृत्यंतः हरिभक्तिमहिमानमलघुमानै श्रीपुरंदरदास-विजयदास-गोपालदास-जगन्नाथदास प्राणेशदासप्रभृतिभिरुद्घोषितैः सुलभभाषितै. विवृण्वंतु । नाट्यकलाकोविदा गुरुराजं संतर्पयंतु विविधनर्तनघाटीविज्ञानप्रयोगैः श्रीहरेः क्रीडाविशेषानभिनयंत. । पौराणिकाः भागवतकथाविशेषान्मुखतः पठंतः वैष्णवगाथा कथयंतः विष्णूद्रेकाय वैष्णवं यशः प्रस्फोटयतु । अन्ये पुनः स्त्रीशूद्रब्रह्मबंधवः नामज्ञानाधिकारिणः हरिगुरुप्रावण्यप्रवीणाः एकतंत्रीं-त्रितन्त्रो वा वादयंतः करतलस्फालनेन कास्यतालताडनेन वोच्चैः स्वरेण प्रह्लादवरद श्रीनृसिंहं पाण्डववल्लभं श्रीकृष्णं गजेंद्रमोक्षदातारं श्री हरिं पंचहायनबालध्रुवौत्तानपादिप्रत्यक्षं नारायणं देवर्षिनारदप्रत्यक्षगोचरं गोविंदं आंजनेयसहभोगदातारं दाशरथिं श्रीरामचंद्रं श्रीमध्वांतर्गतमगुरुं गुरुं वेदव्यासं. नामग्राहं स्मारं स्मारं संतर्पयंतु जगच्चक्रवर्तिनं सृष्ट्याद्यष्टककर्तारं श्रीलक्ष्मीपतिम् । गुरुसार्वभौमं च रथारूढं विस्फारिनेत्रावलोकविस्तारैः अवलोकयंतः हस्ताभ्यां सांजलिबंध प्रणमंतः रसनेन तन्मंगलं नाम गृणंतः घ्राणेन तदर्पिततुलसीपुष्पपरिमलंधूपधूमं चाजिघ्रंतः त्वगिंद्रियेण तद्भक्तभक्तपादान् हरिदासोत्तमान् मृदु मंदं स्पृशंतः सम्मर्दकोलाहले विना संघट्टनपीडां,

श्रोत्रेण पण्डितोत्तमैः विव्रियमाणानि कथानकानि हरिदासैर्गीयमानानि गीतानि च श्रवणगोचराणि कुर्वंतः मनसा श्री हरिगुरुमहिमापिशुन-लीलाविलासान् स्मरंतः मननध्यानाभ्यां महत्समागमफलं तत्वनिश्चय-मनुसंदधाना आबालवृद्धं नमो महद्भ्यः नमो अर्भकेभ्य. नमो युवभ्यः नम आसनेभ्यः इति यथायोगं श्रीहरिविभूतीः संचितयंतः समाप्नुवंतु जीवितसाफल्यं। आयुर्हरति वित्त चित्तं च शुष्कं विना वित्तेशध्यानेन मोक्षनिदानेन। स्नुहिक्षीरमिवाक्षिविक्षोभि ज्ञानविधुरं जीवितम्। अस्थिमज्जावसांऽत्रयंत्रनियंत्रितमिदं गात्रं वंशशकलचर्मभर्मभस्त्रायित मनुपयुक्तमनुपादेयं विस्मृत्य महाप्रभुं जगद्गुरुं गुरुपरंपरां च।

अतः सर्वैराशुकृतपरिश्रमैः श्रमविदूरहरिदर्शनगतश्रमः नितांतं प्राप्तविश्रमैर्भाव्यमिति।

एवं दुंदुभिध्वानेन प्रात. उद्घोषितं श्रीगुर्वाज्ञया प्राज्ञंमन्यविज्ञान-दात्र्या।

घटिकाद्वयसमयावसरे सर्वे जनाः आपण्डितपामराः तुंगातरंगिण्या स्तरंगेष्वंगनिर्णेजनाय गाढमवगाह्य संध्यादेवपूजादिनित्यं कर्म निस्तार्य शुचयः श्रीगुरुराड्दर्शनप्रदक्षिणादिना विहितकर्मानुष्ठानेन पावितदशेंद्रिया. दिननाथमुद्यंतमवेक्षमाणाः विद्वत्सभामण्डपमागत्य निर्दिष्टप्रदर्शितप्रदेशांगणे स्वं स्वमासनमलंचक्रुर्मौनेन तूष्णीम्।

श्रीपादा अपि उषस्येव स्नानजपतप.पूजादिप्रातराह्निक विधाय-यथासंकल्पं श्रीगुरुराजं संदृश्य प्रणिपातेन नमस्कृत्य तदैव बृन्दावन-मुखतः दक्षिणपार्श्वे विस्रवती पुष्पमालां दृष्ट्वा शुभशंसिनीमनुज्ञामि मां स्वीकृत्य सभामण्डपमाजग्मु। मध्येमार्गं शिष्या. यात्रिकभक्ताश्च मस्तकन्यस्तशस्तहस्ताः दण्डवदात्मानं भुवि निपात्य प्रणेमुरालोक-शब्दैर्मुखरितदिगंतरालैः तान् संभावयंत·।

# मोक्षस्वरूपोपन्यासः

विद्वत्परिषदि श्रीपादाः समुन्नतप्रवचनासनमध्यासीनाः विद्वद्भिः सप्तरात्रोत्सवे दिनपंचकमुपन्यासधौर्यं धारयद्भिः चर्चाविषयतामानीतान् प्रमेयविशेषान् संग्रहेणानूद्य सुलभसुरसविशदवचनजातैः, अद्यत्वे संकल्पितं कार्यभरं विशिशिषुर्विशेषवचनैः ।

विद्यारत्न विद्वच्चक्रचूडामणि विद्याभूषणं विद्यावाचस्पतिः महामहिमोपाध्याय. पण्डितराजः सच्छास्त्ररत्नाकरः इत्यादिमहामहिमप्रशस्तिभाजः पण्डितवरेण्याः इमां सभामलकुर्वति । तेषामेकतमः इदानी "मोक्षस्वरूपं" इत्युपयुक्तप्रमेयमधिकृत्य संक्षेपेण रथोत्सवोपक्रमात्पूवमधिगतसमये घटिकाचतुष्टयावधौ भाषते पुंखानुपुंखं प्रमाणमुपन्यस्यन् इति सभाऽऽयुक्तकैः वाङ्मुखप्रस्तावः कृतः । तदनु उपन्यासकाः एवमाहुः ।

श्रीपादानामनुग्रहेणोपस्थितोऽहं किंचिद्ब्रवीमि अभिरूपमणिभूयिष्ठायामस्यां परिषदि । **मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं** इति मध्वसिद्धांतस्य नवप्रमेयरत्नमालां संजिघृक्षुभिः श्रीव्यासतीर्थैः मुक्तिस्वरूपं तत्साधनं च संक्षेपतः निरूपिते । अत्र वादिषु भूयान् मतभेद चकास्ति । तत्सर्वं संगृह्य युक्तायुक्तचिंतनेन परीक्ष्य दोषशूकसंकलनशून्यं यथावस्थितं सिद्धांतसारमुपस्थापयितुमत्र प्रयत्यते । यथामति पदमाधीयते साहसे कर्मणि गुरुकारुण्यबलात् विद्वदनुनयविशेषाच्च ।

श्रीमदाचार्यैरनुव्याख्याने उक्तम् यथा—

**कर्मक्षयस्तथोत्क्रांतिः मार्गो भोगश्चतुष्टयं ।**
**फलं मोक्ष इति प्रोक्तं क्रमात्पादेषु चोदितम् ॥**

इति प्रस्तावितं मोक्षस्वरूपं श्रीजयतीर्थमुनिभिः पादभेदेन चतुर्थाध्याये सुधायां संगृहीतं । यथाहि ।

'भगवज्ज्ञानभोगाभ्यां निवृत्तसमस्तानिष्टकर्माणः (**कर्मक्षयरूपप्रथमपादार्थः**) स्वोत्तमप्रवेशेन ब्रह्मनाड्योत्क्रमणेन वा परित्यक्तदेहाः (**उत्क्रांतिरूपद्वितीयपादार्थः**) स्वोचितेनार्चिरादिना वा पथा वैकुण्ठलोकवासिनं भगवंतं हिरण्यगर्भेण सह प्राप्ताः भिन्नलिंगशरीराः विध्वस्तप्रकृतयोऽत्यंतनिवृत्तानिष्टाः सम्यगाविर्भूतानंदादिगुणाः भगवत्समीप एव तमुपासीनाः (**मार्गगम्यरूपतृतीयपादार्थः**) स्वरूपेण वा लीलागृहीतविग्रहैर्वा संकल्पतः साध्यान् दिव्यभोगान् तारतम्येन भुञ्जानाः न कदाचित्पुनरावर्तंते । (**भोग इति चतुर्थपादार्थः**) अत्र विकल्पस्तु देवमनुष्यभेदेनेति विवेक्तव्यम् । कर्मक्षयः उभयोः समानः । उत्क्रांतिमार्गौ देवानां न प्रायेण भविष्यतः । विषयमिममुत्तरत्र प्रपंचयिष्यामः ।

परं तैस्तैर्वादिभिः स्वबुद्धिसमाश्रयेण मोक्षस्वरूपं अन्यथा वर्णितम् । तेषां केवलमुत्प्रेक्षामूलत्वात् तानि परिहृत्य प्रमाणमूलसिद्धांत एव बुभूक्षुभिः समाश्रयणीयः । भ्रांतास्तु वादिनः प्रमाणानां यथार्थस्वरूपं न जानंति ।

उक्तं हि अनुव्याख्याने—

**नाना वदंति पुंसां हि मतयो गुणभेदतः ।**
**पृथक् पृथक् प्रजायंते तमसैवाऽन्यथामतिः ।**
**रजसा मिश्रबुद्धित्वं सत्वेनैव यथामतिः ॥**

प्रमाणविकलत्वादन्यथावादाः न सर्वथोपादेयाः । तत्रैव मोक्षवादोपसंहारे भणितम्—

**इत्थं मतानि भ्रमजानि यस्मान्मोक्षं समुद्दिश्यमपि भ्रमेण ।**
**विदुर्न सम्यग्यदपीह लौकिकाः सुखं मम स्याद्धि सदेति जानते ॥**

आर्हत-चार्वाक-सौगत-सांख्य-वैशेषिक-नैयायिकाद्याश्च वेदमार्गपरिपंथिनः मोक्षस्वरूपमन्यथा व्यावर्णयंति । प्रत्यक्षैकप्रामाण्यवादी चार्वाकः अतींद्रियार्थचर्चायां नाऽवकाशं लभते इति स नतरां विमर्शविषयतामानीतः । तथाऽपि तन्मतं जनमनोरञ्जनतया सर्वत्र प्रसरत्यापाततया लोके इति तदपि निशितशास्त्रासिधारावलीयते यथाऽवसरम् ।

वेदप्रामाण्यानंगीकारादतितामसः आर्हतः सततोर्ध्वगतिः मोक्ष इत्याह । तन्मते प्रत्यक्षमनुमानमिति द्वयमेव प्रमाणं । मोक्षस्यातीद्रियत्वान्न प्रत्यक्षं तत्र प्रसरति । अनुमानं तु कामगामित्वात् सत्प्रतिपक्षं भवितुमर्हति । तथा हि, ज्ञानभोगाभ्यां कर्मक्षये देहबं धान्मुक्तो जीवः ऊर्ध्वगतिमान् भवति देहाख्यबंधमुक्तत्वात् पञ्जरान्मुक्तविहंगमवत् । यद्वा विमता गतिः सुखयुता दुःखहीना च ऊर्ध्वगतित्वात् पंजरोन्मुक्तविहगगतिवत् । इत्युक्ते ऊर्ध्वगतित्वे बधमुक्तत्वस्याप्रयोजकत्वात् अनूर्ध्वगतित्वमुपाधिर्भवितुमर्हति । साध्यव्यापकः साधनाव्यापकः खलु उपाधिः प्रतिपक्षोन्नायकत्वेन व्यभिचारोन्नायकत्वेन वा दूषणम् । एतेन विमता गतिः सुखयुता न भवति इत्येव साधयितुं शक्यते इति पूर्वानुमानं प्रतिपक्षानुमानदोषग्रस्तम् । प्रतिपक्षानुमानस्य पुनः उपाधिदूषणोद्भावन असगतमेव । यतः प्रतिसाधनरूपानुमानस्य चोपाधिर्न दूषणं । अन्यथाऽनवस्था सर्वानुमानोच्छेदप्रसंगश्च दोषौ प्रसज्येयाताम् । प्रतिपक्षस्य प्रतिपक्षोऽकिंचित्करत्वात् न दूषणम् । पक्षादिप्रविभागोत्तरकालमुपाधिः प्रतिपक्षस्योन्नायको भवति । प्राक्तु ततः अव्याप्ते (व्याप्यत्वासिद्धेः) रुन्नायकः । अपि च प्रत्यनुमानस्य प्रतिपक्षोक्तौ तु पूर्वानुमानस्य जिनोक्तस्य बाध एवोक्तो भवति । किंच मुक्तानां सततोर्ध्वगतिः सिद्धा चेत् बाधः अन्यथाऽऽश्रयासिद्धिरित्यपि परास्तम् । परसिद्धाश्रये प्रतिपक्षस्य प्रसंजनात् । लोकाकाशसंबंधित्वमुपाध्यंतरमाशंक्यते चेत्तदपि न घटते । साधनव्यापकत्वात् । एवं शरीरवृत्तित्व (सशरीरत्वं) मपि उपाधिः न वक्तुं शक्यते । अनूर्ध्वगतित्वं सशरीरत्वं लोकाकाशसबंधित्वं—इत्युपाधित्रयमपि प्रत्यनुमानस्य न संगच्छते । उपाध्युपपादनप्रकारस्तु सुधापरिमलाभ्यामवगंतव्यः । अतः जिनोक्तमोक्षसाधकानुमानं उपाधिग्रस्तमिति दुष्टं । एवं प्रत्यक्षानुमानयोरयोगात् जिनोक्तमोक्षस्वरूपमप्रामाणिकमिति भावः । तदीयागमस्यास्माभिरनंगीकारात् वेदादेश्च परेणानंगीकृतत्वात् आगमोऽपि न प्रमाणम् ।

अप्रामाणिकत्वादेव बौद्धोक्त मोक्षस्वरूपमपि न स्वरसम् । सुगतस्य विष्ण्ववतारत्वेऽपि श्रोत्रानुकूल्याभावात् आप्तोक्तत्वरूपगुणाभावात् आप्तिमूलप्रामाण्यं तस्मिन्नोपपद्यते । असुरमोहनार्थं विपरीतज्ञान-

जननमीश्वरेण स्वेच्छयैव संभवति। शून्यं विज्ञानं-सौत्रांतिकं वैभाषिकमिति चतुर्विधं बौद्धमतं। तत्र शून्यवादिनः अत्यंततामसाः प्रमितसकलवस्त्वपलापात्। ततः विज्ञानवादिनः ज्यायांसः रूपाद्यपलापेऽपि विज्ञानमात्रांगीकारात्। ततः सौत्रांतिकाः ज्यायांसः बाह्यार्थाभ्युपगमात्। तस्य चानुमेयत्वाभ्युपगमात् वैभाषिकेभ्योऽपि कष्टा.। वैभाषिकास्तु बाह्यार्थमभ्युपगम्य तस्य यथायथं प्रत्यक्षादिगम्यतामभ्युपगच्छंति। तेषु शून्यवादिनो द्विविधाः। एकात्मवादिनः। अनेकात्मवादिनश्चेति। (मायावादिष्वपि एकजीव-बहुजीववादिनः संति।) आद्ये मते शून्यं तत्वं स्वतो निर्विशेषं। नानासंवृतिभिर्दूषितं च संसारावस्था भवति। तद्विपरीतं शून्यमेव मोक्षः। परमसूक्ष्मस्य वाङ्मनसातीतस्य स्वप्रकाशस्य आवरणविक्षेपाद्यनेकशक्तिमत्या मूलसंवृत्या कर्तृत्वभोक्तृत्वशक्तिमदहंकारोपाधिवशात् किंचित् स्थूलता जायते। आवरकशक्ति. स्वस्वरूपाच्छादनशक्तिः। विक्षेपशक्ति व्यामोहनशक्तिः आदिपदेन नानाविधतया भावकत्वशक्तिः। ततः सद्वितीयत्वेन सविशेषतायां स्थूलता संपद्यते। ततो मनोवचनगोचरत्वे जाते विधिनिषेधगोचरत्वेन सलेपत्वं। रागादिदोषसंसर्गश्च। ततः क्रमेण संवृतिसंज्ञकैरहंकारादिभिश्च संवलितं शून्यमेव संसारः। शून्यमहमिति उपासनोत्कर्षेण तप आदिना च मूलसंवृत्तौ ध्वस्तायां तत्कार्यप्रवाहे च विलीने तदुपलक्षितं शून्यमेव मोक्ष इति शून्यवादिनां प्रक्रिया। तन्न। शून्यमेव मोक्षः संसारश्चेत् उभयोः पर्यायत्वमापतति। एवमनेकात्मवादिनां प्रक्रियाऽनुसंधेया। शून्यवाद-मायावादयोरर्थतः एकरूपत्वात् तन्निरासेनाऽपरोऽपि निरस्तो वेदितव्यः। शब्दभेदस्तु अकिंचित्करः। तयोरविशेषः स्पष्टमुपपादितोऽनुव्याख्याने विष्णुतत्वनिर्णये तत्वोद्योते च श्रीमदानंदतीर्थभगवत्पादाचार्यैः। वादावल्यामपि उभयोरेकरूपत्वं स्पष्टमुपपादितम्। श्री सुमध्वविजये नारायणपण्डिताचार्यैरप्युक्तं यथा—

> असत्पदे सन् सदसद्विविक्तं मायाख्यया संवृतिमभ्यधत्त।
> ब्रह्माऽप्यखण्डं बत शून्यसिद्धयै प्रच्छन्नबौद्धोऽयमतः प्रसिद्धः॥

अर्थस्तु स्पष्ट एव।

मायावादिनाऽभ्युपगतं वेदप्रामाण्यं नामाप्रामाण्यमेव। प्रामाण्या-

भावे च तत्स्वतस्त्वव्युत्पादनं गंधर्वनगरायितं व्यर्थमेव। नित्यत्वमपि कथमंगीकारार्हं भवति। शास्त्रयोनित्वसूत्रभाष्ये श्रीशंकराचार्यैः शास्त्रस्य योनिः (उत्पत्तिकारणं) शास्त्रयोनिरिति षष्ठीतत्पुरुषेण शास्त्रस्य ब्रह्मणः सकाशात् उत्पत्तिरंगीकृता। ब्रह्मातिरिक्तत्वेन मिथ्यात्वात् अतत्वावेदकस्यापि (वेदस्य) प्रामाण्यांगीकारे महान् उपप्लवः व्याहतिश्च समापततः।

नाऽप्यद्वैतं सूत्रकारस्य सिद्धांतः। पृथुगुपदेशादित्यादिसूत्रेषु तद्विरुद्धस्य द्वैतस्यैव प्रतिपादितत्वात्। नाऽभाव उपलब्धेरित्यादिसूत्रेषु असद्वाद (शून्यवादं) निरस्यति सूत्रकारः मुक्तिवादेन। यदि शून्यमेव मोक्ष' तर्हि नाश मोक्ष' इत्युक्तं स्यात्। आत्मनाशार्थं न कोऽपि प्रयतेत धिषणावान् पुरुष। आत्मार्थं हि सर्वमिष्टं। स चेन्न स्यात् (शून्यं स्यात्) कस्याऽयं पुरुषार्थः स्यात्। आत्मैवेष्टतमः। तद्विघातेन अनिष्टवृत्ति न कोऽपि प्रेक्षावानपेक्षते। शून्यवादिनां संसारप्रक्रिया तु न क्षोदक्षमा। अज्ञानापरनाम्न्याः संवृते रेवासंभवात् तन्मतमपि अखिलमपाकृतं वेदितव्यम्। किं च उभयाभिमतमोक्षे न किमपि प्रमाणं जागर्ति। न तावत् प्रत्यक्षं। तदविषयत्वात्। नाऽप्यागमः। उभयो. परस्परमनंगीकारात्। अनुमानमेवोदाहर्तव्यम्। तच्च प्रतिपक्षकक्षाकवलितमित्युक्तमेव।

आत्मशून्यता पुरुषार्थः (मोक्ष.) दु खनिवृत्त्युपयोगित्वात्। शरीरादिशून्यतावत्। इत्यनुमानमपि सत्प्रतिपक्षम्। यथा

विमतः शून्यभाव ब्रह्मभावो वा न मोक्ष' अदेहत्वात्, घटशून्यता यथेति। विदेहावस्थैव मोक्ष' इति श्रुतिसद्भावनात्प्रत्यनुमानं बाधितविषयमिति चोदिते वक्तव्यं—श्रुत्यवलंबेन प्रत्यनुमानस्य दोषो न वक्तव्य.। यत. तेन प्रत्यक्षानुमानमात्रमानकेन श्रुतिप्रामाण्यं नांगीक्रियते इत्युक्तमेव। मायावादिना वेदप्रामाण्यांगीकारेऽपि ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वमिति वेदस्य ब्रह्मातिरिक्तत्वात् मिथ्यात्वं-अतत्वावदेकत्वं-अप्रामाण्यमेव इति तत्सिद्धांतः। अशरीरं वाव संतं न प्रियाप्रिये स्पृशत. इत्याद्यदेहत्वश्रुतिस्तु प्राकृतदेहं वारयति। न पुनश्चिदानंदाद्यात्मकशरीरम्। प्रतिपक्षांतराण्यपि एवं निरस्यानि।

मायावादिनोऽपि मते श्रुतेरमानत्वात् तेनाऽपि श्रुतिमालव्य प्रत्यनुमानस्य दोषो वक्तुं न शक्यते इति ज्ञेयम्।

मोक्ष दु:खात्मा स्यात् दुःखादभिन्नत्वात् दु खप्रतियोगिकभेदशून्यत्वात् प्रसिद्धदु खवत्। शून्यब्रह्मणोर्दुखत्वे तदभावापत्ति न पुरुषार्थः इति सिद्धचति। तथाचार्यसिद्धांत.। अन्यथासिद्धं चानुमानं परस्याऽऽत्मशून्यतासाधकं। आत्मनाशं विनाऽपि देहनाशेनैव दुःखनाशस्य संभवात्। एवं चाऽऽत्मनाशतायाः दु.खनिवृत्त्युपयोगित्वस्यासिद्धि। भोगश्रुतिः सगुणमुक्तिविषयेति कुचोद्यं तु असारम्। सगुणनिर्गुणब्रह्मभेदस्यैवालीकत्वादप्रामाणिकत्वात् श्रुते. निर्गुणं प्राकृतगुणशून्यं सगुणं ज्ञानानंदादिगुणवत्यर्थंकरणोपपत्तेः एकस्मिन्नेवेशे सगुण-निर्गुणव्यपदेशस्योपपादयितुं शक्यत्वात् प्रामाणिकत्वाच्च। भोगश्रुतेश्च जक्षन् क्रीडन् रममाण इत्यादेः परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते इति प्रकृतस्य निर्गुणस्यैव संभवाच्च।

एवमेव विज्ञानवाद्यभिमतं मोक्षस्वरूपं सर्वथाऽनुपादेयं त्याज्यमेव। यतो विज्ञानवादस्य पूर्वस्मान्न कश्चिद्विशेषः वरीवर्ति। ज्ञानमिति विशेषस्य शब्दमात्रत्वेनाकिंचित्करत्वात् प्रकृतानुपयोगित्वाच्च स नादरणीयः। प्रतिपन्नं जीवभावं विहाय अद्वितीयविज्ञानत्वापत्तिर्मुक्तिरिति हि तेषा विज्ञानवादिना मतं। मायावादिनोऽपि ब्रह्म मायावच्छिन्नं जीवभाव विहाय निरवच्छिन्न ब्रह्मस्वरूपमापद्यते सैव मुक्तिरित्याचक्षते। अत को विशेषोऽद्वैतविज्ञानवादयोः।

**एवं विज्ञानवादोऽपि ज्ञानमात्रविशेषतः।**
**तस्यापि भंगुरत्वादि विशेषमपहाय हि ॥**
**अद्वैततामतं साक्षादुक्तदोषस्ततो भवेत् ॥**

अनुव्याख्यानम्।

इत्यनुव्याख्याने विज्ञानवाद-मायावादयोः मोक्षस्वरूपमेकरूपमेवेत्यभाणि। एकनिरासेनान्योऽपि प्रतिहस्तितो भवतीति वेदितव्यमविशेषात्। अद्वितीयविज्ञानत्वापत्तिर्मोक्ष इत्युक्ते मोक्षावस्थायां कालोऽस्ति न वेति वक्तव्यम्। नास्ति इत्युक्ते अधिकरणप्रतियोगिभ्यामभावो निरूप्यते इति नियमात् अधिकरणमभावस्य वक्तव्यं।

तेनैव सद्वितीयत्वसिद्धिः। कालोऽस्ति इत्युक्ते सद्वितीयत्वं स्फुटमेव। एकजीववाद-वहुजीववादपक्षांगीकारोऽपि मायावादिनं विज्ञानवादितः न व्यावर्तयति। शून्य-विज्ञान-मायावादिना त्रयाणामपि कालानंगीकारे साक्षिविरोध. स्यात्। कालं गच्छति विपयीकरोति इति या प्रमा साक्षिरूपा सर्वानुभवरूपा जागर्ति तद्विरोधः स्यात्।

अद्वैतमतांतरेपु कालैकत्व-शब्दैकत्व-ईश्वरैकत्ववादिनः एवं आहुः। यद्यदनुविद्धं प्रतीयते तत्तत्राऽऽरोपितं। तथेदमाकारे रजतं इदं रजतमित्यत्र। कालानुविद्धं समस्तं प्रतिभाति। तस्मात्तत्रैवारोपितं। तथा च सर्वं जगदिदमारोपितमेव कालादिपु। एवमेव शून्यादिवादिनामेतेपां च पक्षः समान एव। प्रतिपन्नस्वरूपजीवविनाशादेः सर्वैस्तैरभ्युपगमात्। अतः परमेप्टनाशेन न तस्य पुरुपार्थत्वमित्यादि दोपोऽपि समान एव। पूर्वोक्तानुमान तु प्रत्यक्षागमविरोधाद्दुष्टमेव। वैभापिकसौत्रांतिकयोरपि मोक्षस्वरूपस्य शून्यविज्ञानवादिनोरिवानुमानविरोध. स्फुट एव। एव प्रत्यनुमानदूषितत्वात् प्रत्यक्षागमयोरप्रसरात् सर्वाभिमतसाक्षिविरोधस्य जागृतत्वाच्च सौगतमायावाद्यभिमतमोक्षस्वरूपं न प्रामाणिकमिति तत् न सुधीभिर्ग्राह्यमिति भावः।

सांख्यनैयायिकाद्याश्च प्राहुर्मोक्षं च निस्सुखम्।
इच्छाद्वेषप्रयत्नादेरपि सर्वात्मना लयम्॥
तत्राहुर्नेतदप्यत्र शोभनं श्रुतयो यतः।
महानंदं च भोगं च नियमेन वदंति हि॥

अनुव्याख्यानम्।

शरीरपडिंद्रियाणि पड्विपयाः पड्बुद्धयः सुखं दुःखं चेत्येकविंशतिभेददुःखात्यंतनिवृत्तिरेव मोक्ष इति वैशेषिका अभ्युपयंति। दु.खनिवृत्त्या, सुखदु.खयोर्विपयव्याप्तिमत्वात् (व्यापकत्वात्), सुखरहितत्वमभिप्रेयते। अतः सुखरहितो मोक्ष इति अवसीयते। तन्न सर्वथा आदरणीयम्। अशरीरं वावसंत न प्रियाप्रिये स्पृशत' इति श्रुत्या अप्रियप्राकृतदु.खादिसंवधः सर्वात्मना यथा त्यज्यते न तथाप्राकृतसुखादिकं। प्राकृतसुखस्य दुःखानुवंधित्वात् हेयत्वेऽपि अप्राकृतसुखं अनिष्टलेशविदूरं उपादेयमेव। प्राकृतसुखस्य दु खानुपक्तत्वेन विपसपृक्तमधुवत्

तस्यानिष्टपक्षनिक्षेपः साधुरेव। अप्राकृतसुखं आत्मस्वरूपत्वान्न हातुं शक्यते। अतः दुःखध्वंस एव मोक्ष इति वैशेषिक-नैयायिकानां मतं न शोभनं।

सांख्या अपि प्रकृतिपुरुषाविवेकेन ससारः तद्विवेकेन संसाररूप-दुःखनिवृत्तिः स एव मोक्षः इति मन्यंते। वैशेषिकमतनिरासेनैवैतदपि निरस्तप्रायम्।

भास्कर-यादवप्रकाशौ जीव-ब्रह्मणोः संसारे भेदाभेदौ मुक्तौ तु अभेदमात्रमिति आहतुः। तदपि न युक्तम्।

**कथं च यः पूर्वमसौ न पश्चाद्भवेत्स एवेत्यपि युक्तिमेति।**
**यतो न दृष्टं यदभून्नपूर्वं पश्चात्तदासेति कुतश्च किंचित्॥**
**न चैव मुक्ते न हरेः पृथक्त्वं ऐक्यं तथा स्यादिति युक्तिमेति।**
**यतो न कुत्रापि भिदाभिदाच दृष्टा चितश्चेतनया कुतश्चित्॥**

अत्र जीवेश्वरौ न भिन्नाभिन्नौ चेतनत्वात् देवदत्तयज्ञदत्तवत्। ईश्वरो जीवेन भिन्नाभिन्नो न भवति चेतनत्वात् यज्ञदत्तवत्।

इत्यनुमानद्वयं सूचितम्। यादवप्रकाशादयः स्वभावतः परमात्मना भिन्नाभिन्नो जीवः। तस्य ससारे भेद एव व्यक्तः। अभेदस्तु अविद्या-दिनाऽऽवृतो वर्तते। मुक्तौ तु द्वावपि व्यक्तौ भवतः इत्याचक्षते। तत्तु प्रागुक्तानुमानद्वयेन निरस्तम्।

एवं जैनादिमतानि भ्रमजानि। कानिचिद्विप्रलंभमूलानि। अतः कुसमयास्ते सर्वैर्बुभूषुभिः सर्वथा परित्याज्या एव।

### सिद्धान्तः

सिद्धांतस्तु 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः इत्याचार्यै-रुद्घोषितः। 'मुक्तिर्नैजसुखानुभूति (रमला भक्तिश्च तत्साधनं) इति मध्वसिद्धांतनवरत्नमालिकायां निगदितम्। प्रत्यक्षमात्रप्रामाण्यवादी चार्वाकः मोक्षमेव नाङ्गीकुरुते। मोक्षः स्वरूपानंदाविर्भाव इति श्रवणरमणीयं शशविषाणसमानं वस्तु वैदिकप्रतारणागुणभणितं नाङ्गीकरणार्हं धिषणागुणभूषणैर्मनीषिभिः। प्रत्युत मोक्षाभाव एव सरससंसारसुखसारास्वादायावकल्पते। इति लोकायतजल्पनं अल्पीकृतं

पूर्वमेव मोक्षसाधनचर्चाप्रसंगे । अद्यत्वे मोक्षस्वरूपं सिद्धांतीकुर्मः विषयविशेषविवेचनपाटवेन ।

अत्रेदं विवेक्तव्यं । ज्ञानोदयानंतरमेव हि कर्मक्षयः क्षीणकर्मणश्चोत्क्रांति, उत्क्रांतस्य च स्वयोग्यमार्गेण (मनुष्याणामर्चिरादिमार्गेण, देवानां च स्वोत्तमदेवप्रवेशमार्गेण) गतस्य ब्रह्मप्राप्तिस्ततो भोग इति कर्मक्षय-उत्क्रांति-मार्ग-गम्य भोग भेदोपलक्षितमोक्षस्य स्वरूपं निरूपणीयम् । भोगो नाम सुखानुभवः स च प्रतिजीवं योग्यतानुबंधी भिन्न एव । देवानामपि उत्क्रांतिमार्गौ मुक्तीतरकाले विद्येते । मुक्तिकाले तु देवानां स्वोत्तमदेवेषु स्रष्टृसृज्यभावव्यपेक्षया स्वस्रष्टृषु प्रवेशेन मुक्तिरितिध्येय । क्वचिदस्रष्टृष्वपि लयः दृश्यते । यथाऽश्विप्रभृतीनां वरुणाद्यजातत्वेऽपि स्वसमानावादिदेवतालयस्थाने वरुणादौ लय. ।

कर्मक्षयः ज्ञानेन संपत्स्यते इत्युक्तम् । कीदृशोऽयं कर्मक्षयः किंप्रकार. इति प्रश्नः समाधेयः । ज्ञानात्पूर्वमाचीर्ण अप्रारब्धं पाप काम्यपुण्यं (अनिष्ट पुण्यं) च 'तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ' इत्युक्तरीत्या दग्धं (नष्टं) भवति । ज्ञानोत्तरकृतं तु अश्लिष्टं भवति । पूर्वाघस्य विनाशः उत्तराघस्याश्लेषः इति भावः । अश्लेषो नाम इह जन्मनि अशुचित्वासंभाव्यत्वाद्यभावः परत्र च नरकाद्यहेतुत्वं । आनंदह्रासकारकत्वश्लेषोऽस्त्येवेति बोध्यम् । अप्रारब्धं अकाम्यं (इष्टं) पुण्यं ज्ञानद्वारा मोक्षायोपयुज्यते । प्रारब्धं तु पापं उभयविधं च पुण्यं भोगादेवोपक्षीयते । "भोगेनत्वितरे क्षपयित्वाऽथ संपत्स्यते" । नाऽभुक्तं क्षीयते कर्मेति वचनं (स्मृतिस्तु) अकृतप्रायश्चित्तविषयं अज्ञविषयं प्रारब्धविषयं वा भवति ।

एवं कर्मक्षयानंतरमुत्क्रांतिर्देहान्मानुषाणां, उत्तमदेवतासु लयः देवानां चरमदेहपाते भवति । देवतालयस्तु नीचानामुत्तमे प्रवेश एव । नीचोत्तमत्वं तु तारतम्यकक्ष्याया प्रमाणबलादेव ज्ञातव्यम् । भूतादीनि विशेषप्रमाणबलेनेंद्रादिषु लीयंते । इन्द्रादयः वायौ वायुस्तु परमात्मनि संपत्स्यते । इह द्वौ मार्गौ । शेषमार्गो गरुडमार्गश्चेति । विशेषस्तु ग्रथांतरादवगंतव्यः ।

न केवलं संसारे किंतु मोक्षेऽपि तारतम्यघटितभेदः वरीवर्तते। स च प्रत्यक्षानुमानगमप्रमाणप्रमितः। ब्रह्मादिमुक्तैः साक्षादनुभूयते मुक्तौ भेदः। विमतो भिन्नो मुक्तत्वाद्यदित्थं तत्तथा यथासंप्रतिपन्नं इत्याद्यनुमानैरनुमीयते। तत्वोद्योते मुक्तौ भेदः समर्थितः श्रीमदाचार्यैः। 'आधिकारिकमण्डलस्थोक्तेः 'जगद्व्यापारवर्ज' इत्यादिसूत्रेषु तैत्तिरीयोपनिषदि आनंदवल्यां 'श्रोत्रियस्य चाकामहतस्य' (अकामहतत्वं मुक्तस्य लक्षणं) इत्यादिवाक्येषु आनंदस्योत्तरोत्तरं शतगुणाधिक्यस्य वर्णनेन च तारतम्यघटितभेदः आगमप्रमाणमूल इति ज्ञायते। मुक्तौ तारतम्यं साधनतारतम्याधीनं। तच्च जीवस्वरूपयोग्यतावैचित्र्यानुबंधि। बिंबैक्येऽपि 'स्थानविशेषात्प्रकाशादिवत्' इत्यादिसूत्रेषु प्रतिबिंबे वैचित्र्यं समर्थितं। यथाऽर्करश्मिररिनकांतमणौ पतितः दाहमुद्भावयति न पुनः काष्ठलोष्ठयोः। एतेन प्रतिबिंबयोग्यताऽपि अनादिसिद्धावैचित्र्यमापादयति फले इति ज्ञायते। योग्यताया अनादिनित्यत्वं तु ईश्वराधीनमेव जडत्वात्। स्वतः प्रवृत्त्यनुपपत्तेः। द्रव्यं कर्म च कालश्च स्वभावो जीव एव च यदनुग्रहतः संति न संति यदुपेक्षया। इत्यादि प्रमाणसिद्धत्वाच्च। अत्रेदमवधेयं। यत्प्रतिबिंबवैचित्र्ये बिंबसन्निधिविशेषोऽपि कारणमिति। स्थानविशेषाधिकरणे 'उपपत्तेश्चे'ति गुणसूत्रे न केवलं स्थानगुणेन किंतु बिंबसामर्थ्याच्च ब्रह्माद्यानंदादीनां वैचित्र्यमुपद्यते इत्युक्तम्। 'इति जातिकृतो भेदस्तथाऽन्यो गुणपूर्वकः' इत्यादिवचनेषु योग्यतापरपर्यायजातिनिबंधनो जीवेषु भेदः प्रतिपादितः। जडेषु अचेतनत्वात् न तारतम्यमिति सिद्धांतः। एवं मुक्तितारतम्येन साधनतारतम्यं। तच्च स्वरूपतारतम्यं साधयतीति पर्यवस्यति।

'यावदधिकारमवस्थितिराधिकारिकाणां', 'नाविशेषादि'त्यादिसूत्रेषु अधिकारितारतम्य, तेन 'प्रज्ञांतरपृथक्त्वदृष्टिश्चे'ति सूत्रे ज्ञान (साधन)-तारतम्यं तेन च मुक्तौ भोगे तारतम्यं आधिकारिकमण्डलस्थोक्तेः, 'जगद्व्यापारवर्जं' इत्यादिसूत्रेषु स्फुटं प्रतिपादितम्।

मुक्तौ भोगो नामाऽऽनंदानुभवः। स चानेकप्रकारः। शेषगरुडमार्गेण स्वोत्तमेषु प्रविष्टा देवाः परमात्मानमाप्नुवंति। मानुषास्तु 'तदोकोग्रज्वलनमि'त्युक्तप्रकारेण ब्रह्मनाडीद्वारा जीवदेहादुत्क्रांताः

अर्चिरादिमार्गेण गताः प्रतीकालवन-अप्रतीकालंबनभेदेन मुख्यप्राणं वा कार्याख्यचतुर्मुखब्रह्माणं वा प्राप्नुवंति। प्रतीक देहः देहादावेव ब्रह्म पश्यंतः प्रतीकालंबना.। तदन्ये सर्वत्र ब्रह्म पश्यंतः अप्रतीकालंबनाः व्याप्तोपासकाः ब्रह्मणा सहैव मुच्यंते प्रकृतिबंधात्। न पुनरावर्तंते कदाऽपि कयाऽपि रीत्या। अयमभिसंधिः। आदौ सर्वे वायु गच्छंति। वायुस्तु अप्रतीकालंबनान् ब्रह्माणं नयति। प्रतीकालंबनान् परमात्मानं नयति। एते अमुक्तभागे ब्रह्माऽऽगमनं प्रतीक्षमाणास्तिष्ठंति। ब्रह्मा तु कार्यात्यये महाप्रलयानंतरं उभयविधजीवैः सह परमात्मानं गच्छति। तत्र तत्तज्जीवयोग्यतानुरोधेन स्वरूपानंदभोगः संपद्यते इति स्थितिः। सर्वेऽपि जीवा. प्रकृत्याख्यविरजानदीं तीर्त्वा संसारकारणं त्रिगुणात्मकं लिंगदेहं त्यक्त्वा वायुना सह ब्रह्माणं प्राप्यब्रह्मणा सार्धं परमात्मानं प्रविशंति। आदौ श्वेतद्वीपे वासुदेवं दृष्ट्वा तत्प्रसादेनाविर्भूतस्वरूपानंदाः ज्ञानानंदात्मकदेहेन वा परमात्मदेहप्रवेशेन वा (जीवप्रविष्टग्रहवत्) स्वरूपानदं यथासभव पूर्णमनुभवति। अस्यानंदस्य वृद्धिह्रासौ न कदाऽपि संभवत। ज्ञानोत्तर कृतकर्मणोऽपरोक्षज्ञानिनस्तु आनंदेऽतिशयः उन्नाह अनुभूयते। मोक्षे जक्षन् क्रीडन् रममाणः इति प्रमाणानुसारेण स्वेच्छयैव स्वाभाविकभक्त्या परमात्मपूजां कुर्वंति। मोक्षे जीवव्यापारः श्रीसुमध्वविजये एकादशसर्गे विस्तरेण वर्णितः।

इति मोक्षस्वरूपविचारं प्रतिपाद्य उपन्यासकः विरराम। प्रहृष्टाश्च स्वामिनः तं श्लाघयामासुः।

तदनु श्रीचरणाः कार्यभरनिर्वहणत्वरितगत्याऽऽदौ श्रीगुरुसार्वभौमाणां पचामृताभिषेकमहोत्सवं प्रस्तावयितु श्रीमद्वृन्दावनमहासन्निधिं प्रापु। तत्र सर्वोऽपि जनसंघातः अनुधावन् वृन्दावनस्य पुरतः प्रत्यपतत् रथोत्सवसभ्रमदिदृक्षयाऽनुपदमेव। अर्चका यथापूर्वं सम्मिलितद्रव्यैः गुरुसार्वभौमाणां पंचामृताभिषेकं श्रीगुरूणां सुयमीन्द्रपूज्यपादानामाध्यक्ष्ये यथाविधि समाप्य मंगलार्तिक्यसेवामकार्षुः। श्रीपादा. किंचिद्व्यवधानेनांतरितत्वात् महारथोत्सवसमयस्य, स्वकुटीरमागत्य अलकारब्राह्मणाना वस्त्रयुग्मं समंत्राक्षतं दत्वा यथाकालं सन्निहितै. भाव्यमलंकारमण्डपे इति आज्ञापयामासुः।

## महारथोत्सवः

श्रीगुरुसार्वभौमवृन्दावनमहासौधपटांगणे महारथः दारुमयः श्लक्ष्णमांसलशिलाकलाकृतिमनुकुर्वद्भिः दशावतारविग्रहैः कोणेषु प्रकीर्णे नर्तनभंगीविलासेन नवरसलास्येन समुल्लसितैः गंधर्वाप्सरःकिन्नरीप्रतिच्छंदैः वर्तुलपरिधेषु निर्मितकृष्णलीलाकलितस्फुरच्चैतन्यमयमूर्तिभिः पंचतलेषु गोपुरशिखरपर्यंतावकाशसालवल्लरीषु नानाविचित्रमल्लयुद्ध-नाट्यशास्त्रोक्तधाट्यावेदककलाप्रपूर्णकथानकादिनिदर्शनैः संभृतः दृष्टिमावर्जयति स्म दिदृक्षूणाम्। पार्श्वफलकेषु निवद्धाभिः वैजयंतीपताकाभिः विविधवर्णरंजिताभिः समीरप्रघातेन कंपंतीभिः आगामिमहमहोदयः संसूच्यते यात्रिकभक्तजनानाम्। बृहत्पृथुतलेन चतुश्चक्रपरिवृढेन मंदं मंदमूर्ध्वं लघूभूय वृत्तानुपूर्वशैल्या रथोऽयं ब्रह्मसदनं मेरुशैलमनुकरोति आकृतिविशेषे। प्रह्लादो रथारूढः दिग्विजयाय यात्रामुपक्रमते दुष्टान्निग्रहीतुमिवाऽऽभाति श्रीगुरुराघवेंद्रावतारेण कलियुगे भारतभूमौ। चार्वाकाद्यसुरकुलकालनेन धर्मरथमारूढः समीरणः समुज्जृम्भते यात्रया सुत्रामसुतसमेतः व्यासतीर्थराघवेंद्रादिसेनानीनियंत्रणेन सज्जनतानीकं दुष्पथादुदञ्चयतीति भाति।

पटहढक्काभेरीदुंदुभयः पृथुचर्मवाद्याः सुषिरवंशकोणवीणादिमृदुमन्द्रवाद्यविशेषाः कांस्यतालादिमेलापकाः विविधास्तन्त्रीवाद्याश्च सममुदजनयन् संकीर्णरवमुत्साहमुद्रेकयंतं जनतायाः। आनकदुंदुभिभेरीशब्दस्तुमुलः प्रतिरवमुदीरयन् प्रत्यंतपर्वतपरिसरेषु निलीनान् विस्रब्धं प्रसुप्तान् पशूनपि प्रबोधयति रथोत्सवप्रसंगारंभम्। ग्रामाद्ग्रामांतरमुपस्पृशन् तुमुलनिनादः कुतूहलमुद्रेकयति खर्वटनिवासिनाम्। सपदि स घोषः तूर्यतालनिःसाळझर्झरभेरीघातोत्पतितः हृदयपटलमुद्भेदयति स्वावसथवासिनां यात्रिकाणां कालविलंबं मिथः सल्लापेन विलोपयितुमाकलितानां निर्व्यलीकम्।

अत्रांतरे जनाः दूरादध्वनः संबाधेनाऽऽगंतुमारेभिरे शकटान् वाहयंतः अश्वानारोहंतः पदा प्रचलंतः प्रचण्डकिरणघर्मभरमवगणयंतः क्षेत्रसस्यांकुरयवसपरिरक्षणविक्षिप्तचित्ताः स्त्रीबालपंगुवृद्धाः जवेन धावितुमक्षमाः मार्गे प्रचलितशकटवाहान् प्रार्थनया रथोत्सवमात्मानं यापयितुमनुनाययंतः। दिशासु चतसृषु प्रसर्पज्जन

संबाधधूलीपटलेन पटवासायितमखिल क्षेत्र । झटिति घनघनायित-मबरमर्तकितं । ग्रामारण्यपण्यवीथीपथाः सान्द्ररेणुकण कण्टकिता. धूलीधवलितनिर्गमागमक्षोदरेखाः लोकप्रचारव्यापारक्षमाः नाऽभवन् मुहूर्त । प्रचण्डकिरणसरणिरपि निरुद्धांऽतरिक्ष एव प्रतपती न महीतलमुपसर्पितु प्रभवति स्म । निदाघसंतप्तायां जनतायामनुक्रोशेन घृणार्णव. क्वणत्समीरण प्रवह्वायुमाहूय रथोत्सवाय मार्गं शोधयितुमादिदेश निष्प्रत्यूहयानविधित्सया शिखरिसमोन्नतस्य रथस्य । निबिडघनरज.सटासकटित धरातलमवलोक्य वरुणमादिश्य पर्जन्यवनसेचनेन जनानां सुलभगतप्रत्यागतमाततान । गगनयानैराव्रजंतो दिवौकसः पर्जन्यवर्षणेन महीतलपथसवाधशिथिलतासमाहितचेतस. इरंमदमदं मेघममदमभिनदंत मुदममदामावहंत स्वयूथ्यं प्रह्लादमाह्लादयितुकामा. श्रीगुरुसार्वभौमरथोत्सवं प्रकाममवलोकयितु विस्तारिभिर्नेत्रैरनिमिषद्भिः अवातरन् । अवतस्थिरे च भुवरवकाशे तत एव समग्रवृत्तनिर्वर्णनाय ।

श्रीपादाः रजतशिबिकाया क्षात्रराजन्यकुमारकवचहरकौशेयवासोविभूषितं यतिलिंगकमण्डलुकाष्ठधारिण श्रीगुरुसार्वभौमविग्रहं उत्सवप्रतिमया सनाथ सुरभिविमर्दोत्थपरिमलरजःसेकवासितवासोनिवीत प्रधानपुरोधसाऽऽनाय्य वीणावेणुवंशवादनसमं रथोपस्थे ससंभ्रमं प्रवेशयामासुः । अर्चका शुभार्तिक्येन संभावयामासुश्च गुरुसार्वभौमं । ततः श्रीमठस्य सर्वाधिकारिणः श्रीचरणाज्ञया प्रतिष्ठितविद्वद्वरेण्यै. -अधिकारिभिश्च सर्वकारप्रतिनिधिभि अर्पितानि नारिकेलफलानि स्फोटयामासुः रथचक्रारेषु । गुरुवराः श्रीसुयमीद्रमौनीद्राः रथाग्रभागे -पार्श्वयोः अर्चकमतल्लजै. श्रीपादपुत्रैश्च परिवारिताः अतिलापातसंबाधमारात्सम्मिलितानां विंशतिसहस्रादुपरि गणनागुणितानां मध्ये सुगंधकल्क केशरपच्चकर्पूराष्टगंधादिपरिमलद्रव्यसमुत्थं श्रीहरिवायुगुरुभ्यः समर्पितावशेषं फलमंत्राक्षतादींश्च क्षेपयाचक्रुः समंतात् चतुर्दिक्षु विप्रवृदेपु । जनास्तु प्रसादोऽयमिति बहुमानयंतः हस्तेऽहमहमिकया जगृहु उत्तरीयांशुकदशाया आवेष्ट्य भद्रं बंधयामासुरशेषशेषं । चमरीमृगपुच्छवीजनैरुपवीजयंतः श्रीगुरुसार्वभौमपरिचर्याकर्म सुभगं निर्वाहयतोऽर्चककुमाराः स्वकर्मणि बद्धादरा

अभूवन् । भक्ताः स्वस्वनियतसेवामादधानाः रथारूढगुरुराजाय नारिकेल-खर्जूर-कदलीफल-खण्डशर्करादिवस्तुजातमर्चकमुखेन समर्पयामासुः । श्रीपादाः भक्तजनानुद्दिश्य श्रीगुरुसार्वभौममहिमादिकं स्मारं स्मारं भक्त्युद्रिक्तचेतसा हर्षात्पुलकितगात्राः नेत्रपुटात्स्रवदानंदवाष्पाः न्यरूरुपन्नाम्रेडयतः कथाविशेषान् । पृथुकायाः भक्ताग्रेसरा विप्राः रज्जुना रथं बध्वा आक्रष्टुमभियोगमादधुः ।

शुभ्रमभ्रमदभ्रघृणीरश्मिविघूर्णितम् । मेघार्णसा प्रत्यग्रसेचनेन महीतलं हिमशीतलमभवत् शुभजनतायै गुरुपदनतायै । सुभगा च रथगतिः मंगलाशंसिनी जगतः शुभायावकल्पते । नाकिनिकायश्च भुवर्लोके विमानेन विगाहमानः शोचिष्केशरोचिषा विष्वग्विसर्पन् मंत्रालयक्षेत्रमुपसर्पन् अवलोकितः श्रीगुरुसार्वभौमपदपंकजभ्रमरेण श्रीसुव्रतीद्रवरकुमारेण श्रीसुयमीद्रमस्करिमणिना ।

**स्वागतं चतुर्मुखाय वायवे भूरिमेधसे ।**
**नीलकण्ठाय शेषाय विनतानंदनाय च ॥**
**इंद्राय नाकपतये चंद्रकामादिसूरये ।**
**गन्धर्वकिन्नराप्सरोगणाय मुनिराजये ॥ ७ ॥**

**गीर्वाणीभारतीहैमवतींद्राणीगणाय च ।**
**देवर्षिमुनिवृंदाय पद्मनाभादिसूरये ॥**
**जयतीर्थव्यासतीर्थजयींद्रेभ्योऽस्तु स्वागतम् ।**
**सर्वेभ्योऽपि महद्भ्यश्च प्रह्लादांतेऽवसंश्च ये ॥ ८ ॥**

इति संफुल्लहृदयारविंदेन विकचकमलनयनावलोकनैः स्फुरद्वाक्त्रिपथगाजलार्घ्यैः स्तुतिमुक्तामणिपाद्योपायनैः नारिकेलफलकमस्तकपातेन भूतलन्यस्तजानुना प्रणिपत्य वद्धांजलिः समुत्तस्थौ श्रीसुयमींद्रगुरुभरुः । पृथुविस्तारिलोचनाभ्यामूर्ध्वमवलोकयन् सचकितचकितं सपद्यवतरंतं सुपर्णपर्णसमारूढं लक्ष्मीनारायणं रामकृष्णकृष्णनृहरिव्यूह संकीर्णरूपमापीच्यमनोनयनाप्यायमानं मूर्ध्ना प्रणनाम तुष्टाव च संतुष्टहृदयः हर्षोद्गारिवचस्तवकेन ।

य: प्रागध्वरभूमिमाप्य बलिराजन्यात् स्वयं पत्त्रयं ।
स्थानं भैक्षमयाचताद्भुतवटुः त्रैविक्रमाख्यो हरिः ॥
यः प्रह्लादममोचयन्मृतिमुखात् स्तम्भोत्थभव्यात्मना ।
सोऽयं वामननारसिंहवपुरद्याऽयात्यहो भूतले ॥ ९ ॥

पश्याभ्युद्घवपुर्जटाधरममुं विज्ञानमूर्तिं हरिम् ।
ज्ञानानंदकणान् मुहुर्विकिरता नेत्रेण भास्वंतमा- ॥
राद्व्यासाख्यतनुं तथा यदुपतिं कृष्णार्ऽतिहं पाण्डव- ।
प्रेम्णा कौरवमागधादिदुरितध्वंसं रमावल्लभं ॥ १० ॥

धन्योऽस्मि भो गुरुवर प्रवर प्रभूणां ।
त्वद्याञ्चयाऽवनितलं दिविजावकीर्णम् ॥
क्षेत्रं त्वदीयमतुलं वरमुक्तिनाथ ।
नाकादथाप्यधिकमाचितमार्तवंधो ॥ ११ ॥

श्रीराघवेंद्रयतिराट् प्रभुभिर्गुणाढ्यैः ।
श्रीजानिब्रह्मवरवायुमहेंद्रमुख्यैः ॥
आरोहतु त्वरितदिव्यरथमुत्पताकं ।
विप्रैः कुतूहलनतैः परिषेव्यमाणं ॥ १२ ॥

इति संप्रार्थ्य जयजयशब्दतुमुलविशालभूतलाभोगे महारथमहोत्सवं प्राचूचुदद्धर्षदंतुरितगात्रः श्रीसूयमीद्रसंयमींद्रः ।

रथादग्रभागे वेदमन्त्रपठनपटवः श्रोत्रियब्राह्मणा. तैत्तिरीयशाखोक्त-ब्रह्मवल्लीत्रिसुपर्णादिसूक्तानि व्यघोषयन्वालखिल्य इव सप्तसप्तेरर्यम्णः स्यन्दनाग्रत । पुरस्ताद्वेदांतादिशास्त्रनदीष्णाः ब्रह्मसूत्राणि सभाष्याणि विष्णुसहस्रनामावलिं च पठंत पाठयंतश्च श्रीहरिगुरुतोषमपुष्यन् । पुरस्तादन्ये महाविद्वांसः श्रीमन्न्यायसुधां सपरिमलं कण्ठपाठेन झटित्याम्रेडयंत. वादरायणकरुणार्णवप्राघूर्णिकाः श्रीमन्मध्वतंत्र-संत्राणनतनुत्राणाः यात्रिकचेतश्चूलिकाः समपद्यत । अपरे पुनस्तदुपरि श्रीमध्वविजयराघवेंद्रविजयादिमहाकाव्यश्लोकान् सर्गानुसर्गं तत्तद्वृत्तप्रासानुरूपसंगीतसंगतयाऽन्ववोचन् मधुरमंद्रस्वरेण । बाल-विद्यार्थिकलस्वनकाकल्या श्रवणगणसंतर्पणरसायनमकल्पत स प्रसगः । अग्रे पुन. हरिदाससमितिसभासदः पुरंदर-विजय-गोपाल-जगन्नाथ



धन्योऽस्मि भो गुरुवरप्रवर प्रभूणा।
त्वद्याऽन्वयाऽवनितलं दिविजावकीर्णम्॥
क्षेत्रं त्वदीयमतुलं वरमुक्तिनाथ।
नाकादयाप्यधिकमाचितमार्तवंधो ॥ (प. २३८ श्लोक ११)

प्राणेश-दासवर्याणां कृतिरत्नानि श्रीहरिकारुण्यविवरणानि निरंतरप्रेमप्रवाहपिशुनान्यगायंत तालयतानवितानेन ततेन वादित्रेण साकम् । तदग्रतः वंशवीणावेणुनादभंगीरंगेन वादनकौशलमनुरञ्जयंतः वैणिकवंशिकाः मृदंगढक्काकांस्यझल्लरीघटवाद्यवादनवैदग्धीमुद्धाटयंतः हावभावविशेषैः वाद्यकथावस्तुकौतुकमाकलयंतः जनसंघातं निदाघदाहसंदग्धमप्यावर्जयन् संघश. समंतात् । तत्पुरतः दुंदुभिभेरीकाहळपटहाद्यद्भुतवाद्याद्यभिघातोत्थनिर्घोषेण घनाघनरसितमधरयंतः भैरिकदौंदुभिकाः प्रत्यंतपर्वतगुहासु निद्रामुद्रितनेत्रेण प्रसुप्तान् वन्यमृगेंद्रानपि प्रसभमुद्बोधयामासुः उद्रिक्तध्वानेन । वनराजिषु वप्रक्रीडाभिः स्वैरं विहरंतः कासारसरसीरुहोत्पाटनालोडनक्रीडाभिः विनोदयंतो दानवारिनिष्यंदरेखाखातगण्डभित्तयो मत्तोद्वृत्तकरटिन कण्ठीरवकण्ठनिर्यद्घोरस्वरमेदुरस्निग्धगर्जितमाशंकमानाः विद्रावितहृत्पटलाः दुद्रुवुः कांदिशीकाः शरणमरणंतः ।

महता संभ्रमेण रथोऽयमुद्घसत्वः साक्षीव निरर्गलः प्रौढसंगत्या गत्या विप्रवरैर्हृदयदाम्नाऽऽम्नायनयदाम्नेव भक्तिदाम्ना दृढविरक्तिगुणितेन रज्वा समूह्यमानः मंदं मंदं चलति प्रदक्षिणागत्या स्वस्थानवीथीम् । मध्येमार्गमष्टदिक्षु कोणेषु च दिक्पालकैरिव ब्राह्मणैः सुवासिनीसनाथैः रथारूढः श्रीराघवेंद्रगुरुसार्वभौमः पुष्पोपहारैः भासुरनीराजनमंगलदीपैः फलप्रदानैः नारिकेलस्फोटनादिभिश्चाभ्यर्हितः सदण्डप्रणिपातं । कर्पूरखण्डिकाप्रज्वालनैरंतरांतरा धूपधूमधूसरितं प्राकारांतरालं हरिद्राकुंकुममसृणपरिमलपिष्टैः स्फुटितनारिकेलसीधुजलमिश्रैः कर्दमितं जंघालरथगतिभंगायाकल्पत । चक्रवर्तिवैभवेन चक्रिभक्तचक्रवर्तिगुरुसार्वभौमः कलिकालिमविकलनकुशलः कायवाक्चित्तैरविसंवादिन्या भक्त्या श्रीहरिसेवां कुर्वाणानां कर्मयोगिनां ज्ञानभक्तियोगिनां च नियतचित्तवृत्तीनां सद्धर्मसदाचारपूतांतरंगाणां सदभीप्सितानि चिंतामणिरिव सदापूरयामीति वरदहस्तेन पिशुनयन् स्वस्थानागतरथे उपविष्टः दानशौण्डतामवगमयामास सम्मिलितभक्तजनान् । आयुक्तकादेशेन श्रीगुरुसार्वभौमप्रतीकं अंतर्बृंदावने रजतशिबिकयाऽऽनीय स्थापयित्वोन्नतरजतपीठे धूपदीपनैवेद्यादिपंचोपचारैः संभाव्य नीराजनं चक्रुरर्चकमहोदयाः ।

तदनु श्रीगुरुराजराजतविग्रहः हृद्यश्लक्ष्णमसृणचित्रवर्णरंजित-कौशेयदुकूलेन भूषितः नवरत्नखचितकलधौतादोलिकायां भद्रासने उपवेश्य पुष्पहारादिभिः अलकृत्य पंचोपचारैः पूजितः । श्रीगुरुराजः आंदोलिकायां निषण्णः अतीव दर्शनीयः मनोज्ञः समदृयत दिदृक्षूणां भक्तजनानाम् ।

तदा भक्ताः दोलालास्यलोलं श्रीगुरुराघवेंद्रगुरुसार्वभौमं समभ्यनंदन् सकुसुमलाजापूरैः ललितपदभासुरैः सरसैर्गीतपद्यैः ।

जो जो जो जो जो राघवेंद्र ।
जो योगिमूर्धन्य सुरभूज सत्सु ।। १३ ।।

आदौ सृष्ट्वा मध्यतः पालयित्वा- ।
त्वंते सृष्टं संहरत्यंजसा यः ।।
दोलालोलो ह्यादिमध्यांतशून्यः ।
बालो लीलादोलया नन्दयेन्माम् ।। १४ ।।

तदादेशात्प्राणदेवो जगत्यां ।
श्वासोच्छ्वासं यापयन् जीवकोटेः ।।
दिव्यद्रोण्यां लोकवार्धौ निषण्णो ।
ऊर्ध्वाधो यः खेलते दोलिका याम् ।। १५ ।।

प्राणप्रेयान् राघवेंद्रो मनस्वी ।
शेते दोलामध्यमध्यास्य चित्रम् ।।
लीलालौल्यात् श्रीहरेः प्रेमपात्रं ।
यद्वाङ्मात्रात् श्रीहरिर्मोक्षदाता ।। १६ ।।

लक्ष्मीर्लोला दोलिकारूपिणी सा ।
पुत्रान् पौत्रान् ब्रह्मशर्वादिजीवान् ।
नीचैरुच्चैर्यापयंती यथार्हम् ।
भर्तारं स्वं बिभ्रतीह्यंतराले ।। १७ ।।



महता सभ्रमेण रथोऽयमुद्घसत्वः साक्षीव निरर्गलः प्रौढसंगत्या विप्रवरैर्हृदयदाम्नाऽऽम्नायदाम्नेव भक्तिदाम्ना दृढविरक्तिगुणितेन रज्वा समूह्यमानः मंदं मंदं चलति प्रदक्षिणागत्या स्वस्थानवीथीम् (प २३९)

धन्यो गुरु राघवेंद्रो जितारिः ।
प्रह्लादांशोऽतोषयच्छ्रीनृसिंहम् ।
अद्यत्वे श्रीव्यासरामादिरूपं ।
ध्यात्वा तेषां प्रीतिपात्रं विभाति ॥ १८ ॥

ततः श्रीचरणा. पुनः मठांतः स्नानगृहे उष्णोदकेन स्नात्वा काषायवाससी परिधाय गोपीचंदननाममुद्रादिभिरात्मानमलंकारयामासुः । माध्यान्हिकजपादिकार्यजातं समाप्य श्रीमन्मूलरामचंद्र-दिग्विजयराम-जयरामलीलादेवीकरार्चितवैकुठवासुदेवप्रतिमाः व्यासमुष्टिशालग्रावादि प्रतीकानि च तन्त्रसारोक्तक्रमेण पूजयामासुः । क्षीराभिषेकं कृत्वा शुद्धोदकेनाभिषिच्य श्रीरामचंद्रप्रतिमास्तु तुलसीदलेन शंखतोयप्रोक्षणेन संभाव्य गंध-तुलसीपुष्पहाराद्युपचारैः भूषापोषमर्चयामासुः । तदनु धूपदीपत्रिवृतिमंगलार्तिक्यसमर्पणानंतरं महानैवेद्यं रमाब्रह्मादिनैवेद्यं दर्शयामासुः । तदनु महानीराजनं यथाविधि ददुः । अपराधक्षमापनादिस्तोत्राणि पठित्वा प्रतिमाः तत्तत्संपुटेषु निधाय महापूजां निरवर्तयन् । ततः श्रीगुरुसार्वभौमवृंदावनं पादसपर्यापुरःसरं गंधाक्षतादिभिरलंकृत्य भिक्षां दत्वा महानीराजनं दर्शयामासुः । तथैव श्रीवादींद्र-सुधर्मेंद्र-सुव्रतींद्रगुरून् पूजयित्वा अलंकारब्राह्मणानर्घ्यपाद्याद्युपचारैः संभाव्य पूर्ववत् मृष्टान्नभोजनेन तर्पयामासुः । सम्मिलितभक्तवृंदाय तीर्थं दत्वा मृष्टान्नभोजनं दत्वा स्वयं भिक्षां स्वीचक्रुः ।

अपराह्ने यात्रिकभक्ताः हरिकथां भागवताचार्यैः कीर्तनपटुभिः संकथ्यमानां संगीतलहरीलास्येन हास्येन च जनतामनस्तोषकरी शुश्रुवुः । सायं श्रीरामपूजां गुरुसार्वभौमादिगुरुपूजां च विधाय भक्तजनेभ्यः मन्त्राक्षतादिकमनुजगृहुः श्रीसुयमींद्रपूज्यपादाः ।

रात्रौ श्रीगुरुसार्वभौमवैभवं नाम नाटकं यक्षगानशैल्या नूतनकविविरचितं प्रयोगपटुभि. ब्राह्मणवटुभिः प्रदर्श्यमानं द्रष्टुं सर्वे जनाः नाट्यमंदिरं प्रतिजग्मुः । श्रीपादास्तु किंचिद्विश्रम्य शिष्टपरिगृहीतं भक्तिरसप्रवाहपरिवृढं गुरुभक्तिपोषकं नाटकमवलोकयितुं शिष्यैः पण्डितैश्च सार्धं नाटकशालां प्रति प्रतस्थिरे ।

नोपदेशवागाप्यायनेन चक्षुः श्रवोभूयचक्षुःश्रवणतर्पणेनाऽऽत्मानं संभावयितुमुत्कण्ठितान् भक्तान् विज्ञानमार्गे प्रवेशयितुं वाक्यार्थविमर्शगुह्यौपनिषद्प्रमेयविशेषविचारादभ्रविद्याविश्लेषणदक्षं वाङ्मुखं प्रस्तावयांचक्रुः । देशविदेशेभ्यः समागतास्तत्तद्विद्यापरिणताः सभावाक्यार्थनिर्वाहजल्पवितण्डावादकथासु कुशलाः चटुलधिषणाः व्याकरणे तर्के कर्म-ब्रह्ममीमांसयोश्च झटिति पूर्वपक्षानक्षोदक्षमान् प्रतिपक्षसंगरे उपक्षेपयांबभूवुर्धाराकारेण । श्रीसुधींद्रयतींद्राः सद्युक्तिरत्नाकरादिप्रोढप्रबंधनिर्मातारः वादविद्यायामद्वितीयमतिप्रसराः प्रतिवादिमल्लाः पण्डितप्रकाण्डैराम्रेडितवाक्यार्थशैली निर्वर्ण्यातिमात्रं तृप्तचित्ताः द्विगुणितस्पर्धया स्वशिष्यप्रवरैरविकलपाटवेन सपदि निशितसमाधिकौक्षेयकक्षेपैः खण्डशः खण्डयित्वा विशीर्णान् वादिशेखरान् मर्शं मर्शं मुहुः समभ्यनंदन् संश्लाघयांचक्रिरे च तत्प्रत्युत्तरशैलीम् ।

स्वशिष्याग्रणीर्वेंकण्णनामा प्रत्युत्पन्नमतिः प्रतिभयाऽसाधारणया पातञ्जलमहाभाष्ये दुरवगाहप्रतिपत्ति वैदग्ध्यं च प्रदर्श्य संमिलितान् पण्डितप्रवरान् शीर्षादोलनेन साकं चकितचकितचित्तानतनोत् । विभावयांचक्रिरे च पण्डिताः प्रतिपक्षकक्षनिर्धूननक्षममम‍ुं बालवेंकण्णं दृष्ट्वा नूनमयं पतञ्जलिमहर्षेरपरोऽवतारः निगूहितसहस्रवदनः समायातः सभ्यदृष्टिपथमिति । परिपंथिपङ्क्तिप्रविष्टाः प्रौढप्रतिपक्षिशेखरा अपि विना पक्ष-प्रतिपक्षविभेदं वस्तुतत्वावमर्शैकदृष्टयः वेंकण्णस्य पाण्डिती नवनवोन्मेषिणी च प्रज्ञा समीक्षमाणाः साक्षात्सुरोत्तमगुरुर्धिषणाचार्य एव बटुवेषेणावतीर्ण इति निर्व्यलीकं श्लाघयांचक्रुरमु वेंकण्णपण्डितम् । षट्शास्त्राकूपारागाधतां षोडशहायनवयोऽभ्यंतरे एव दृष्टवत. अस्य बालसरस्वतीख्यातिं जुषाणस्य महाभाष्यविदग्धतां विद्वत्परिषत्सु तत्र तत्र प्रदर्शितामुपलक्ष्य श्रीसुधीद्रतीर्थश्रीपादाः विद्योपजीव्यपक्षपाताः 'महाभाष्यं वेंकण्णभट्टः' इति अनन्यसाधारणां बिरुदप्रशस्तिमनुगृह्य जगति विशिष्टसम्माननां प्रथयांचक्रुः । एकदा श्रीपादाः प्रियशिष्यं वेंकण्णभट्टमाहूय निजगदिरे ।

**श्रीपादाः**—भो, शिष्योत्तम वेंकण्ण, परिषदियं नितरां प्रसीदति तव चतुरस्रपाण्डित्येन । वयमपि ते निरवग्रहमनुग्रहं विधित्सवः श्रीमन्मूलरामचन्द्रमहासंस्थानमेव तव विशाले स्कन्धफलके

निक्षिप्य स्वस्थचित्ताः अवस्थातुमभिलषामः । पण्डित-प्रकाण्डस्य यमनियमस्वाध्यायनिष्ठस्य तपःशीलस्य तवा-ध्यक्ष्ये समीरसमयविहारभूमौ सत्सिद्धांतः पाठप्रवचनेन शिष्यसंपत्त्या च क्रमेण प्रचीयमानः उत्तरोत्तरमभिवर्धमानः श्रीमध्ववल्लभं जगदेकनाथं श्रीमन्मूलरामचंद्रावतार वेद-व्यासमभिप्रीणयति । वयमपि त्वयि विदुषि संस्थानधुरं न्यस्य विगतचिंता. जपतपःकर्मानुष्ठाने पाठप्रवचने च स्वाध्याये काल सुखं यापयामः।

वेंकण्णभट्ट.—[चकितचकितः] स्वामिन्, क्षम्यतामयं जन श्रीपाद-पादमूलरज सेकसमुत्सुक गुर्वंतेवासिपदतृप्तचेता.। नार्हति मा पृथग्जनं गुरुपादतले शयानं महासंस्थानप्रासादशिखर-मारोहयितुम्।

क्व मूलरामसंस्थानं राज्यनिर्वाहदुर्भरं।
क्वाऽहं निःस्वो ध्यानरतः लोकवार्तातिदूरगः।।
बालोऽहं दयिता मुग्धा पोष्यमप्यस्त्यपत्यकं।
मामून्निर्बंध एतस्मिन् प्रसन्ना. संतु योगिनः।।१९।।

श्रीपादाः—श्रीहरिवायुनियोगादेव सप्रवृत्ता वयमस्मिन् कर्मणि। नाऽतिक्रांतुमर्हस्यस्मदाज्ञाम् । आकाशावकाशे निशितासि-क्षुरणमिव मुधा धावति ते धिषणा।

परमतीव विषण्णः बालवेंकण्णः कर्तव्यमौढ्येन पलायितुं श्रीमठात् कृतमतिः सनिर्बंधं गुरूननुज्ञाप्य स्वग्रामं प्रतस्थेऽवस्थातुमेकांते पाठ-प्रवचनेन स्वगृहे। तत्रैव सच्छास्त्रमवलोकयन् विद्यार्थिनः अध्यापयन् परमशुद्धवृत्त्या वदिकवृत्या कालं क्षपयामास बहुतिथम्। पैतृकभूवृत्ति-शून्यतया कुटुंबपोषणाक्षम अशनाच्छादनाय च पर्याप्तंधनमलभमानः यादृच्छिकजीवनमनुभवन्नितरां सांसारिकक्लेशाकूपारे आत्मानं पात-यामास। परं न जातु मात्रयापि शीर्पण्यजनादृतात् धर्मपथादत्यवर्तत। कुक्षिभरणाय न ययाचे धनं परं अनवगतपरात्मभावं धनमदाद्विगत-विवेकं । आत्मन्येव संतुष्टः जगद्रक्षक श्रीहरिर्मामवत्येवेति दृढं अनन्यश्चिंतयन्नेव हृदंतरे तदगाधलीलां स्मारं स्मारं विस्मृतबहिरर्थ-

भावः नितातं मनस्तोषमासेदिवान्। भुक्तद्वयं देहाच्छादनपर्याप्तं प्रावरणं पटखण्डं शयनायास्तरणं पर्वसु मज्जनाय तैलं भोजनाय पर्णपात्रमपि संपादयितुमक्षम सर्वमिदं विपत्संतानं श्रीहरिदर्शननिदानं शुद्धं तप इति दृढं मन्वानः न सर्वथा मनसि क्लैव्यकारिणा विकारेण चित्तवैक्लव्यजनयित्रा नैच्यग्रहेण समुद्विग्नः आस। एवं संतताविरततपसा पंचाग्नितप्तो मुनिरिव श्रीहरिमाराध्य तन्माहात्म्यविज्ञाने सकलेंद्रियसर्वस्वमार्पयत्। श्रीगुरुशेखराणामानंदतीर्थभगवत्पादाचार्याणामनन्यसेवा विधातुकामः श्रीनारायणपण्डिताचार्यविरचितस्य श्रीसुमध्वविजयस्य महाकाव्यस्य सारभूत प्रमेयनवमालिकाख्यं तत्कृतं अणुमध्वविजयं व्याचख्यौ श्रुतिस्मृतिपुराणेतिहाससंवादमुद्धाटयन्ननितरसाधारणपण्डित्येन। तेन श्रीमध्वमुनिः सुपरितुष्टः वेदांतसाम्राज्यमन्वगृह्णादित्युपरितनकथया स्फुटं परिज्ञायते।

श्रीपादाः कुत्रगतोऽस्मत्प्रियशीष्यः वेकण्ण इति बहुधा आलोचयतः तमन्विष्याऽऽनेतु दूतान् प्रेषयामासुः। प्रत्यहं वयसः परिणामेन क्षीयमानभौतबला वयं वेकण्णमेव नितांतमनुस्मरतः नक्तं नक्तं जागृम। न पश्यामो जगति गरुडध्वज विनाऽस्मच्चिताकांतारसंतारणं वस्तु। तदर्थं वेकण्णेन साकं अनिभृतं मनोरथमुत्तानीकृत्य श्रीहरिनियोगं विवृण्वंतोऽनुनयेनदिग्विजयरामदेवसाम्राज्याधिपत्यं स्वीकारयिष्यामः। इति।

## द्वितीयः प्रवेशः

### (श्रीसुधींद्रतीर्थाश्रमः)

मठीयदूताः द्रुतमभिद्रुत्य तत्र तत्रान्विष्यंतः विद्वच्छिखामणिं वेंकण्णाचार्यमानयन् श्रीपादपादमूलं मृदुमधुरवचनजातेनानुशीलयतः।

**वेंकण्णः**—[श्रीगुरुसन्निधौ साष्टांगं प्रणिपत्य निर्गमनापराधं क्षमापयित्वा विनयेन प्रार्थयते]

अस्मत्कुलगुरवः स्वामिपादाः। आज्ञापयतु शिष्यजनमिमं अत्राऽऽह्वानकृत्यं। गुरूणां पादमूलमेव शरणमस्माकं भूतिकामानां श्रीहरिवायुकारुण्यमभीप्सताम्।

**गुरवः**—वेकण्ण। ननु विदितमेव तेऽस्मन्मनोगह्वरगतमाकूत। पुनःपुनर्निर्बधेन प्रेरितोऽहं हरिवायुभ्यां यत् श्रीमूलरामचंद्रसपर्याभारः तव हस्ते निक्षेप्तव्य इति। अस्मदाज्ञां पुनरुच्चारयिष्यामः। परिपालय ता निवृंतमनसा विगतशंकाशूकः येन वय परितुष्यामः। श्रीहरिः संप्रीतः भूयोभूयस्ते श्रेयःपरंपरां वितरति तर्कगतिदूराम्। श्रीरामचंद्र. निरौपघसेवया संतृप्तः श्रीहनुमते सहभोगसुखमनुजग्राहेति विदितचरं। एवमेव वाय्वनुग्रहभाजन त्वं श्रेयस्ततिमवाप्नोष्यनन्यलभ्याम्। श्रीमध्वसिद्धातं जगति प्रथयितुमागतोऽयं योग न मुधाऽवधीरणामर्हति।

एवं सप्रेमसानदाश्रुधारया रहसि ईश्वरसंकल्पं संकथयंतो गुरुचरणा. वेकण्ण सुदृढमालिंग्य गद्गदया गिरा निजगदुः।

**हे तात शिष्य मम पुत्रक धीर वीर।**
**कर्णे कुरु प्रियवचोऽमृतमृद्धबुद्धे॥**
**देवाज्ञया कथितमर्थदमर्थगर्भम्।**
**नैव त्यजंति विबुधाः करलग्नलक्ष्मीम्॥ २०॥**

**स्वप्ने सरस्वती साक्षात् मंगलांगी सुवासिनी।**
**प्रतिजज्ञे संनिधिं ते जिह्वायां यतिरूपिणः॥ २१॥**

वेकण्णः तदिदमद्भुतवचनमाकर्ण्य भयभक्तिसंमुग्धचेताः सगद्गदस्वरेण हृद्युत्तंभितभक्त्यावेगभरेण त्रुटिताक्षरविकारेण स्वेनानुभूतस्वप्नवृत्तमनुस्मरन्नाह श्रीचरणाना पादुकापुटद्वयं दृढं स्वशिरःशिखरेण निबिडं संघट्टयन्।

**वेंकण्ण**—गुरुपादाः। न पारयामि वचसा तारयितुं आत्मानं मात्रयाऽपि स्वामिपादाना दयोदधिपारं हृदयोदयाधारं। क्षतुमर्हंति गुरव नरवासनया विस्मृतमरुदंशशासनं संसाराकूपारपारसंतारणतरी गुरुकारुण्यझरीमनुल्लङ्घ्यभरीमवहेलयंतमविदितविचित्रदेववलसितं मामागस्कृतम्। अतीतरात्रावपरभागे मामपि स्वप्ने भास्वती भारती विकचकमलपत्रवद्विक-

सितनयना दरहसद्वदना पिशंगकटाक्षक्षेपेण स्फीतश्वेतकपोलतटमुद्भासयंती समागत्य मां कलवचनैः पुत्रवात्सल्येनानुनयसनाथेन बहुधा गुरूक्तमेव सादरस्नेहमुपदिष्टवती। अविसंवादमिदं वचनं श्रेयोनिदानं संमाननामर्हति।

**स्फीताऽऽरक्तनखाग्रभिन्नसलिला विष्णोः पदान्निसृता।**
**गंगा धूर्जटिधूम्रकेशपतिता मुक्तिप्रदा ध्यायिनाम्॥**
**नैवार्हत्यवमाननां बुधजनै गेया पुनः संस्तवैः।**
**स्वामिन् भद्रमुख त्वदीयवचनं गंगेव संमान्यते॥ २२॥**

इति माणिक्यनीलवज्रमणिनिचितरक्तश्वेतिम्नाऽऽच्छुरितचित्रवर्णसंपृक्तकरंडात् चक्षुःकनीनिकापुटात् निःसरन्त्याऽश्रुधारया मुक्तामणिसदृक्षया अनर्घ्यसौवर्णमणिदामदक्षिणादानपुरःसरं श्रीसुधीन्द्रतीर्थपूज्यपादानां पादपूजां वेदांतसाम्राज्यपट्टबंधपूर्वभाविनीं वितन्वन्निव तूष्णीमुपातिष्ठदश्रूणि विमुञ्चन्।

**श्रीपादाः**—वत्स, साधु व्यवसितं। तुष्टोऽस्मि तवाऽऽप्यायनेन श्रवणमनोनंदनेन पीयूषमभिषिंचता मृतसंजीवनेन चैतन्यघनेन वचसा। स्थाने खलु ते जगज्जीवनदप्रसादभाजः सुबंधुरोऽयं व्यवसायः वेदांतसाम्राज्यसिंहासनमारोढुकामस्य गुरुवचनसंप्रतिपत्त्या। अतः इतः पञ्चमेऽहनि शुभमुहूर्ते तञ्जापुर्यां राजसन्निधौ पट्टबंधमहोत्सवः वैभवेन निर्वर्तयितुमभिलष्यतेऽस्माभिः। तत्रांतरे गृहकर्मानुपनीतबालस्य ब्रह्मोपदेशादिधार्मिकसंस्कारं च यथाविधि सपूर्यतामधिगततत्वज्ञानेन भवता। तदनु यथाऽवसरमस्मदंतिकमागतव्यम्।

(श्रीपादाः मठीयप्रधानकार्यकर्तॄनाहूयादिशंति।)

**श्रीपादाः**—अहो मठीयभारनिर्वोढारः कार्यकर्तारः, शृणुत समवधानेन। हंत, विद्वान् वेंकण्णाचार्यः संस्थानधुरां व्यूढां निर्वोढुमनुमन्यते। अद्य फलितमस्मन्मनोरथद्रुमेण। धर्मः समुद्धृतः भगवता वेदव्यासेन व्यासेनोपदिष्टः सर्वथा। भगवान्नारा-

यणः धर्मोऽविकलः सुतरां रक्षित इति सिंधुशयने शेषपर्यंके निःशंकं शेते निद्रामुद्रितलोचनः । भगवानाचार्योऽपि श्रीमदानंदतीर्थः स्वप्रवर्तितवेदांतसाम्राज्यं निष्प्रत्यूहमेधमानमभिवर्धतेऽभिनवकर्मंदींद्रसंदर्शितमार्गे इति श्रीवदरिकाश्रमे श्रीवेदव्याससन्निधौ तत्वचिंतने रममाणः सुखमास्ते । अस्मदुपास्यदेवता च नितरां प्रसन्ना भूयासि मंगलान्यातनुते साधुजनाय सभाजितगुरुवरेण्याय ।

किच, राजमर्यादया मण्डलेश्वराः राज्यभारधुरंधराः आयुक्तकाश्चाऽऽमंत्रयितव्याः । आस्थानविद्वांसः सर्वत्र तत्तच्छास्त्रपण्डिताः विशेषरायसमुखेन आत्मानमुत्सवे सन्निधाप्य विद्वत्सभायां शास्त्रार्थविचारेणास्मांस्तोषयंत्विति विज्ञापनीयाः । वेदांतसाम्राज्यसिहासनेऽभिषिक्ताः नूतनयतयः समग्रं कार्यभरं निर्वाहयत्वस्मदनुज्ञावशवदाः ।

### तञ्जापुर्यां महासंस्थानवितरणमहोत्सवः

श्रीसुधींद्रतीर्थाः प्रातरेव श्रीमूलरामचंद्रपूजां निरवर्तयन् । ततः सवेदघोषं, देवपेटिकां कौशेयवस्त्रप्रावृतां ग्रंथसंभारं संस्थानमुद्राकोशं समंत्राक्षतकरण्डं पूर्णकुंभं पुष्पहारकुसुमस्तवकैः सौवर्णरजतपात्रविन्यस्तैः साकं मणिमयनवरत्नखचितभव्यशिबिकायां समासीनाः पट्टाभिषेकमण्डपनिकेतमाजग्मुः ।

पण्डितप्रकाण्डाः वेंकण्णाचार्याः यथाविधि निर्वर्तिताभ्यगाः कृतप्रातराह्निकाः सवाद्यवैभवं महाभिषेकस्थानं वेदघोषमुद्घोषयद्भिः ब्राह्मणप्रवरैः पुरस्कृताः समागताः । श्रीपादपुत्राः श्रीपादानुज्ञया भावियतिभ्यः वेंकण्णाचार्येभ्य भक्त्या पादपूजामातेनिरे । ततः स्वयं स्वामिनः भव्यपीठे आचार्यानुपवेश्य तन्मस्तके सौवर्णपात्रं निधाय तत श्रीमूलरामचंद्रदिग्विजयराम-जयराममूर्तीः मूलमन्त्रैरावाहिताः संस्थाप्य सघंटारवं ब्राह्मणेषूच्चैर्वेदमन्त्रान् संभूय सुस्वरं पठत्सु, पंचामृतमहाभिषेकं व्यतन्वन् । तत्समये श्रीस्वामिनः प्रेम्णा प्रमोदाश्रुकणान्विकिरंतः श्रीहरेरगाधलीलामनुस्मरंतः नूतनयतये श्रीराघवेंद्र इति अन्वर्थं नाम

घोषयांचक्रिरे । जनाश्चातिलापातसंबाधं सम्मिलिताः भक्तिभरविनम्रकायाः विद्वांसश्च हर्षनिर्भरचित्ताः साक्षाद्विष्णुरेव गुर्वतर्गतः श्रीरामचंद्ररूपेण अयोध्यायां रत्नसिंहासने निषण्णः ऋषिभिर्देवतै, रत्नैः मुक्ताफलप्रवालवज्रमाणिक्यनीलहरिन्मणिगणसंभिन्नैः साम्राज्येऽभिषिक्त इति विभावयंतः सलाजाकुसुमाक्षतान्यवाकिरन्मूर्घ्नि नूतनपरमहंसस्य हंसमन्त्रजपेऽधिकृतस्य । मंगलगीतानि च सुवासिन्यः जगुः सुस्वरं आनंदसुधानिधिमज्जनसुखमनुभवन्त्यः ।

ततो महास्नानानंतरं श्रीराघवेंद्रतीर्थाः गुरुभिः साकं पूजापीठमलंचक्रुः । श्रीसुधींद्रतीर्थाः प्रत्यग्राभिषिक्तपरमहंसेभ्यः श्रीराघवेंद्रेभ्यः रहसि प्रणवमन्त्रान् संन्यासिपरमहंसैर्जप्यानुपदिदिशुः सतन्त्रांगन्यासकरन्यासविन्यासैः बीजाक्षररहस्यविवरणेन ।

ततः श्रीपादाः नूतनपरमहंसाय ब्रह्मसूत्रभाष्यं शातिमन्त्रोच्चारणपूर्वं महाविद्वत्सदसि प्रावोचन् अगाधप्रमेयरहस्योद्घाटनपूर्वं श्रीटीकाकृत्पादोपदिष्टमार्गेण । ततः श्रीराघवेंद्रतीर्थाः गुरुपादसन्निधौ श्रीमन्न्यायसुधापञ्चाधिकरणीं युक्तिजालपरिप्लुतेन मितंपचवचसा महता पाण्डित्येनान्ववोचन् ।

## तृतीयः प्रवेशः

### दिग्विजययात्रा

श्रीस्वामिनः दिग्विजययात्रायां प्रस्थिता. तत्र तत्र भाविविधिबोधितं मतं दुर्वादिनिग्रहेण दिक्षुविदिक्षु प्रचाययंतः श्रीराघवेंद्रतीर्थाः दक्षिणदिग्विजययात्रामातेनिरे । विष्णुक्षेत्राणि तीर्थजलानि सेवितव्यानि परिव्राट्पदसेवनादनु इति शास्त्रसंप्रदायवेदिन. स्वामिनः दक्षिणोत्तरदिग्विभागेषु संचरंतः अंचितपदचंक्रमणेन संचितपुण्याः महीमहीनविभवामातन्वानाः भक्तानां सेवानुगुणं त्वरितमुदारगुणाः क्षिप्रमक्षीणफलं क्षिपंतः परिमितदानपरिचितान् सुरतरुकामधेनुचिंतामणीनधरयंतः कुंभकोणे श्रीरंगक्षेत्रेऽसकृद्ग्रंथान् प्रमाणपद्धतिमारभ्य तात्पर्यचन्द्रिकांतं स्वशिष्येभ्यः प्रावोचन् सुरोत्तमगुरुप्रख्याः मुकुंदशयनाहीद्रवत्सहस्रमुखाः । श्रीकृष्णवेण्यास्तटे निषण्णास्तत्वप्रकाशिकायाः भाव-

विवरण भावदीप नाम व्याख्यामतन्वत। उडुपिक्षेत्रे श्रीव्यासतीर्थविरचिततात्पर्यचद्रिकायाः वृहती विवृति प्रकाशनाम्नी व्यरीरचन्। श्रीव्यासयोगिनस्तर्कताण्डवाख्यमहोन्नतकृतेर्विवरणं न्यायदीपनाम्ना निबबंधुर्यद्विना पण्डिताः प्रवक्तारः प्रतिपक्षप्रतिक्षेपेण स्वसिद्धांतं सुवंधुर प्रतिष्ठापयितु न शक्नुवति युक्तिततिवलविहीनाः। श्रीटीकाकृज्जयतीर्थगुरुभरुनिर्मितायाः वादावल्या. अत्यमौल्यां टिप्पणी च व्यातेनिरे श्रीन्यायामृतग्रंथभावविवृण्वतीमत्युदारभावगर्भाम्। एवमादिसकलसिद्धातरहस्यावेदकाः ग्रथा' गुरुसार्वभौमैः श्रीराघवेंद्रमुनीद्रं तीर्थक्षेत्रयात्रादिग्विजये श्रीमध्वांतर्गतवेदव्यासाय ज्ञानभास्करायोपायनमर्पयाबभूवुः।

तत्र केचन जिज्ञासव स्पर्धिनश्च पण्डिता. श्रीगुरूणां प्रवचनसमये एवमाचिक्षिपुः॥

**पण्डिताः**—यतो वाचो निवर्तते अप्राप्य मनसा सह। असंगमस्पर्शमरूपभव्यम्। केवलो निर्गुणश्च इत्यादि श्रुतिवचनैः ब्रह्मणः शब्दागोचरत्ववर्णनात्तस्य शास्त्रविपयत्वं 'शास्त्रयोनित्वादि'ति सूत्रोक्तं कथमुपपद्यते। विषयाभावेऽधिकारिणः प्रयोजनस्य संबंधस्य चाप्यभाव. आपद्यते। अतः अनुबंधचतुष्टयशून्यत्वादनारंभणीयमेव ब्रह्ममीमांसाशास्त्रम्।

**श्रीस्वामिनः**—साधुः आक्षेपः प्रस्तावितः। परमिदमज्ञानविजृम्भितम्। पश्यत, कथं निर्विषयं शास्त्रमारचयति भगवान् सूत्रकारो-वादरायणः नारायणापरावतारः सर्वज्ञः। तदन्यथाऽनुपपत्त्या शास्त्रस्य विषयादिमत्ता स्फुटं निष्पादनीया। यच्छ्रुत्यवष्टंभेन वाचोऽविपयत्वमुपपादितं तत्साकल्यमेव प्रतिपेधति। न पुन. शब्दविषयत्वमात्र। स प्रैक्षत, आत्मान पश्येत्, द्रष्टव्यो मन्तव्यो निदिध्यासितव्य इत्यादिश्रुतिषु ईश्वरस्य ज्ञानविषयत्वमनुज्ञातम्। स च न प्रत्यक्षेण नाऽप्यनुमानविधया वित्तिविषयो भवितुमर्हति। प्रत्यक्षानुमानावेद्यत्वे सति ज्ञानविषयत्वं शब्दविपयत्वमेवार्थान्निगमयति। तच्च यतो वाचो निवर्तते इत्यादि श्रुतिबलात् साकल्येन शब्दा-

विषयत्वं समर्थयति । शब्दविषयोऽयमीश्वरः न मिथ्या यथा मायावादिनो वदंति, किंतु परमार्थसत्यः एव तन्निष्ठस्य मोक्षोपदेशादिति सूत्रे स एव शब्दविषयो ब्रह्म (नारायणः) मोक्षदः इत्युक्तत्वात् । तस्य मिथ्यात्वे कथमिदमुपपद्येत । मिथ्योपासनायाः निंदितत्वान्न प्रतीके न हि सः इति सूत्रे । किं च मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः इति घण्टाघोषायितमनुव्याख्याने श्रीमदानंदतीर्थभगवत्पादाचार्यैः। न हि वंध्यासुतः प्रवक्तुमर्हति । नाऽपि शशविषाण वेधादि-क्रियां निष्पादयितुं प्रभवति । गगनारविंदं सुरभि इत्यादावि-वाश्रयस्यैवासिद्धत्वात् । मायावादी सगुणब्रह्म निर्गुणब्रह्मेति ब्रह्मणि द्वैविध्यं कल्पयित्वा सगुणब्रह्मणः मिथ्यात्वं निर्गुण-ब्रह्मणः पारमार्थिकसत्यत्वमाह । तच्चाप्रामाणिकं प्रमाण-विरुद्धं च । प्राकृतगुणशून्यं निर्गुणं ज्ञानानंदादिगुणपूर्णं सगुणमेवेति विवक्षाभेदेनैकस्यैव ब्रह्मणः निर्गुणसगुणव्यव-हारः उपपद्यते । 'स एव विष्णुराहहि, तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते इति निरंतरपूर्वसूत्रयो. विष्णुं ब्रह्मेति निर्दिश्योत्तरसूत्रे अथाऽतो ब्रह्मजिज्ञासेति प्रस्तुतत्वाद्विष्णुरेव ब्रह्म देशतः कालतः गुणत. परिच्छेदशून्यः विषलृव्याप्ताविति धातुव्याख्यानात् । विष्णुरेव बृहंतो ह्यस्मिन् गुणा इति ब्रह्मशब्दसमानार्थकः । विष्णोः शास्त्रविषयत्वात् विषय-सिद्धौ न्यायविवरणरीत्या अधिकारि-प्रयोजन-संबंधाश्च स्वयमेव सिद्ध्यंति । एवं अनुबंधचतुष्टयवत्वात् शास्त्रमिदं आरंभणीयमेव । ॐ जन्माद्यस्य यतः इति गुणपूर्णब्रह्मणः सत्वे सर्वज्ञत्वे च संभावकयुक्तिमभिधाय तस्यैव विष्णो र्ब्रह्मण. सकलसच्छास्त्रप्रतिपाद्यत्वं मुख्यवृत्त्येति तत्तु स-मन्वयादितिसूत्रे समर्थितं ब्रह्मरुद्रादीत्यादिविषयकत्वं निषे-धितं च । शब्दाविषयस्यैवब्रह्मण. श्रुतिसमन्वयसाधनं गगनचर्वणायितं निरर्थकमित्याक्षेपे ईक्षतेर्नाऽशब्दमिति सूत्रे प्रत्यक्षानुमानावेद्यत्वे सति ज्ञानविषयत्वं परिशेष-प्रमाणेन शब्दविषयत्वं साधयति । यतो वाचो निवर्तंते इत्यादिश्रुत्या च साकल्येन शब्दगोचरत्वं प्रतिषिध्यते ।

अनतशब्दघटितानंतवेदप्रतिपाद्यत्वसाधनेन विष्णोर्गुणपूर्णत्वं प्रथमाध्याये समर्थ्यते । अन्यत्रप्रसिद्ध-उभयत्रप्रसिद्ध-अन्यत्रैवप्रसिद्धानां नामात्मकलिंगात्मकानां आदिमाध्याये चतुर्षु पादेषु विमर्शेन शब्दप्रवृत्तिनिमित्तानां शब्दानां तत्तद्गुणाना तदधीनत्वन्यायेन नामानि सर्वाणि यमाविशति इति श्रुतिबलात् स्थानैक्य-मत्यैक्यादि शब्दन्याय-भेदेन च ब्रह्मण्यैव विष्णौ सुबंधुरोपपत्तिः सिद्धातिता । अत्र परवादिभिरुपक्षिप्ताः आक्षेपाः प्रतिक्षिप्ताः । द्वितीयाध्याये चतुर्षु पादेषु युक्ति-समय-श्रुति-श्रौत-युक्त्युपेतश्रुतीनां परस्परं परमप्रमेये च विरोधनिरासेन सिद्धे च गुणपूर्णे ब्रह्मणि कि मया कार्यं कथं स प्राप्तव्य इति किं कथंकारा काक्षोदेति । तदर्थं विरक्ति-दृढभक्ति-उपासना-ज्ञानान्यपेक्षितानि परमात्मप्रसादसाधनानि । प्रसन्नश्च परमात्माऽधिकारिजीवेभ्य कर्यक्षयोत्क्राति-मार्ग-गम्यभेदेन कर्मक्षयेनोत्क्रातेभ्यो देहात् (मानुषविषय.) अर्चिरादिमार्गेण गतेभ्यः मोक्ष-अनिष्टनिवृत्तिपूर्वकेष्टप्राप्ति ददाति । चतुर्विधमोक्ष-प्रकार. भोगश्च चतुर्थाध्याये निरुपितौ । अतः सर्वैरपि मुमुक्षुभिः ब्रह्मज्ञानाय वेदविचारः कर्तव्यः । जिज्ञासोत्थज्ञान-जात्तत्प्रसादादेव मुच्यते इति सावधारणसाधनकलापः संगृहीतोऽनुव्याख्याने श्रीमदाचार्यैः । अत. सर्वेऽपिसाधु जीवाः अस्मदाचार्योक्तसिद्धांतसारमनुल्लंघ्य मनसि धृत्वा तदनुष्ठानेन श्रेयोभाज· भूयासुः । इति नारायणस्मरणपूर्वकमनुगृह्णीमः ।

विद्वांसः—(सर्वे एकरवेणाभिनंदयत. बद्धाजलयः प्रणिपातपूर्वमभिदधुः) स्वामिन , यत्सत्य धन्या· वयमद्य कृतजीवितसाफल्याः स्वामिनामनुग्रहभाषणेन परमानंदपथप्रदर्शिना । अद्य न चक्षुः दुर्वादवासनाकलुषितं ज्ञानाजनेन प्रत्यग्रविसृष्टेन विगतमलीमस सत् साक्षात्कर्तुमल प्रभवति हृदयेऽर्भकौकसि नारायणं जगद्व्याप्तमचित्यशक्त्या निवसंतम् । श्रीपादानां दर्शनेन मितंपचपीयूषसदृक्षवचनरसायने नोत्कलितजीवधरचैतन्याः प्रतिनिष्क्रयातिक्रांतानृण्यभरेण शिष्यभावेन वर्तामहे वयमा-

कल्पम् । अनुजानंतु करुणालवाला अभ्यर्थनामिमां पादमूलमागतानां शरणार्थिनाम् ।

श्रीपादाः—[तद्वचनमाकर्ण्य परमानंदतुंदिला प्रसन्नविकस्वरनलिनदललोचनरोचिषा कनीनिकाकालिममसृणेन दिशावलयमलघु कवलयंत. ईषद्विवृतेन्दुवदनरदनविसर्पद्धवलिम्ना अतर्कितोदित शशांककांतिमातन्वंतः दरहसित विलसितेन सभ्यान्विलासयंतः शनैरूचुरुपांतोपविष्टांतेवासिविशेषान्] । अस्मदनुग्रहकाम्यया परतत्वविवित्सूनां भवतां तत्वज्ञानप्रवणता मध्वसिद्धांतजिघृक्षा विष्णुसाक्षात्कारकामुकता च नितांतं क्रमेणाभिवर्धमाना ज्ञानोदयाय श्रीहरिगुरूपसत्तये च प्रकल्पतामाकल्पमित्यनुगृह्णीमहे ,प्रसन्नचित्ताः नितांतम् ।

[ततः सर्वे सभ्या विद्वांसश्च स्वावसथमुपाव्रजन् ।]

संचारक्रमेण श्रीपादाः कावेरीकपिलानदीरोधःस्थितक्षेत्राणि तद्गतहरिमंदिराणि च संदृश्य सेवां कृत्वोत्तरां दिशं प्रतस्थिरे । तुंगा-तीरे कतिपयमासानुषित्वोत्तरदिग्विभागे मगलांबुशीकरैः हिमानीवाहिभिः हृदय्यस्पर्शेन समीरणेन सेवितानि कृष्णातटिनीतटस्थलानि दर्श दर्शं हरिणीहरिणभूयिष्ठे कुशकाशतुलसीमल्लिकामोदपरिमलिते विष्णुमंदिरवैष्णवावसथप्रकीर्णे देवर्षिपितृकार्यानुष्ठानेन धर्माचरणेन यज्ञयागसंभारसामग्रीसंपदा नितरां पावितपरिसरेण प्रथिते कर्णाटकजनपदे सिर्मलगेनामाग्रहारे चातुर्मास्यव्रतसकल्पेनोपातिष्ठन् महासंस्थानकरितुरगोष्ट्रादिसभारसंपत्त्या विद्यार्थिविद्वज्जनव्रातसनाथाः । तत्र तत्वप्रकाशिकाटिप्पणी भावदीपनाम्नी गीताभाष्यटीका प्रमेयदीपिकाटिप्पणी च विरचिते । तदनु किंचिद्दूरे दक्षिणस्यां दिशि यात्राक्रमेण किरीटगिरिग्रामाधिपतिना करणिकेन भिक्षार्थमभ्यर्थिताः तत्र प्रस्थिताः । तत्र सुविपुलसस्यसंपन्ने श्रीमद्भिः विप्रकुलैः सद्विद्यापारगैः समाकीर्णे श्रीपादाः ससंभ्रमं वाद्यवैभवविशेषनिनादमुखरितं संगीतवादित्रेण वेदघोषेण च ब्राह्मणैः सुमंगलीभिः सुवासिनीभिर्नारीभिः संगीतेन पुरस्क्रियमाणाः सुवर्णशिविकामधिरूढा-

स्तप्तकांचनसंकाशाः पाटलपटपरिधानाः श्रीमद्राघवेंद्रयतिमतल्लजाः परितः प्राप्तसम्मिलितजनतया मंदं मंद संसेव्यमाना. भिक्षास्थलमनुप्राप्ताः। स्वागतघोषेण सभाजिता' सभाजनमनोरंजकाः करणाधिपतिना कृतपादपूजा' महास्नानादिकं निर्वर्त्य सौवर्णनवरत्नमणिनिचितवज्रमण्डपे श्रीमूलरामचंद्रपूजां कर्तुमारे भिरे। करणिकः साक्षात्स्वयंभूरेव पयोधिमध्यमध्यासीनमहिभोगभोगशय्याशायिनं लक्ष्मीशयसंवाह्यमानपदकमलं नारायणमनुत्तमभक्तिभावेनोपतिष्ठते इति मनसि विभाव्य महांतमानंदमन्वभूत्। मेने च कृतार्थमात्मानं जीवितं च सफलम्। स च धर्मधुरंधरः किरीटगिरिकरणिकः श्रीपादानां भिक्षाप्रदानव्यवस्थायां व्यापृतः समागतामंत्रितजनस्तोमस्य भक्ष्यभोज्यादिमृष्टान्नपरिवेषणाय जनानाहर्तुमितस्तत' संचरन् विस्मृतात्मकौटुम्बिककृत्यः आस। श्रीस्वामिभिः पूजावसाने फलमन्त्राक्षतातीर्थादिस्वीकारायाहूतः भार्यया ऽपत्यैश्च समेत' पूजामण्डपनिकटे निषण्णानां स्वामिनां पादमूलमागतः। तत्र कनिष्ठमपत्य वत्सरत्रयवयस्कं मृदुमधुरलीलालपितविलासमलभमानः अन्विष्यान्विष्य नितरां श्रांतो भृत्यवर्गमादिदेशानेतुमविदितगति शिशुम्। परं परिवेष्यमाणभोज्यवस्तुसंभारभरे एकस्मिन् पृथुपात्रे चूतरसपूर्णे स्यादयं शिशुः निपतित इति शंकमानः परिवेषणपटुरेको विप्रः स्वहस्तं सांद्रचूतरसपृथुपात्रे निधायालोड्य पर्यवर्तयत्। पाषाणभारवदेकं वस्तु हस्तपुटे लग्न विभाव्योद्धृत्य विरुवन् 'हा हतोऽस्मि। हस्तगतं वस्तु शिशुरेव हसद्वदनो मृतश्चूतरसोदरे निपतित. इति सोरस्ताडं नेत्राभ्यां शोकमंथराभ्यां अश्रुधारां वाहयन् करणिकस्य पुरतः पातयामासाऽऽत्मानं। त्रुटिताक्षरेण दुःखावेगेन नियन्त्रितगलनालः मंदमवोचच्च। स्वामिन्, बालकः चूतरसे निमग्नः गतप्राण.। हा कष्टमिति। गृहांगणं रोदनरवमुखरितं जनसंघातसंबाधमासीत्। शोकोद्गारः गृहकुहरं निर्भिद्य श्रीस्वामिनां श्रवणपुटतटमाटीकत। झटिति सकलगृहजनस्तोमः पिण्डीभूय स्वामिनां पादमूलमागत. प्रार्थयच्च सकरुणस्करुणस्वरमुज्जीवयितुमनवद्यमनोज्ञमुग्धशिशुम्। स्वामिनस्तु अविकृतप्रसन्नमुखमुद्राः करणिकं मृतशिशुना सहाऽऽगंतुमादिदिशुः। स च प्रत्यग्रगतप्राण व्यूढकायं मांसलं नीलकुतलपरीतकांतनिटिलतट, स्मितवदनं शिशु पाणितले विन्यस्य दुःखावेगमवकुण्ठयन् नयनपुटतटादश्रूणि शनैर्विमुञ्चन्नागतः। स्वा-

मिनस्तु समाहितचित्ताः मनसि धन्वंतरिनारायणमपमृत्युहरं ध्यायंतः हसन्मुखेन मंत्रानुच्चार्य शंखोदकेन प्रोक्षयामासुः। सद्य एव स बालकः सुप्तोत्थित इव मृत्युमुखान्निर्मुक्त इव हासलास्येन रमयन्निव परीतं जनं पितृमुखमवलोकयन्नुत्तस्थौ विगतवेदनशंखोदकमहिम्ना। चकित-चकिताः जनाः श्रीगुरुभरूणां राघवेंद्रतीर्थपूज्यपादानामनितरसाधारणं मृतसंजीवनीशक्तिविशेषं श्रीमन्मूलरामचंद्रसपर्यातपसंभवं स्मारं स्मारं यतिसार्वभौमं भक्तिभरवैवश्येन जगुः प्रणेमुश्च दण्डपातेन।

यस्मिन् शासति धर्मभर्मलहरीं श्रीराघवेंद्रे गुरौ।
श्रीराम सुरपूगपूजितपदः बाभात्यलं तेजसा॥
भक्तान् रक्षति मृत्युनक्रमुखतोऽपास्यन् ध्रुवं कण्टकम्।
बालं चूतरसोदरे निपतितं मौनींद्रमन्त्रैर्यथा॥२३॥

प्रह्लादोऽभूद्रक्षितस्तातरोषात् शांतोदांतः श्रीनृसिंहप्रसत्त्या।
तद्वत्तेजोधामभूम्नो गुणानां सीमाऽसीमप्रेमभू राघवेंद्रः॥२४॥

श्रीराघवेंद्रतीर्थाः—वत्स, उत्तिष्ठ, क्रीडया तर्पय पितरौ। व्याहर कल वचनम्। वयमपि श्रुत्वा संतुष्याम.।

शिशुःस्वामिपादपदतटे मस्तकं न्यस्य हसन् मुग्धासंस्कृतकिशोर-साधारणं स्खलितवर्णपटलं हरिगुरुभक्तिपिशुनं विमुमोच लघुलपनात्स्वभावमधुरं। तदाकर्ण्य सम्मिलितलोकसम्मर्दः नितरां हृष्यत्पुलकितगात्रः स्वामिपादानस्तौषीद्भक्ति वशंवदः।

गुरवः करुणार्णवा भवंतः वरभक्तस्वरमार्तमनुप्रयाताः।
शिशुमुदजीवयन्मृतं नितांतम् ननु वाग्वंशविशेषकृत्यमेतत्॥२५॥

ततः श्रीपादाः जनान् फलमंत्राक्षतादिभिरनुगृह्य पुरतः संचार-मनुप्रचक्रमिरे। वहवोऽपि शिष्याः स्वीयाभीष्टानि गुरुसेवयाऽकुटिलया पूरयांचक्रिरे।

एकदा सद्य एव मोक्षपदमाकांक्षमाणं मठीयकर्मकारकं प्रज्व-लज्ज्वालामालाभिरुद्यच्छोचिष्केशे प्रवेष्टुमाज्ञापयन्। सुरांगनाभिर्गीय-मानव्यवसायं विष्णुदूतैर्दिव्यवाहने नीयमानं तं गुर्वाज्ञापालने-नाऽऽत्मानं कृतकृत्यतां नीतं लोकतोऽज्ञमपि ज्ञातपरापरतत्वं विरक्त-

भक्तं पश्यतो जनान् दर्शयामास धीरः श्रीराघवेंद्रयोगी विदिततत्त्वरूपप्रकर्षः ।

अन्यदा मरुभूमौ निर्जलरविप्रखरतीव्रकरकलुषितायां निर्गतिकतयाऽनवसरप्राप्तां प्रसववेदनां तितिक्षतीं कठोरगर्भनिर्भरां नारीं तदुपरि मन्त्रबलेन शाटीपटीपटातपत्रं सद्यो निर्माय छायामुपकल्पयन्नरीरक्षत्तां तपस्विनीम् ।

एवं बहून्याश्चर्यगर्भाणि कर्माण्याचरंतः श्रीराघवेंद्रमौनींद्राः शिष्यजनयाञ्चया श्रीमध्वसिद्धांतसारमवोचन्मितेनार्थवता शब्दजातेन मनोज्ञयुक्तिपरिप्लुतेन ।

॥ श्री गुरुसार्वभौमसप्तरात्रोत्सवे एकादश उल्लासः ॥

॥ श्री ॥

॥ श्रीमध्वमतदुग्धाब्धिचंद्राय नमः ॥

# द्वादश उल्लासः

## श्रीगुरुसार्वभौमसप्तरात्रोत्सवे षष्ठदिनोत्सवः

प्रातरेव उषसि श्रीगुरुराजानां सुप्रभातसेवा समर्पिता श्रीपादपुत्राणां नियोगेन । यथाहि—

स्वामिन् विश्वगुणैकचिंतनरत प्रत्येहि भक्तान्मुदा ।
श्रावं श्रावमनारतं श्रुतिहरं याञ्चारवं सादरम् ॥
मा मां विस्मर दैत्यवंशजसदो विद्यासतीर्थं गुरो ।
योऽहं त्वद्वदनारविंदगलितं तत्वं हरेराहरम् ॥ १ ॥

त्यक्त्वा बालविहारकेलिलहरीलास्यं वयस्या वयम् ।
भक्त्या त्वामभितः स्थिताः हरिकथां श्रोतुं सुगीतां यथा ।
आयुः स्तोकमनल्पगेयचरितं विष्णोर्महद्भिस्मृतं ।
मा कुर्वंतु गृणंतु संततगिरा कौमार एव स्थिराः ॥ २ ॥

न मे हृद्या विद्या न च गुरुषु शुश्रूषुपटुता ।
न रिक्थं संभाराः क्व नु विनयसौशील्यगुणता ।
न सक्तिः शास्त्रेषु स्वपरहितसंसाधनरतिः ।
तथाऽपि त्वत्पादांबुजमृदुरजःसेकचतुरः ॥ ३ ॥

गांगं मंगलवारि सूरिवर ते निर्णेजनायाहृतम् ।
शौचं प्रातरनाकुलं कुरु गुरो संकीर्तयन् श्रीहरिम् ॥
गोवृंदं तुलसीवनं भज मुदा तन्मृत्तिकाभूषितः ।
श्रीरामं कविगेयहृद्यचरितं नीराजनैः पूजय ॥ ४ ॥

**शिष्यानुद्धर शास्त्रपाठनिरतान् तत्संशयानुद्धरन् ।**
**जोषं शोषय पापसंघमवलोक्याऽर्तान् जनानागतान् ।।**
**स्नात्वा तुंगतरंगिणीजलनिधौ सद्दण्डकाष्ठोदकम् ।**
**सिञ्चन् मूर्ध्नि समंततोऽवनतान् संभावयन् वीक्षणैः ।। ५ ।।**

मंगलकल्यसंगीतपद्यै. गानताननतसनाथै मृदुस्निग्धकलस्वनमधुरैः उद्बोधिता भक्ताश्च यात्रिका. सुप्तोत्थिता ह्यस्तनीनमहारथोत्सववैभवं भव्य भवानीभवाभ्या वाणीहिरण्यगर्भाभ्यां साक्षाल्लक्ष्मीनारायणाभ्यां सपरिवारं समवस्थानेन समलंकृतं सद्य प्रत्यक्षविपयमिव बहुधा वर्णयत स्मारं स्मारं समधिगतजीवितसाफल्यमात्मान बहुमन्यमानाः प्रात स्मरणीयचरितानां श्रीगुरुसार्वभौमाणां दर्शनेनाधिकमात्मान पावयितुकामा तटिनीतटमुपाजग्मुरवगाहनाय। यथाविधि तत्र तत्र तटनिकटादवप्लुत्य कटिदघ्ने पयसि अवगाह्योत्थिता पृथुशैलखण्डे निषण्णा एव प्रातराह्निकं निर्वर्तयामासु. । स्त्रियो बालाश्च रोधस्येव जानुपरिमिते जले उपविष्टाः पात्रजलेनात्मानमभिपेचयामासु । तत सर्वे जना. यथाकालं श्रीगुरुराजसंदर्शनेन पूतांतरंगा स्वं स्वं स्थानं प्रति निर्वतितुकामाः श्रीगुरुसार्वभौमाय खर्जूरखण्डशर्कराशुष्कनारिकेलशकलानि ग्रामांतरं नेतुमर्हाणि कतिपयदिनस्थायीनि आनीयार्चकमुखेन समर्प्य नीराजनं सदक्षिणाकं कारयित्वा पदे पदे गुरुसार्वभौमवृंदावनमवलोकयत मुहुर्मुहुर्भुवि दण्डवत्प्रणिपत्य गमनानुज्ञा प्रार्थयामासु । न जातु तेपा हस्तपादं प्रसरति गुरुसन्निधि हित्वा बहिर्गमनाय दूरे तत्क्षेत्रं हित्वा दूरतो गतु स्वग्राम प्रति । केचित् तीव्रतरगृहकर्मभर्म लोपयितुमक्षमा. अर्चकेभ्य स्वीकृतप्रयाणप्रसादाक्षताः दुर्मनागमाना. बहिरागत्य दोलायितचित्ता कथंचिदनसि गतैनस सुमनसा मननेन, पदमार्पयन् प्रत्यागमनप्रतिज्ञां मनसि कुर्वत । अन्ये पुनः गृहान्निवर्तितचित्ता गुरुसार्वभौमसेवामधिकाधिकमनुष्ठातु बद्धादरा कौटुम्बिककार्यभरमनिवार्यमपि अगणयंतः श्वः सर्वसमर्पणसेवां दृष्ट्वा विद्वद्भि पण्डितप्रवरैः दीयमानोपन्यासाश्च श्रुत्वाऽपि साधयाम. स्वग्रामं इति मनसि निर्धार्य तत्रैव स्थिताः । दिनद्वयं सज्जनानाभाषमाणा श्रीहरिदासवर्यैः प्रचलितानि वाङ्मुखानि

श्रुत्वा श्रीपादानां चाऽनुग्रहभाषणमुपसंहारोपदेशं च श्रवणपुटेन पीत्वा प्रचलिष्यामः इति निश्चिक्युः ।

अद्य श्रीमुज्ञानेंद्रतीर्थश्रीपादानां आराधनादिनम् । श्रीगुरुराज-प्रेरणया तदाराधनमहोत्सवोऽपि सवैभव निर्वर्त्यते श्रीस्वामिनां मठे ।

श्रीपादाः सुयमीद्रयोगिनः उपस्येव कृतस्नानाह्निकाः गुरुराजाय पंचामृताभिषेकोत्सवं यथापूर्वं समाप्य विद्वत्परिषदमनुप्राप्ताः यष्टि-हारिदूतप्रदर्शितपथेन । कार्यक्रमायुक्तकादेशेन तद्दिने घण्टाद्वयं यावत् श्रीहरिदासा· भक्तिमार्गमुद्दिश्य चर्चा संतन्वति । भाषणं च कुर्वति । तद्घोषणानुरोधेन प्रातः साय च हरिदाससाहित्यविशारदैः पुरंदरदासानां कृतिरत्नानि तदुपदिष्टप्रमेयाणि चाधिकृत्य भाषंते । भक्ताश्च यात्रिका-श्च यथावसरमागत्य श्रुत्वा भक्तिरसस्रोतसि पोप्लूयमाना· आनंद-मनुभवतु निरुपप्लवम् इति श्रावितं सदसि ।

## श्रीहरिदासपरिषत्

श्रीपादानामाध्यक्ष्ये श्रीहरिदाससाहित्यवाङ्मुखमजनि विद्वत्परि-षदि । श्रीहरिदासालंकाराः एवमाहु ।

भारतदेशे भागवतधर्मः प्रत्नैराचार्यैरुपदिष्टः वहुधा प्रावर्तत ऋषिभिरवधूतशिखामणिभिरनुष्ठीयमान· । अमाययाऽनुवृत्त्या स्वविहित वृत्त्या भक्त्या भगवदाराधनमेव परमो धर्म· । स एव भागवतधर्म इति गीयते । 'धर्म· प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां' इति श्रीमद्-भागवते प्रोज्झितकैतवत्वं परमत्वं भागवतधर्मस्य लक्षणमभिहितम् । प्रह्लाद-नारद-ध्रुव-प्रियव्रत-जनक-अंवरीषादय· भगवद्भक्ता· तमेव धर्ममनुष्ठाय सिद्धिंगता । जनतायै उपदिश्य लोकसंग्रहमकार्पुश्च । यादवनंदन· गोपालवालः पाण्डुपुत्राय संक्रंदननंदनाय पृथापुत्रायार्जुनाय कुरुक्षेत्रे समीकसमये धर्म्याद्युद्धान्निवृत्तप्रायाय **'क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते । क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप'** इति धैर्योत्तम्भन वच सारमुपदिदेश नैजं क्षात्रं धर्मं स्मारयन् । ईश्वर श्रीहरिरेव सर्वनियंता । कर्ता कारयिता च । यथा च तक्षोभयथा' इत्युक्तरीत्या जीवः स्वतंत्रकर्तुरीश्वरस्याधीनः तत्प्रतिविंब;

आभासः एव तेन विना न तृणमपि चलति । जीवः स्वरूपप्रवृत्तिप्रमितिषु ईश्वराधीनः । तथाऽपि स एव कर्मफलभोक्ता न ईश्वरः । उपाधेः प्रतिबिबपक्षपातित्वं नील-रक्त-पीतादर्शेषु प्रतिबिंबितमुखे नद्यां चलत्तरंगिण्यां प्रतिबिंबितसूर्यके विशदमनुभवारूढं भवति । जीवस्वरूपस्यैवोपाधित्वात् एकोऽपि ईश्वरः, मुख-सूर्यवत्, निर्विकारोऽपि जीवेषु प्रतिबिंबेषु स्वरूपतः विभिन्नेषु कामकर्मादिनिमित्तमीश्वराचित्यशक्त्या च कर्मफलभोक्तृत्वादिविकारानादधाति । अहंममताभिमानाज्जीवः अगुणे गुणाध्यासात् अशोभने शोभनभ्रांत्याऽनित्ये विषयसुखे शाश्वतत्व दुःखासंभिन्नत्वमध्यस्य मृगमरीचिकां जलभ्रांत्याऽनुधावन्निवपुरुषो संसारानलेन दंदह्यमानः सुखलेशमपि न लभते । अतः महत्समागमेन तदुपदेशेन भ्रांतिमपसार्य परमात्मनः निरुपाधिकस्वातंत्र्यं सार्वज्ञ्य चानुसंधाय 'तत्प्रमादसंप्राप्तये तदाज्ञानुवर्तीभूय तत्प्रीत्या समधिगततत्वापरोक्षः प्रवृद्धहरिप्रसन्देन नैजसुखानुभवरूपमोक्षमवाप्नुयात् । अपरोक्षज्ञान्यपि निष्कामं कर्म कुर्वन् मोक्षे आनंदातिशयमश्नुते जीवः । अतः सर्वोऽपि सात्त्विको जीवः मुमुक्षु. नैजं कर्म स्वभावनियतं फलाभिसधि विना परमात्मनि परमया भक्त्या तत्प्रीणनाय समनुतिष्ठेत् । अत एव श्रीकृष्णेनोक्तं 'नियतं कुरुकर्म त्वं कर्म ज्यायोह्यकर्मण ।—कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूर्मति संगोऽस्त्वकर्मणि ॥' इति । आचार्यैरपि सुष्ठूक्तं द्वादशस्तोत्रे 'कुरु भुक्ष्व च कर्म निजं नियतं हरिपादविनम्रधिया सततं । हरिरेवपरो हरिरेव गुरु हरिरेव जगत्पितृमातृगतिः । इति । ईशावास्योपनिषदि ईशावास्यमिदं सर्व यत्किंचिज्जगत्यां जगत् । तेनत्यक्तेन भुञ्जीथाः मा गृध. कस्यस्विद्धनम् । इति सुष्ठु स्फुटमुपपादितमीशस्वामिकमिद जगत् तद्दत्तं यदृच्छालब्धमुपभुज्य तूष्णी स्थातव्यं तृप्तस्तन्महिमानुसंधानेनेति । श्रीजयतीर्थैः विष्णुतत्वनिर्णयटीकायां उक्तं यथा—

'विश्वस्योदयमातनोति तदनुत्राणं विधत्ते पुनः ।
सौख्याप्तौमरहा नसाधनमलं वक्ति श्रुतीर्व्यंजयन् ॥
स्वापं प्रापयति श्रमापहृतये कल्पावसाने च यः ।
तं देवं पितरं पतिं गुरुतमं वंदे रमावल्लभम् ॥

देव पितरं पति गुरुतममिति श्रीहरिः स्तुतः ।

किमिदं जीवस्य नियतं कर्म । भगवदाराधनोद्देशेन कृतं विहितं कर्मेत्युक्तमाचार्यैः । विहितं नाम विधिविषयं विहितत्वं च शास्त्रेणैव । रागतः प्राप्तस्य कृते न चोदना प्रसरति । शास्त्रं हि

'ऋग्यजु. सामाथर्वाणि भारतं पंचरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ।।
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।

चतुर्वेदाः इतिहासपंचरात्रपुराणादिकं प्रकीर्तितम् । इति तदर्थप्रतिपत्त्यर्थं ब्रह्मसूत्राणि प्रवृत्तानि । अत एव श्रीकृष्णेनोक्तं 'तस्माच्छास्त्रं प्रमाण ते कार्याकार्यव्यवस्थितौ' इति भगवद्गीतासु ।

वेदाध्ययनानधिकारिणां स्त्रीशूद्रब्रह्मबंधूनां कृते इतिहास-पुराणादिग्रन्थाः प्रवृत्ता । वेदाधिकारिणोऽपि ब्रह्मादिदेवता. मानुषादयश्च इतिहासपुराणादिविमर्शेनैव वेदार्थं सम्यगधिगच्छति । ब्रह्माण्डपुराणवचनमुद्धृत्याचार्यैरुक्तम् ।

यदि विद्याच्चतुर्वेदान् सांगोपनिषदान् द्विजः ।
न चेत्पुराणं संविद्यात् नैव स स्याद्विचक्षणः ।।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति ।।

ईशाऽऽवास्यमिदं सर्वं यत्किंचिज्जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्य स्विद्धनम् ।
एवं त्वयि नान्यतोस्ति न कर्म लिप्यते नरे ।।

—ईशावास्योपनिषद्

इति ईशावास्योपनिषदि फलकामनां विना नियतं कर्म अधिकारिजीवैः कार्यं येन संसारापादकः पापपुण्यकर्मलेपो न घटते इति स्पष्टमुपदिष्टम् ।

अयमुदात्तोपदेशः कामाद्यहंममताजाड्यात् अनुपदं विस्मर्यते ज्ञानिभिरपि शास्त्रवेत्तृभिः । अत एव श्रीकृष्णपरमात्मना समाश्वसितम् ।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहं ।

अत्र धर्मो नाम शास्त्रविहित. वर्णाश्रमाचार. भक्त्या भगवदर्पण-बुद्धया फलकामना विनाऽनुष्ठीयमानः। पुरा नारदादिज्ञानयोगिनः प्रियव्रतजनकादिकर्मयोगिन जगत्यवतीर्य स्वजनुषा महांतमुपकार-मतन्वन् जनतायै परिशुद्ध भागवतधर्ममुपदिशतः। भक्तिरमला मोक्ष-साधनमिति 'अत्रुवदग्रहणात्तु न तथात्व' इति सूत्रे सिद्धांतितम्। ईशसात्विकजीवयोः सबंध अबुवत् स्वाभाविक आर्द्रताविशिष्टः सबंध.। स एव स्नेह इत्युच्यते। परमोत्कृष्टे अपकृष्टस्य स्नेहः भक्ति पदेन व्यपदिश्यते। स एव पात्रभेदात् मैत्री, वात्सल्यं, प्रेमा, प्रीति-रित्यादि नानारूपाणि धत्ते। सर्वोत्तमे परमात्मनि या निरवधिका निर्दोषा प्रीतिः सैव भक्तिः। श्रीमदाचार्यैः भक्तिस्वरूपमेवं निगदितं—

माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिक ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्नचाऽन्यथा ॥

भक्तेर्दोषा अपि निर्दिष्टा.।

जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा ।
साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च ॥
प्रादुर्भावविपर्यासस्तद्भक्तद्वेष एव च ।
तत्प्रमाणस्य निंदा च दोषा एतेऽखिला मता. ।
एतैर्विहीना या भक्तिः सा भक्तिरिति निश्चिता ॥

एतेन निर्दोषा निरतिशया भक्तिः परमात्मनि कृता मोक्षाय कल्पते इत्यवसीयते। यदा यदा हि भक्तिस्वरूपे रजस्तमोगुणाभियो-गाद्दोषसचार घटते तदैव श्रीहरि. स्वयं अवतरति यथार्थज्ञानभक्ति-लक्षणरक्षणाय। उपदिशति भक्तेभ्य यथाऽर्जुनोद्धवादिभ्यः। अथवा स्वविभूतिविशेषैः एतत्कर्म कारयति। यथा नारदशुकादिमुनिभिः श्रीमध्व-जयतीर्थ-व्यासतीर्थ-राघवेंद्रतीर्थादिदेवताविशेषै.। अत एव नारद-भृग्वादिमुनय पुरंदरदास-विजयदासादिरूपेण धर्मग्लानिदशाया भारतभूमौ कर्णाटकजनपदे प्रादुर्भूय स्वजनुषा भक्तिमार्गमुपदिश्य जनतायै महांतमनुग्रहं व्यतन्वन्। प्रह्लादाय नारदोपदिष्टहरिभक्ति-

रेव निरुपाधिका सर्वांगेपु शुद्धा श्रीपुरदरदासादिभक्तपुगवैः प्राकृत (कन्नड) भापाया पद-पद्य-सुळादि-उगाभोग-श्लोकादिप्रवंधविशेपेपु निवद्धा प्रमृता प्रवर्धमाना समेधते लोकसग्रहाय जनतायाम्। तंरुप-क्रांत पथा दासकूटमिति प्रथामुपगत । श्रीपुरंदरदासादीना महाविभू-तीनामुपदेशसार. सगृह्यास्मिन् सदसि उपायनीक्रियते विषयविशुद्धयै धीशुद्धयै च ।

अत्र विदाकुर्वंतु सूरय. यद्दासकूटमिति कर्णाटकजनपदे प्रसिद्धः भक्तिपथ सोऽनादिकालत एव जगति प्रवृत्त. कालविपाकेन रजस्तमो-गुणप्रघातेनांतरातरा विलीन. परमेश्वरप्रसादेन तत्र पुनरुज्जीवित.। प्राणिमात्रं स्वरूपाधिकारसाधनतारतम्यानुगुणं प्रेष्ठं परमात्मानमा-श्रयते चिंतयति च तन्महिमानं विपदः परित्राणाय सुखलवसप्राप्तये च जन्मपरंपरास्वनुभूयमानासु। मनुष्यजन्मन्येव सारासारविवेकपटुता-ऽऽत्मानं लभते। तत्रापि ब्राह्मणसंस्कारपरिष्कृतो जीव. दैववशात्कर्म-परिपाकेन च विष्णुभक्तः सन् वैष्णवकुले जनिमाप्नोति यदा तदैव गुरूपदेशेन मोक्षसाधनमनुतिष्ठन् ज्ञानी भूत्वा कर्मक्षयादनिष्टं परि-हृत्येशप्रसादान्नैजमानंदानुभवमाप्नोति । श्रीपुरदरदासाद्यपरोक्ष-ज्ञानिभिः साध्यानदस्वरूप साधनप्रकारश्च विविधाधिकारिभेदेन प्रदर्शित. वैदिकानुभवैर्युक्तिभिः प्रामाणिकव्यवहारैश्च ।

द्राविडांध्रगूर्जरवंगकलिंगादि देशविशेपेषु तत्तत्कालपर्यायेण हरिभक्ता. उदयमाययुरुपदिदिशुश्च जनतायै धर्माधर्मविवेकेनेशप्राप्ति-, साधनविशेषान्। उक्त च पद्मपुराणे—

उत्पन्ना द्राविडे साऽहं वृद्धिं कर्णाटके गता।
क्वचित् क्वचिन्महाराष्ट्रे गूर्जरे जीर्णतां गता ॥

उत्तरापथे वगदेशे चैतन्यप्रभृतिकृष्णभक्तैर्भक्तिमार्गः प्रवर्तित। तदुपदेश. श्रीव्यासतीर्थप्रवर्तितमाध्वद्वैतसिद्धांतमुपजीवति वहुशेपु। राजस्थाने मीराबायिनाम्न्याः भक्तिवर्यायाः प्रभाव दरीदृश्यते। मध्य-प्रदेशे हिंदुस्थाने कबीरदासः महती सेवां व्यतनोत् भक्तिगीतैः। महा-राष्ट्रे ज्ञानदेव-रामदास-नामदेव-तुकाराम प्रभृतयः संतसाहित्यनिर्माणेन प्रभूतं कार्यमाचिन्वन् । द्राविडदेशे नम्माळ्वार तिरुमंगैआळ्वार्

कुलशेखराळ्वार आंडार इत्यादि वैष्णवदासा तमिल्भाषायां कृतिरत्नानि निर्माय विष्णुभक्तिं प्रचारयामासु । आंध्रदेशे त्यागराजप्रभृतयः प्रसिद्धहरिदासा अद्यापि नित्य गौरवेणाद्रियंते संगीतक्कूटेषु । तथाऽपि भक्ति तत्र तत्र न सुबंधुर परिपोषिता । कर्णाटकजनपदे एव निर्दोषाविर्भावेण परिपाकमधिगतेत्युपरिनिर्दिष्टपद्मपुराणवचनेन ज्ञायते । अतः पुरंदरदासादिभिरुपदिष्टः भक्तिमार्गः दोषविदूरः माध्वसिद्धांतमुपजीव्य वैदिकलौकिकप्रमाणै पोषित सर्वैर्ज्ञानिभिरुपादेय इति निश्चिनुमः । वैष्णवभक्तिप्रवाह इव शैवा अपि परमशिवं भक्त्याऽऽराधयामासु गीतसेवया । द्राविडशैवा आगमिकशैवाः काश्मीरशैवा. लाकुलपाशुपता शिवशरणाश्च तत्तद्देशविशेषेषु शिवतत्वं बोधयामासु. । परं तेषु बहवः वामाचारा. संतः मंत्रतंत्राद्याभिचारकर्मणि व्यापृता निषिद्धधूमसेवनमद्यपानादिष्वाद्दता: न शिष्टजनैः सम्मानिताः । तथा च विष्णुभक्तिरेवबलीयसी सर्वदेशविभागेषु सर्वथा बहुमानिता तत्वज्ञानसमकक्षतया स्थितिं लेभे भारतदेशे । तत्रापि श्रीहरिदासक्कूटप्रवर्तिता विष्णुभक्तिरल्पीयसा कालेनैव मोक्षमार्गसंप्राप्तौ महानव्यभिचार्युपायः संवृत्तः ।

कर्णाटकजनपदे हरिदासक्कूटप्रवर्तकाचार्याणा मध्ये श्रीनरहरितीर्थानां प्राकृतपद्यानि कानिचिदुपलब्धानि । तत्समकालिकाः अचलानददासा हरिभक्तसंसदि प्रकाम प्रसिद्धिमातन्वन् । श्रीहरिरेव परदेवता लक्ष्मीब्रह्मादय. तदधीनाः । क्षराक्षरातीत पुरुषोत्तम. श्रीहरिरेव जगतः सृष्ट्याद्यष्टककर्ता "अज्ञानां ज्ञानदो विष्णुः ज्ञानिनां मोक्षदश्च सः । आनंददश्च मुक्तानां स एवैको जनार्दन" इत्युक्तरीत्या जगन्नियंता मुक्तिदाता च । आहुश्च पुरंदरदासाः ।

ओब्ब आचारियु देवरे इल्लवेंद ।
ओब्ब आचारियनु दैवकेटे गुणवेंदा ।
ओब्ब आचारियनु निर्गुण निराकार ।
निरवयवनेद कडेयल्लि ताने देववेद ।
ओब्बनु वेदार्थवनरितु अरियनु ।
ओब्ब मध्वाचार्यरे पुरंदरविठल
नोब्बने दैववेंदु तोरिकोट्टरागि ।

वैदिकमतदल्लि नडदेवेदु तावु।
वैष्णववंबिट्टुकोट्टरु केलवरु।
वैदिकवैष्णव ओंदेंदु मध्वमुनि।
प्रतिपादिसद पुरंदरविठ्ठलमेच्चे।

एको वादीऽऽश्वरमेव नानुमनुते। अपरस्तस्याष्टावेव गुणा इत्याह। अन्यस्तु स निर्गुण निराकार. निरवयव इत्याह। स एवांततः आत्मानमीश्वरममन्यत। एकस्तु वेदार्थमनभिज्ञः न जानाति तत्वार्थम्। मध्वाचार्य एव तत्वज्ञानी एक एव पुरंदरविठ्ठलः सर्वोत्तमः इति सिद्धांतितवान्।

अद्वैतिनः वेदार्थमज्ञात्वा विष्णुमेव जहुः। विशिष्टाद्वैतिनः विष्णुं जानाना अपि वेदतात्पर्य विस्मृतवंतः। मध्वाचार्य एव विष्णुमेव वेदैकवेद्यमाह।

एतेन दासाना तत्वजीवातु श्रीमध्वसिद्धांत एव इति स्फुटं ज्ञायते श्रीहरिः सर्वोत्तमः जगत् सत्यं तदधीनं। जीवास्तदधीना. कामकर्मादिना सूक्ष्मस्थूलदेहसंबद्धाः ईशमायया संसारे बंभ्रमंति। सात्विकजीवा वैराग्येण परमात्मप्रसादजिघृक्षया श्रवणमननध्यानादिसाधनकलापं भक्त्याऽनुतिष्ठंति। तं साक्षात्कृत्य परमप्रसादेन स्वरूपानंदाविर्भावरूपमोक्षमश्नुवते। मिश्रज्ञानिनः राजसजीवाः त्रिदिवनिरयभूगोचराः संसरंति। अधमास्तु तामसा. विष्णुवैष्णवद्वेषेण नित्यनिरये निपतंति। "सत्यजगकिदु पंचभेदवु' इति पद्ये जगतः सत्यत्वं भेदपंचकस्य नित्यत्वं च श्रुतिपुराणप्रमाणैः निर्धारितम्। दाम्भिकवृत्ति विनिंद्य ऋजुधर्माचारः निष्कामः हर्यर्पणबुद्धयाऽनुष्ठितः निश्श्रेयःसाधनमिति दासवर्या. सर्वे विवृतवचनैरुद्घोषयंति। तत्र पुरंदरदासानां गीतानि पुरंदरोपनिषत् इति श्रीव्यासतीर्थे. दीक्षागुरुभिरुपश्लोकितानि। ततः विजयदास-गोपालदास-जगन्नाथदास - परंपरायां पुरंदरदासवर्याणामुपदेशसारः युक्तिपरिप्लुतप्रमाणवचनैः जनताबोधाय संगृहीतः। आविपालगोपालं जनसामान्यस्योद्धाराय तत्तच्छ्रेण्या अधिकारभेदेन सुलभानुभवोदाहरणैः निगूढोपनिषद्रहस्यानि सुलभावगाहाय मनोज्ञवचनैः निरूपितानि। अत एव दासार्याणां पदानि—

विशेषत पुरदर-कनक-दासाना वचनानि च ब्राह्मण-क्षत्रिय-विशां शूद्राणा अत्यजानामपि जिह्वाग्रे नरीनृत्यति । जरीजाग्रति ।

हरिदासा. गुरुमुखेन दास्यदीक्षा स्वीकुर्वति । त्रिकरणशुद्धया कर्मानुष्ठान तेषामाद्य नियम यदृच्छालाभतुष्टि ईषणात्रयवर्जनं असग्रह सर्वत्र विरक्ति इन्द्रियारामत्याग सत्सगति. सदा सच्छास्त्र-श्रवण निर्वचन अविप्रलिप्सा सदाचार वर्णाश्रमविहिताचार इत्यादिकं अनुष्ठातव्यमव्यभिचारेण। नित्य भिक्षाटनेन यावल्लब्ध तण्डुलादिक पक्त्वा पूजाविधिना परमात्मने निवेद्य ब्राह्मणान् भोजयित्वोर्त्वरित शेषमेकवारमश्नीयात् । न कदाऽपि परान्न परद्रव्यं मनसाऽपि चितयेत् । सदा विशुद्धधर्मे रत न कस्मैचित् पीडया द्रुह्येत्। सदा सर्वत्र हरि ध्यात्वा शत्रुमित्रार्युदासीनभेदभावं हित्वा 'इठ्ठाग इरुवेनो हरिये' 'सकलग्रहबल नीने संरसिजाक्ष' इत्युक्तरीत्या हर्याज्ञानु-वर्तीभूय मुखदु खे समे कृत्वा सर्वत्र समदर्शनो भवेत् ।

'ईसबेकु इद्दु जयिसबेकु हेसिक ससार' इत्युक्तरीत्या अनित्यहेयस-सारेऽसक्त सन् कार्य कर्म समाचार युद्धयस्व विगतज्वर 'प्रयत्न मेकमग्रतो विधायत्भूतिमाप्नुम ।' इत्येवमादि प्रगल्भप्रमेयोपदेशः हरिदासाना तत्वनिश्चयदाढर्य धैर्य कर्तृत्वनिष्ठेत्यादिलोककल्याण-दीक्षां पिशुनयति ।

हरिदासेषु पितामहस्थाने विराजमाना. पूज्यश्रीपादराजाः रंगविट्ठलेति संकेतनाम्ना 'मध्वनाम', 'नृसिहप्रादुर्भावदण्डकं' इत्यादि पदानि विरचितवत ।श्रीव्यासतीर्थाः श्रीकृष्णपदाकिता बहूनि पदानि चक्रिरे । कनकदासा. आदिकेशवपदाकिता बहूनि पदानि ग्रंथाश्च रचितवत. । श्रीवादिराजा हयवदनपदाकितपदपद्यप्रबधान् व्यरचयन् । विजयदासाना गोपालदासानां च सुळादय बह्वर्थगर्भिताः श्री-हरिगुणोपासनाय महातमुपकारमाचिन्वति । श्रीजगन्नाथदासानां 'श्रीहरिकथामृतसार' इति ग्रन्थरत्नं द्वैतसिद्धांतप्रमेयाणि विशदमुप-पाद्य अधिकारिजीवाय साधनमार्गमुपदिशति । तत्र विष्णुरहस्य गरुडपुराणब्रह्मकाण्ड आदित्यपुराणस्थवेंकटेशमाहात्म्य इत्यादिषु निरूपितप्रमेयणि ऐतरेयच्छांदोग्यबृहदारण्यकादिषु उपनिषत्सु च प्रतिपादितविद्यास्वरूप पिण्डीकृत्य प्रतिपादितानि । विजयदासानां

सुलादयः उपासनाया. अंतरंगमहिमानं जिज्ञासूना विशदमावेदयति । श्रीवरदेंद्रतीर्थशिष्या प्राणेशदासास्तदनुयायिनश्च बहवोभक्ताग्रेसरा' दासदीक्षा स्वीकृत्य जनतायै मध्वसिद्धात उपपाद्य उपासनामाहात्म्यं निवेदयाचक्रिरे ।

श्रीहरिदासानां कृतिरत्नानि नित्यं यथावसरं पठित्वा तन्महोन्नतं तत्वसारं मनसि कृत्वा विरक्तिमत्या भक्त्या भगवत्तोषाय सर्वैः प्रयतितव्यमित्यनिभृतवचसा विनयेनावेदयाम. ।

नमः पुरंदरार्याय विजयदासादि योगिजनपूजिताय । इति शम् ।

## प्रामाण्यस्वतस्त्व साक्षिसमर्थनोपन्यासः

तदनु श्रीपादानामाध्यक्ष्ये 'प्रामाण्यस्वतस्त्वं साक्षिसमर्थन च" इति विषयमधिकृत्य पण्डितवरेण्येन उपन्यास. कृत' । यथा—

श्रीपादानुज्ञया उपस्थितोऽह पूर्वोपन्यासे प्रतिज्ञातं प्रामाण्यस्वतस्त्वमधिकृत्य यत्किचिदुपन्यस्तु विद्वत्परिपत्तोपाय । सारासारविवेकपटवो विद्वासः उपन्याससार गृहीत्वा मामनुगृह्णीयुरित्याशासे ।

विदितचरमेव समेपा विदुषा यत्प्रमित्यधीना प्रमेयसिद्धिरिति । प्रमेय च द्विविध स्वतंत्रमस्वतत्र चेति ।

**स्वतंत्रमस्वतंत्रं च द्विविधं तत्वमिष्यते ।**
**स्वतंत्रो भगवान् विष्णु. भावाभावौ द्विधेतरत् ।।**

—तत्वसंख्यानम्

**स्वतंत्रामस्वतंत्रं च प्रमेयं दिविधं मतं ।**
**स्वतंत्रो भगवान् विष्णुः निर्दोषाखिलसद्गुणः ।**
**द्विविधं परतंत्रं च भावाभावौ द्विधेतरत् ।**

इत्याचार्यवचनेन तत्वं प्रमेयमित्येकार्थमिति ज्ञायते । भगवतो विष्णोः स्वातंत्र्यं तदतिरिक्तप्रपंचस्य तदधीनत्वं मुमुक्षुणा सर्वथा ज्ञातव्यम् ।

**य एतत्परतत्रं तु सर्वमेव हरेः सदा ।**
**वशमित्येव जानाति संसारान्मुच्यते हि सः ।**

तदर्थ प्रमाणज्ञानमावश्यकं । प्रमाणपद्धतौ जयतीर्थमुनिभिरेवमुक्तम् । "तदेव भूतैः प्रमाणैः पदार्थानां नित्यानित्यत्वादिक निश्चित्य विषयेपु विरक्तस्य शमदमादिसंपत्तिमतो वासुदेवैकशरणस्य तद्विषयाणि श्रवणमनननिदिध्यासनादीनि आदरनैरतर्याभ्या बहुकालमनुष्ठितवतो भगवत्साक्षात्कारे सति उद्रिक्तया भक्त्या भगवत्प्रसादादशेषानिष्टनिवृत्तिविशिष्टानंदादिस्वरूपाविर्भावलक्षणा मुक्तिर्भवति । इति ।

किं तत्प्रमाणं। का च तद्विषयवाचोयुक्तिः। प्रमाणजन्यं च ज्ञानं यथावत्तया विषयजातमवगाहते। उत अन्यदेवेति विपर्यस्ततया वा इदमदोवेति संशयरूपेण वा। प्रमाणत्वेन संप्रतिपन्नेषु प्रमितिकरणेषु तज्जन्यज्ञानेषु वा विरोधे परिस्फुरति सति का वा व्यवस्था समाश्रयणीया। उभयमपि त्याज्यं वा अप्रमाणमिति। तयोरेकतरं वा। यदि उभयोर्लक्षणप्रामाण्यादिकमनाकुल जागर्ति तदानीं तदितिकर्तव्यतां निर्णेतुं कः उपायः। अपौरुषेयत्वेन निर्दोषेषु वेदेषु विसंवादविरोधविप्रतिपत्तिजनकानि वाक्यानि बहुलमुपलभ्यंते। अत्यंतप्रमाणत्वेन सर्वास्तिकवादिभिः अंगीकृताः वेदाः कथमुज्झितुं शक्यंते। अन्यच्च प्रमाणत्वेन संप्रतिपन्नानां तेपामवगाहनशक्तिः किं स्वातंत्र्येण कार्यं जनयितुं प्रभवति उत सहकारिणीं कामपि कारणसामग्री अपेक्षते। एवमादिविपयाः विमर्शविषयतामानीयंते अस्मिन्नुपन्यासे।

आदौ लक्षणस्वरूपं तल्लक्षणं च ज्ञात्वा तन्निकषेण प्रमाणसामान्यलक्षणं तद्विशेपलक्षणं च निर्धार्य विभागपरीक्षामुखेन तन्निरूपणं करिष्यामः।

यो धर्मो लक्ष्ये व्याप्त्या वर्तते (कात्स्न्र्येन वर्तते) न वर्तते चान्यत्र स धर्मः लक्षणम्। सकललक्ष्यवृत्तित्वे सति लक्ष्येतरावृत्तित्वं लक्षणलक्षणमित्युक्तं भवति। तथा च लक्ष्यैकदेशावृत्ति (अव्याप्ति) लक्ष्यालक्ष्ययोर्वृत्ति (अतिव्याप्ति.) लक्ष्ये क्वाप्यवृत्ति (असंभव ) रूपदोषत्रयं परिहर्तव्यम्। सास्नादिमत्वं गोर्लक्षणमिति वक्तव्ये शृंगित्वमतिव्यापकं शवलत्वमव्यापकं एकशफत्वमसभवि यथाक्रमं दोषस्पर्शनेन त्याज्य भवति। 'अत्र यो धर्मः स धर्म' इति लक्षणवाक्ये धर्मभेदः प्रतीयते। भिन्नाश्च भिन्नधर्माश्चेति सिद्धातेऽनुगतसामान्यस्यानंगीकारात्तद्विरोधः स्यात्। अत यो धर्मः इत्यस्य यत्सदृशो धर्मः इति श्रीराघवेंद्रतीर्थव्याख्याने व्याकृतम्। यज्जातीयो धर्मः इत्यपि व्याकृतमन्यसूरिभिः। श्रीविजयींद्रतीर्थैस्तु सादृश्यघटिततया लक्षणलक्षणपरिष्कार. कृतः। तथाहि लक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्यप्रतियोगीतरवृत्तिवृत्तिसादृश्यानिरूपकत्वे सति लक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्य प्रतियोगियावद्वृत्तिवृत्तिसादृश्यप्रतियोगी धर्मः लक्षणमिति। गोः सास्नादिमत्वं लक्षणमित्यत्र गोत्वं लक्ष्यतावच्छेदकं। तदभिव्यङ्ग्य

सास्नादिमत्वप्रतियोगिकं सादृश्यं । तत्प्रतियोगि सास्नादिमत्वं । तदितर-वृत्तिवृत्तिसादृश्य महिषादिवृत्ति शृङ्गित्वानुयोगिक सादृश्यं । तन्निरूप-कत्वं शृङ्गित्वस्य । अनिरूपकत्व सास्नादिमत्वस्य । विशेष्यदले यावद्-गोवृत्ति सास्नादिमत्वप्रतियोगिकसादृश्यग्रहणे प्रतियोगिभूतं सादृश्यं गोत्वाभिव्यङ्ग्यं । भिन्नभिन्नयावत्सास्नादिमत्वेषु प्रतियोगितासंबंधेन गोत्वाभिव्यङ्ग्यसास्नादिमत्वसादृश्यमस्तीति कृत्वा भिन्नाश्च भिन्न-धर्माश्चेत्युक्तमनूकूलितं भवति । अत्र सादृश्यमखण्डधर्मः इति बोध्यम् । इदमेव प्रकारांतरेण साजात्येन परिष्कृतमिति ज्ञेयम् ।

अत्र यदा विवक्षाभेदेन लिलक्षयिषितमात्रव्यापित्वं लक्षणस्यापेक्षितं (शबलगावः लिलक्षयिषिता ) तदा शबलत्वं लक्षणं भवति । तच्च लक्ष्यस्य धर्म एव । अव्यापकधर्मस्य लक्षणदोषतावादस्तु सर्वासा गवां लिलक्षयिषितत्वे एवेति द्रष्टव्यम् । एवं च अव्याप्तेर्लक्षणदोषत्वं न सर्वथा इति वस्तुस्थितिः ।

एतन्निकषेण विचार्यमाणे यथार्थ प्रमाणमिति प्रमाणसामान्यस्य लक्षणमिति ध्येयम् । अतः अन्यैर्वादिभिरुक्तानि प्रामाण्यसामान्यलक्ष-णानि अतिव्याप्त्यादिदोषग्रस्ततया त्याज्यानि । तानि विचारसौक-र्याय निर्दिश्यंते । अनुभूति. प्रमाणमिति प्राभाकरा. । प्रमाकरणेषु इन्द्रियादिषु अव्यापनादव्याप्तिदोषदुष्टमिदं लक्षणं । ज्ञाततापरपर्या-यस्य प्रमेयाश्रितस्य प्रकाशविशेषस्य साधनं क्रिया ज्ञानं प्रमाणमिति भाट्टानां लक्षण ज्ञाततायां प्रमाणाभावात् असंभावितम् । अनधिगता-र्थगतृ प्रमाणमिति भाट्टानांलक्षणांतरमपि स्मृत्यादिषु अव्याप्तेः त्याज्यमेव । सम्यगनुभवसाधनं प्रमाणमिति नैयायिकानां लक्षणमपि यथार्थज्ञाने (केवलप्रमाणे) अव्याप्ते दुष्टमेव । प्रमाव्याप्तं प्रमाण-मित्युदयन । प्रमेयादिषु ईश्वरप्रमाव्याप्तत्वात् तदप्यसार । सर्वा-वसितौ आचार्या यथार्थ प्रमाणमिति सिद्धांतितवतः । अत्र विशेष-व्युत्पादन प्रमाणलक्षण-प्रमाणपद्धति-विष्णुतत्वनिर्णय-न्यायसुधादि-ग्रन्थेभ्य अवगतव्यम् ।

एतेन यथार्थज्ञानं तत्साधनं उभयमपि संगृहीतं भवति । प्र उप-सर्ग पूर्वक माङ्धातोः ण्वुल् प्रत्यये (करणाधिकरणयोर्भावे च ण्वुल्),

अधिकरणार्थस्य अत्रासंभवात्, करणभावमात्रार्थग्रहणे प्रमितिकरणं (अनुप्रमाणं), प्रमिति· (केवलप्रमाण) इत्यर्थ· निष्पद्यते प्रमाणपदस्य । स एवार्थं यथार्थपदेनापि लभ्यते । यथाशब्दोऽनतिक्रमे सादृश्ये च वर्तते । ऋधातो· थप्रत्यये अर्थ इति सिद्ध्यति । ऋधातोर्गत्यर्थकत्वात् गत्यर्थकानां ज्ञानार्थकत्वात् थप्रत्ययस्य विषयत्वात् ज्ञानविषयत्वमित्यर्थं प्राप्यते । ज्ञेयमनतिक्रम्य वर्तमानं यथार्थम् । यथावस्थितज्ञेयमात्रविषयीकारित्वं यथार्थत्वम् । यथा शब्दस्य सादृश्यार्थकत्वे यथा वस्तु (ज्ञेय) अबाधित तथा ज्ञान अबाधितमित्यर्थ· लभ्यते । तथा च यथावस्थितज्ञेयविषयीकारित्वं प्रमाणसामान्यलक्षणमित्युक्तं भवति । तेन केवलानुप्रमाणयो सग्रहात् नाननुगमरूपदोषशंकाया अवकाश । विषयीकारित्व ज्ञानकरणयोरेकरूपमेव । पर ज्ञाने साक्षात् ज्ञानोपाधितया करणेषु ज्ञानजनको (करणो) पाधितया वर्तते इत्येव विशेषमाश्रित्य साक्षात् परंपरयेति प्रमाणपद्धतौ जयतीर्थमुनिभिरुक्तम् । ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तर इत्यनुव्याख्यानकारिकाव्याख्यानावसरे 'ज्ञानं यथा साक्षात् अन्याव्यवधानेन अर्थविषयकं तथा तत्साधनं इंद्रिय-लिंग-शब्दरूपानुप्रमाणान्यपि अन्याव्यवधानेन साक्षादेव अर्थविषयकाणि । ज्ञानविषय एव हि करणानां विषय इत्यादि सुधायां व्याकृतं ।

अनुप्रमाणमपि प्रत्यक्षमनुमानं शब्द इति त्रिविधम् । तज्जन्यज्ञानानि केवलप्रमाणानि । लिंगज्ञान-वाक्यार्थज्ञानमपि क्वचिदनुप्रमाणं भवति । निर्दोषार्थेंद्रियसन्निकर्ष· प्रत्यक्षम् । (व्यापारप्राधान्य विवक्षया)। निर्दोषोपपत्ति· अनुमानं । निर्दोष शब्द· आगमः। व्यापारवत्कारणस्यैव करणत्वात् प्रत्यक्षे अर्थेंद्रियसन्निकर्ष व्यापार· । अनुमाने व्याप्तिविशिष्टपक्षधर्मता (समुचितदेशवृत्तित्वं) ज्ञानं शब्दे पदपदार्थ संबंधज्ञानं (व्युत्पत्ति·) व्यापार· । प्रत्यक्षं अज्ञातकरणम् । अनुमानागमौ ज्ञातकरणे । प्रत्यक्षं प्राकृतमप्राकृतं चेति द्विविधम् । तत्र अप्राकृतं चैतन्यरूपं विशेषबलात् ज्ञानात्मक इंद्रियात्मकं च । तदेव साक्षीत्युच्यते । प्राकृतं मन· पंच ज्ञानेंद्रियाणि तज्जन्यं ज्ञानं च । उत्सर्गतः यथार्थमपि दोषादिसहकारिकारणवशात् अयथार्थमपि भवति । यथार्थज्ञानजनकमपि चक्षुरादिकाचकामलादिदोषवशात्

शुक्तिकां रजतात्मनाऽवगाहते इत्यनुभवसिद्धम्। दोषा हि क्वचित् ज्ञानोत्पत्तिमेव प्रतिबध्नंति कुत्रचिद्विपरीतज्ञानं जनयंति। करणेषु इन्द्रियलिंगापेक्षया शब्दविशेषस्य वेदस्य याथार्थ्यं मुख्यमेव। इन्द्रियलिंगयोरिव तस्य सर्वथाऽयाथार्थ्याभावादिति सूचयितुं 'याथार्थ्यमेव प्रामाण्यं तन्मुख्यं ज्ञानशब्दयो'रिति ब्रह्मतर्कवचने ज्ञानानंतरं प्रथमं शब्दस्य ग्रहणं कृतम्। न तु ज्ञानसमकक्षतया। पौरुषेयागमस्तु उत्सर्गतः प्रमाणमेव। दोषवशात् अप्रमाणमपि भवति। पुरुषदोषनिबंधनदोषशंकापात्रत्वात् पौरुषेयागमः दुर्बलः। अपौरुषेयस्तु सर्वथा प्रबल एव। परं तत्रापि अन्वयादिव्युत्पत्तिभ्रमेण नूनं अप्रामाण्यशंका पदं धत्ते। सा च अर्थनिर्णायक-तात्पर्यग्राहकमीमांसान्यायैः उपजीव्योपजीवकत्व-सावकाशनिरवकाशत्वलिंगैः स्वभावप्राबल्यदौर्बल्यव्यवस्थया च परीक्ष्य परिहर्तव्या। एवमेव प्रतिज्ञा-हेतु-दृष्टांत दोषाः अनुमाने प्रसक्ताः दूरीकर्तव्याः। एवं दोषविधुरं चेत् अनुप्रमाणं स्वाभाविकशक्त्या यथार्थज्ञानमेव जनयतीति ज्ञातव्यम्। साक्षी नियतयाथार्थ्यः स्वयं प्रकाशः विशेषबलात् स्वात्मानं स्वप्रामाण्यमपि गृह्णाति। आकाशकालदिगात्ममनांसि सुखदुःखेच्छादयश्च साक्षात्साक्षिगोचराः। 'इच्छा ज्ञानं सुखं दुःखं भयाभयकृपादयः। साक्षिसिद्धा न क्वचिद्धि तत्र संशयवान्क्वचित्।' इत्यनुव्याख्याने वादावल्यां च स्पष्टमभिहितम्। 'अन्ये तु यथायथं इंद्रियलिंगागमगम्याः इत्याचार्याः' इत्यप्युक्तं वादावल्याम्।

अनुप्रमाणं त्रिविधमिति यदुक्तं तत्राक्षिप्यते कैश्चनवादिभिः। वैशेषिकादयः आगमः अनुमानेऽतर्भवतीति वदंति। इमानि पदानि स्वस्मारितपदार्थसंसर्गज्ञान पूर्वकाणि आकांक्षादिमत्पदकदंबकत्वात्। गामानयेति पदकदंबकवत्। इति। परं व्याप्त्याद्यननुसंधानेऽपि आकांक्षादिमत्पदकदंबकज्ञानमात्रेण व्युत्पन्नस्य वाक्यार्थावगतौ वक्तृज्ञानाविनाभाव (व्याप्त्यादि) प्रतीति कल्पने कल्पनागौरवम्। व्याप्त्याद्यनुसंधानाभावेऽपि वाक्यार्थप्रतीतेरनुभवसिद्धत्वात्। अपौरुषेयागमः पृथक् प्रमाणं पौरुषेयस्तु अनुमानमेवेति वदंतो वैशेषिकादयः सामग्रीसाम्ये अर्धजरतीयन्यायोऽनुपपन्न इति निरस्ता।

जीवन् देवदत्तो गृहेनास्ते इति प्रत्यक्षेण शब्देन च ज्ञाते तस्य बहि-

भावः कल्प्यते इति मीमांसका अर्थपत्तेः पृथक् प्रामाण्यमाहुः। अर्थस्य बहिर्भावरूपार्थस्य आपत्तिः कल्पनेति षष्ठीसमासो ज्ञेयः। तन्न साधु। जीवनस्य क्वापि सत्वाभावस्य चान्योन्यविरोधेऽपि जीवनस्य क्वचिद्देशे सत्वाभावस्य वृक्षत्वचूतत्वाभावयोरिव अविरोधदर्शनात् सामान्यविशेषभावेन जीवन-गृहेऽसत्वयोः एकस्मिन् धर्मिणि अवस्थातुं शक्यते। अतः जीवनवत्वे सति गृहेऽसत्वरूपलिंगेन देवदत्तस्य बहिर्भावः साधयितुं शक्यते इत्यनुमाने एव अर्थापत्तिरंतर्भावयितुं युज्यते इति तस्याः पृथक्प्रामाण्यं न कल्पनीयम्। अत्र बहिःसत्वं विना जीवनवत्वे सति गृहेऽसत्वस्य अनुपपद्यमानत्वात् अनुपपत्तिज्ञानमेव व्याप्तिज्ञानम्।

जरन्नैयायिकैर्मीमांसकैश्चाभिमतोपमानमपि प्रत्यक्षेऽनुमाने वांऽत-र्भवति। गृहे स्थिता गौः स्मर्यमाणा वनस्थगृह्यमाणगोसदृशी एतत्स-दृशत्वात्। इत्यनुमानेन सादृश्यज्ञानं जायते। तदर्थं उपमानस्य पृथक् प्रामाण्यं न कल्पनीयम्। ननु उक्तानुमाने हेतुसाध्ययोः सामानाधिकरण्यं नास्तीति व्याप्तिनिश्चयासंभवात् परामर्शानुदयात् नानुमितिरुत्पत्त प्रभवतीति चेत्। न। व्याप्तेः सामानाधिकरण्यनियमो नाऽपेक्षितः व्याप्तिप्रविष्टसंबंधानां बहुविधत्वेन धूमवह्न्योर्व्याप्तेः सामानाधिकर ण्यघटितत्वेऽपि ऊर्ध्वदेशवृष्टि-अधोदेशनदीपूरादिस्थलेषु वैयधिकरण्य-स्यापि दृष्टत्वेन सिद्धव्याप्तिके वैयधिकरण्यं न दोष इति भावः। (अत्र—'चतुष्टयी खलु धर्माणां गतिः।' इत्यादि प्रमाणपद्धतौ द्रष्टव्यम्। न्यायसुधायां युक्तिपादीयनविलक्षणत्वाधिकरणे 'द्विविधा हि धम भवंति'''इति संक्षेपः।' इत्यत्र विशदमुपपादितं ध्येयम्।)

अभावकरणमनेकविधम्। तत् प्रत्यक्षानुमानागमेष्वंतर्भवति। कौरवाद्यभाव भारताद्यागमात् ज्ञेयः। चक्षुराद्यभावः रूपादिज्ञाना-भावलिंगगम्य। सुखाद्यभावः साक्षिप्रत्यक्षगम्यः। घटाद्यभावस्तु झटिति चक्षुरादींद्रियगम्यः। येनेंद्रियेण या व्यक्तिर्गृह्यते तेनैवेंद्रियेण तद्गता जातिः तदभावश्च गृह्यते इति सामान्यनियमात्। अतः अभावस्य पृथक् प्रमाणत्वकल्पनं गौरवम्। 'अभावोऽनुमा प्रत्यक्षं च। परामर्शापरामर्शविशेषात्।' इति प्रमाणलक्षणे उक्तम्। एवमेव बहुलसंभवेऽल्पज्ञानं संभवः। शते पंचाशन्न्यायेन। अयं पंचाशद्वान्

शतवत्वात् इति संभवोऽप्यनुमानमेव । प्रसक्तप्रतिषेधे परिशिष्यमाणे बुद्धिः परिशेषः। उभयस्मिन् सति एकस्य प्रतिषेधे अन्यस्मिन् बुद्धिः परिशेष.। देवदत्तयज्ञदत्तौ इमौ इति ज्ञाने सति नाऽयं देतदत्तः इति प्रतिषेधे यज्ञदत्ते बुद्धिर्जायते । अयं यज्ञदत्तः यज्ञदत्त-देवदत्तयोरन्यतरत्वे सति अदेवदत्तत्वात् । व्यतिरेकेण देवदत्तवत् । इत्यनुमानप्रयोगः ।

एवमुपक्रमोपसंहारादीन्यपि अनुमानान्येव । इदं एतत्परं एतदुपक्रमत्वात् । यद्यदुपक्रमं तत् तत्तात्पर्यकम् । इत्यादिरूपेण व्याप्तिमपेक्ष्य तात्पर्यगमकत्वात् तान्यनुमानान्येव ।

तर्कोऽप्यनुमानमेव । व्याप्यारोपेण व्यापकारोपस्तर्कः । स च उपाधिव्यभिचारशंकायां अनिष्टप्रसंजनेन अनुमानं दृढयति । यदि वह्निर्नस्यात्तर्हि धूमोऽपि न स्यात् इति तर्क. प्रत्यक्षसिद्धधूमापलापरूपानिष्टप्रसंजनेन, अन्यथा कार्यकारणभावभंगरूपानिष्टप्रसंजनेन च धूमवह्न्योः व्याप्ति स्थिरीकृता भवति । विपरीतशंकानिरसनद्वारा करणस्वरूपफलस्वरूपनिष्पादनरूपोपकारकतयाऽनुमानानुग्राहकोऽपि भवति । न केवलं (दुषणानुमानरूपतया) स्वतंत्रप्रमाणमितिज्ञेयम् । तर्कस्य स्वातत्र्येण अनुग्राहकत्वेन च प्रामाण्यं वहुधा विचार्य व्यवस्थापितं न्यायमुधाया तर्कताण्डवे च । विस्तरभिया नाऽत्र प्रपंच्यते ।

अथ केवलानुप्रमाणाना उपरि निरूपितानां प्रामाण्यं तदाभासानां च अप्रामाण्यं किमुत्पत्तौ ज्ञप्तौ चैकविधं उत भिन्नप्रकार । स्वतो वा परतो वेत्यत्र वादिषु वहुलो मतभेदो वर्तते । प्रामाण्यं चोभय स्वत एवेति सांख्याः मन्यंते । ज्ञानजनकातिरिक्तजनकानपेक्षत्वं उत्पत्तौ स्वतस्त्वम् । ज्ञानज्ञापकातिरिक्तज्ञापकानपेक्षत्वं ज्ञप्तौ स्वतस्त्वम् । अयं घट इति ज्ञानं चक्षुरिंद्रियेण जन्यते । तत्र प्रामाण्यमपि समकालं तेनैवेंद्रियेण उत्पद्यते । न तत्र कारणांतरापेक्षाऽस्ति । ज्ञान प्रमाणं सदेवोत्पद्यते इत्यर्थः । तथैव येनेद्रियेण ज्ञान गृह्यते तदैव तेन तत्प्रामाण्यमपि गृह्यते इति ज्ञप्तौ स्वतस्त्वम् । उत्पन्नं ज्ञानं अनुव्यवसायेन (साक्षिणा) घटज्ञानवानह इति गृह्यते । तेनैव ज्ञानगतप्रामाण्यमपि गृह्यते इति ज्ञप्तौ स्वतस्त्वम् । नैयायिकास्तु प्रामाण्याप्रामाण्ययोरुत्पत्तौ ज्ञप्तौ च परतस्त्वमिति मन्यंते । ते एवमाहुः । ज्ञानं इन्द्रियादिकरण-

जन्यं। प्रामाण्यं तु तद्गुणजन्यम्। यथा प्रत्यक्षे भूयोऽवयवेंद्रियादिसन्निकर्षः अनुमितौ यथार्थलिंगपरामर्शः उपमितौ यथार्थसादृश्यज्ञानं, वाक्यार्थे यथार्थतात्पर्यज्ञानं इत्यादयः गुणाः। तन्निमित्तं तत्र (उत्पन्न ज्ञाने) प्रामाण्यमुत्पद्यते। अप्रामाण्यं पुनः तद्दोषजन्यम्। दोषाश्च काचकामलादि (प्रत्यक्षे) अयथार्थलिंगपरामर्शः (अनुमितौ) अयथार्थसादृश्यज्ञानं (उपमितौ) तात्पर्यभ्रमः (शाब्दज्ञाने) इत्यादयः यथाक्रमं ज्ञातव्याः। एवं ज्ञानजनकातिरिक्तकारणजन्यत्वं उत्पत्तौ प्रामाण्याप्रामाण्ययोः परतस्त्वम्।

एवं ज्ञानं अनुव्यवसायवेद्यम्। तत्प्रामाण्याप्रामाण्ये संवाद-विसंवादादिर्लिंगजन्ये। यथा घटज्ञानं प्रमाणं जलाहरणादिरूपार्थक्रियाकारिप्रवृत्तिजनकज्ञानत्वात्। यथा संप्रतिपन्नम्। भ्रमस्थले इदं अप्रमाणं अर्थविसंवादात् इति परतस्त्वमुभयोः। इति। तन्न स्वरसं। प्रामाण्यस्य गुणाजन्यत्वं सिद्धांतितम्।

प्रामाण्यं परतः अप्रामाण्यं स्वतः इति बौद्धाः आतिष्ठंते। तदतीवमंदम्। व्यवहारमात्रोच्छेदप्रसंगात्। प्रामाण्यस्य परतस्त्वेऽनवस्थादिदूषणं स्फुटमेवेति तन्मत विचारार्हमेव न भवति। 'सर्वस्य न चाऽभावः सर्वं सदिति गम्यते।' इत्यनुव्याख्याने तन्मतं दूषितमाचार्यैः। भाट्टाः प्रामाण्यं स्वतः अप्रामाण्यं परत इत्यंगीकुर्वंति। वयं तदनुमन्यामहे। परं तदुपपादनप्रकारः न स्वरसः। ज्ञानातिरिक्तज्ञाततांगीकारेण ज्ञाततायां प्रमाणाभावेन अप्रामाणिकमेतन्मतम्। अप्रामाण्यं नास्त्येवेति प्राभाकराः। अप्रामाण्यस्य स्वानुभवसिद्धत्वात्तदपलापः न युक्तः। भाट्टप्राभाकरयोश्च मतं 'न ज्ञानदृष्टिमात्रेण प्रामाण्यमवसीयते' इत्यनुव्याख्याने दूषितम्। मानसदर्शनस्य व्यभिचारयोग्यत्वात् ज्ञानमात्रस्य प्रामाण्यमंगीकर्तुं नोचितमित्युपपादितं।

एवमुपन्यस्तपंचानामपि मतानां दुष्टत्वात् आचार्याः स्वसिद्धांतं विष्णुतत्वनिर्णये अनुव्याख्याने गीताभाष्यादौ च स्पष्टमेवमाहुः। इन्द्रियादिजन्यज्ञानानां उत्पत्तिज्ञप्त्योः प्रामाण्यं स्वतः अप्रामाण्यं परतः इति। टीकाकृद्भिः प्रमाणपद्धतावेवमुक्तम्। 'इन्द्रियादिमात्रेणैव प्रामाण्यविशिष्टं ज्ञानमुत्पद्यते। गुणास्त्वकिंचित्कराः' इति। अप्रामाण्यं दोषसहकृतेंद्रियादिभिरुत्पद्यते। तथा ज्ञानं तत्प्रामाण्यं

साक्षिणैव ज्ञायते। ज्ञानस्वरूपमात्रं साक्षिवेद्यम्। तदप्रामाण्यं तु अनुमेयमित्याचार्याः। इति।

"करणानां तु ज्ञानजनकत्वशक्तिरेव स्वकारणासादिता प्रामाण्य जनकत्वशक्तिः। ज्ञानगतप्रामाण्यस्योत्पत्तौ स्वतस्त्वम्। अप्रामाण्यजनने तु अन्या शक्तिर्दोषवशादाविर्भवति। ज्ञप्तिस्तु परत एव। इन्द्रियादिस्वरूपस्य यथायथं स्वप्रमाणवेद्यत्वात्। यथार्थज्ञानसाधनत्वस्य अनुमानवेद्यत्वात्।" इति। इदमत्रावधेयम्। करणेषु शक्तिद्वयं विभाव्यते ज्ञानजननशक्तिः उत्पन्नज्ञाने प्रामाण्यजननशक्तिश्चेति। परं प्रतिबंधादिदोषवशात् तदुभयमपि लुप्यते। ज्ञानमेव नोत्पद्यते। अथवा उत्पन्नज्ञाने विपरीतफलं अप्रामाण्यमाधास्यति। यथा दोषप्राबल्यात् घटज्ञानमेव नोत्पद्यते चक्षुषा सत्यपि घटे भूतले। अथवा विपरीतबुद्धिमेव जनयति। यथा चाकचक्यादिकं शुक्तिं रजततयाऽवभासयति। सहकारिकारणानां कार्यजननशक्तिः विपरीतकार्यजननशक्तिर्वा बहुलमुपलभ्यते। यथा वटबीजं दग्धं न किमप्युत्पादयतीति कार्यजननशक्तिरुच्छिद्यते। दावदहनेन वेत्रबीजस्य कदलीकाण्डजनने (विपरीतफले) शक्तिराविर्भवति। इत्यादि। तथा च इन्द्रियादिकरणैर्यथार्थज्ञानं तत्प्रामाण्य चैकपदमेवोत्पद्यते। तदर्थं (प्रामाण्यार्थं) कारणांतरापेक्षा नास्ति। अत्र करणेषु ज्ञानजननशक्तिः तत्प्रामाण्यजननशक्तिश्च विद्येते। तयोर्भेदो वाऽभेदो वा इति पक्षद्वयं दृश्यते सूरिषु। अत्र विशेषः। करणगतायाः यथार्थज्ञानजननशक्तेः करणगता करणहेत्वासादिता सहजा या ज्ञानजननशक्ति. तद्वत् सहजत्वं वा तदभिन्नत्वं वा इति तर्कताण्डवोक्तदिशा ध्येय। भ्रमस्थले दोषेण प्रमाजननशक्तिप्रतिबंधेऽपि न ज्ञानानुत्पत्तिशंकावकाशः। तच्छक्तेरप्रतिबंधात्। एतेन शक्तिभेदः कल्पनीयो भवति। अभेदपक्षे तु प्रामाण्यांशे एव प्रतिबंधः। न ज्ञानांशे इति फलबलात्कल्प्यमित्यर्थः। अप्रामाण्यशक्तेः दोषाहितत्वात् सहजत्वाभावात् अप्रामाण्यस्य परतस्त्वमिति ध्येयम्। उक्तरीत्या केवलप्रमाणस्य उत्पत्तौ ज्ञप्तौ च स्वतस्त्वमुपपादितम्।

अनुप्रमाणेषु तावत् इन्द्रियादिकारणानां स्वस्वकारणेन या ज्ञानजननशक्तिरुत्पन्ना सैव कारणेष्वासादिता प्रामाण्यजननशक्तिः। तथापि उत्पत्तौ ज्ञप्तौ च तत्प्रामाण्यं परत एव। बाह्येन्द्रियस्वरूपं

अयं चक्षुष्मान् रूपादिज्ञानवत्वात्। इत्यादि रूपज्ञानादिलिंगगम्यं। मनस्तु साक्षिगम्यं । लिंगशब्दस्वरूप तु चक्षुःश्रोत्रादिप्रत्यक्ष गम्यम् । इन्द्रिय-लिंग-शब्दरूपत्रयस्यापि यथार्थज्ञानसाधनत्वरूप-प्रामाण्यं तु संवादिज्ञानजनकत्वादिलिंगेन अनुमेयमिति स्वरूपग्राहकातिरिक्तग्राह्यत्वेन परतस्त्वं तत्प्रामाण्यस्य। करणाना ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य ग्राह्यत्वं स्वतस्त्वमिति विवक्षाभेदेन स्वतस्त्वमपि सुधायामुक्तम्। प्रमाणपद्धतौ तु करणानां ज्ञप्तिस्तु परत एवेत्युक्तिः तत्स्वरूपग्राहकमात्रग्राह्यत्वं नेत्यभिप्रायेणेति ज्ञेयम्।

ननु आप्तिमूलतया चैव श्रुतिमूलतया तथा। युक्तिमूलतया चैव प्रामाण्यं त्रिविध महत्। इत्यनुव्याख्याने प्रामाण्यस्य आप्तिश्रुति-युक्ति-मूलत्वमुक्तम् । प्रामाण्यस्य स्वतस्त्वे अनुव्याख्यानविरोधः आपतति इत्याक्षेपो न स्वरस.। अत्र आप्त्यादिकं न प्रामाण्यसाधनत्वेन विवक्षितम्। किं तु अज्ञकृताप्रामाण्यशंकानिवर्तकत्वेन। अनाप्तोक्तस्यापि 'नदीतीरे पंच फलानि संति' इति वाक्यस्यार्थसंवादेन प्रामाण्यस्य दर्शनात्। निर्दोषप्रत्यक्षानुमानागमानां ज्ञान-तत्प्रामाण्य-जननशक्तिरेकैव सहजा वर्तते। अत एव प्रमाणपद्धतौ प्रामाण्योत्पत्तौ गुणाः अकिंचित्कराः इत्युक्तम्।

इदानी प्रामाण्यं केनेंद्रियेण गृह्यते इति निश्चेतव्यम्। अनुव्यवसाय. प्रामाण्यग्राहक इति मीमांसका नैयायिकाश्चाभ्युपयंति। तन्न स्वरसम्। अनुव्यवसायस्य मानसानुभवत्वात्। तत्प्रामाण्यमन्येन मानसानुभवेन ग्राह्यम् । तस्याप्यन्येनेत्यसिद्धविषयकत्वान्नानवस्थादोषः परिहर्तुं शक्यते। मानसज्ञानस्य जडत्वात्तस्य साक्षात् विषयीकरण-शक्तिर्न युज्यते। प्रामाण्यग्रहणं तु दूरतोऽपास्तम्। अत. स्वरूपेंद्रियं ज्ञानात्मकं स्वप्रकाश साक्षी ज्ञानग्राहकः स्वात्मानं प्रामाण्यं च गृह्णाति इत्यवश्यमभ्युपगंतव्यम्। अत्राऽपि अनवस्थादोषः लगत्येवेति न वक्तु शक्यते । यत. साक्षी स्वप्रकाशः अन्यानपेक्षः ज्ञानादिग्राहक इति विष्णुतत्वनिर्णयेऽनुव्याख्यानसुधयोः सुष्ठु उपपादितम्। मनसः जडत्वात् न तस्यान्यग्राहकत्वशक्ति. साक्षात्। साक्षी नियतयाथार्थ्य. न कदापि कुत्रापि विसंवादं सहते। अत्रैवं आक्षिप्यते पूर्वपक्षिणा। उत्पन्नं

ज्ञानं यदि साक्षिणा गृह्यते तर्हि तत्सर्वं प्रमाणं स्यात्। बौद्धागमजन्यं ज्ञानं शुक्तिरजतादिज्ञानमपि यथार्थं उपादेयं च स्यात् इति। अत्रेदं समाधानं। वेदविरुद्धत्वरूपदोपसहकारेण बौद्धागमज्ञानं मानसं अप्रमाणं न साक्षिवेद्यम्। किंतु प्राकृतमनसः विपय एव। तथैव शुक्तिरजतादिज्ञानं दोपजन्यं मनसाऽवसेयम् अप्रमाणमेवेति। निर्दोपार्थेंद्रियलिंगशब्दरूपसामग्रीजन्यत्वादुत्पन्नं ज्ञानं प्रमाणमेव भवति। किं तत्र साक्षिणा कृत्यमिति केचिदाक्षिपंति। मानसज्ञानस्य भ्रमाभ्रमसाधारण्यात् न तेन प्रामाण्यनिश्चयो भवतीति ध्येयं। वेदस्य तु अपौरुपेयत्वात्पुरुषदोष निबंधनदोपशून्यत्वात् तत्र अप्रामाण्यशंकायाः नावकाशः।

अत्रैषा प्रक्रिया। सर्वमपि ज्ञानं प्रमाणमेवेति साक्षी गृह्णाति। सति प्रयोजने प्रामाण्यादिजिज्ञासायां परीक्षामनुसृत्य प्रामाण्यं व्यवस्थापयति। यदा बाधो भविष्यति तदाऽप्रमाणमेवेति निर्धारयति। आदौ साक्षी ज्ञानसामान्य गृह्णाति। प्रामाण्यज्ञप्तौ तु अपवादनिरासकतया परीक्षायाः आवश्यकत्वम्। मनोवृत्तिविपयेष्वेव परीक्षायाः अवसरः। न पुनः साक्षिसिद्धेपु। आकाशकालदिगात्ममनांसि सुखादयश्च साक्षात्साक्षिसिद्धाः। तदितरे तु पदार्थाः यथायथं इंद्रियलिंगशब्दगम्याः। साक्षिविपयेषु न संशयस्यावकाश। इतरेपु तु मनोवृत्तिविषयत्वात् मनसश्च दोषसंसर्गसंभवात् तज्ज्ञानं प्रमाणं वा अप्रमाणं वेति संशयः उदेति। द्विविधो हि संशयो भवति। एकस्तावदादितः एव। यथा स्थाणुरयं पुरुषोवेति। अपरस्तु निश्चयपृष्ठभावी। यथा स्थाणुरयं प्रतीयते स्थाणुर्भवति वा न वेति। तत्र आद्यः विशेषादर्शनमूलः। द्वितीयोऽपि प्रथमजातस्य दोपजन्यत्वशंकामूलः। दोपाश्च मानसे एव दर्शने संभवंति। अत एव तत् संशयात्मकं वा जायते निश्चयतया जातस्य विषये वाऽऽहार्यं संशयो भवति। न तु साक्षिसिद्धे दर्शने दोषसंभवः। अतो न तत्संशयात्मक नाऽपि तत्सिद्धेऽर्थे संशयो भवति। एवं मानसवृत्तिषु अनादौ संसारे द्वयीं गतिं बाधाबाधलक्षणामनुसंदधत्साक्षी सहसैव प्रमाणमेतदिति न निश्चेतु प्रभवति। किंतु दोषाभावनिश्चयद्वारैव। दोषाभावं च न स्वयमेवावधारयितुमीष्टे। अपि तु परीक्षासहकृत एव। परीक्षाया अपि यावत्स्वविषयेषु सुखादिषु पर्यवसानं तावत्परीक्षांतरमनुसरति। न चैवं परतस्त्वापत्तिः। परी-

क्षायाः प्रतिबंधकदोषशंकानिरसने परिक्षीणत्वात् । बुद्धिदोष-निरासमात्रकारणत्वाद्युक्तीनामित्युक्तमाचार्यैः । न हि गोक्षुरकाप-सरणसापेक्षत्वेन गजस्य गमनशक्तिः परतंत्रा । विसंवादाद्यनुसंधानेन अप्रामाण्यनिश्चय. इति नाऽप्रामाण्यस्य स्वतस्त्वापत्तिः । प्रामाण्य-ग्राहकसाक्षिणः स्वप्रकाशत्वात् विशेषबलेन स स्वात्मानं स्वप्रामाण्यं च गृह्णाति । परीक्षाऽपि साक्षिविषयसुखाद्यनुसंधानपर्यंतमेवेति न ग्राह-कपरीक्षयो अनवस्थाशंकावकाशः । साक्षी जन्यं ज्ञानं गृह्णन् संमुग्ध-तया गृह्णाति । न तु प्रमाणं अप्रमाणं वेति निश्चित्य । यदाऽऽहार्य-संशयो वा प्राथमिकनिश्चयोत्तरं दार्ढ्याय परीक्षार्थ संशयो वा संभ-वति तदा दोषस्फूर्तिदशाया परीक्षायाः अवसर. कल्प्यते । नाऽन्यथा । नित्यसिद्धघटादिव्यवहारेषु दृढज्ञानमूलत्वात् स्फुटत्वाच्च न तत्र संशयस्य अवकाश इति भाति । स्तभकुंभादिप्राथमिक ज्ञानं तत्तत्क-रणमात्रजन्यं एकाकारनियतमपि न निर्णयात्मकं भवति । एकाकारनि यतेष्वपि ज्ञानेषु केषांचिद् भ्रमत्वस्य केषांचिदभ्रमत्वस्य च बहुलमुप-लंभात् । अतः प्रत्ययानां भ्रमत्वमभ्रमत्वं च अनुभवोपगं साक्षिणैव नियतयाथार्थ्येनाध्यवसेयम् ।

भ्रमत्वं करणदोषनिबंधनं । करणदोषास्तु साक्षिविषयाः । विसं-वादेन साक्षी मनसा (न साक्षात्) परीक्षयित्वा दोषान्निश्चिनोति । तावत्पर्यंतं स उदासीनो भूत्वा दोषाऽपसरणानतर याथार्थ्यं निश्चिनो ति गृह्णाति च । अन्यथा दोषनिमित्ताप्रामाण्यमपि यदि साक्षी गृह्णीयात् तर्हि सर्वत्र भ्रमत्वं वा अभ्रतत्वं वा स्यात् । तद्वैलक्षण्यनिर्धारणोपायो न स्यात् । तेन हानादानादि व्यवहारो न सिद्ध्येत् । अत. साक्षी अप्रा-माण्यं परतः नियमेन विसंवादापेक्षः सन् अवगाहते इति ज्ञातव्यम् । विसवादशंकाऽभावे स्तंभकुंभादिष्विव अप्रतिहतः स्वतः प्रचलति । स्तंभकुभादिनिर्दोषप्रत्यक्षे प्रयोजनाभावान्न परीक्षाया अवसर इति भाति । अथवा तत्रापि साक्षी झटित्येव मनसा परीक्ष्य गृह्णाति इत्यभ्यु-पगमे नानुभवापलापः मनोव्यापारस्यातिसूक्ष्मत्वात् अतिजवीयस्त्वाच्च नाऽस्माभिः स्थूलदृश्वभिः विवेक्त पार्यते ।

या तु टीकायां अप्रामाण्यमनुमेयमित्युक्ति. सा साक्षिणाऽप्रामाण्य-ग्रहणे विसवादापेक्षा नियतेत्यभिप्रेत्य । अत एव वादावल्यामुक्तं "न

च प्रामाण्यं क्वचिदपि निरपेक्षसाक्षिणा निश्चितचरमिति। उक्तं हि सुधायां साक्षी अपवादसद्भावेऽप्रामाण्यमपिगृह्णातीति।"

एवं प्रमाणस्वरूपं प्रामाण्य स्वतस्त्वं साक्षिसमर्थनं च संक्षेपेणास्यां परिषदि यथामति निरूपितम्। श्रीपूज्यस्वामिनः गुणग्रहणेन मामनुगृह्णंत्विति संप्रार्थ्य विरमामि।

## संस्कृतकविसम्मेलनम्

केचित्कविपुण्डरीकाः श्रीमत्सुयमीद्रपूज्यपादानामाध्यक्ष्ये मिलित्वा स्वस्वकविताचातुर्यं आशु कवितानिर्माणशक्तिं च स्पर्धया प्रदर्शयामासुः सप्तरात्रोत्सवहर्षनिर्भरचेतसः। षड्ऋतून् गंगादिनदीः समुद्रपर्वतादींश्च स्वप्रतिभाबलेन सरसपदगुम्फनेन वर्णयामासुः। यथा—

### वसंतर्तु वर्णनम्

एकः—

मधुकुसुमसुगंधैः हृद्यवातैर्जलार्द्रैः।
शुकपिककनकांगैः हंसकारंडवैश्च।
सुभगशिखिसमूहैश्चारुकासारसारैः।
युवतिजनमनोजस्यागतो दूत एषः॥ ६॥

रसालसल्लकीकुञ्जे गुञ्जद्भ्रमरचुम्बिते।
हसन्वसंतसमयः क्रीडति प्रीतिकृन्नृणाम्॥ ७॥

अन्यः—

आयात्यहो मधुरगानविलोलबालः।
गोवृन्दमंदरधरः यदुनंदनोऽद्य॥
पुष्पैः फलैः कलरवैः मृदुगाननृत्यैः।
मल्लीरसालशुककोकमयूरहंसाः॥ ८॥

आसाद्य तं मुरहरं तरसा समेत्य।
आनर्चुरोषधिपतेः कुलजं स्वबंधुम्।
यो गोपिकासदसि नर्तनरासलास्यं।
चक्रेऽद्भुतं नटवरो जगदार्तिहारी॥ ९॥

अपरः—

व्याजह्रुरुत्सुकधियो जयशब्दमुच्चैः ।
गावो मृगाः द्विजगणाः कलकूजितैश्च ॥
विप्राः प्रसूनतुलसीवरदामपूर्ग- ।
रर्चंतिवेणुवदनं मुनिगेयकीर्तिम् ॥ १० ॥

ग्रीष्मर्तु वर्णनम्

सूर्यसंतापसंतप्तः कश्चित् कविरकवतः—

ग्रीष्मे निदाघभूयिष्ठे नीरसे सरसीरुहे ।
स्वेदार्द्रवपुषि प्लुष्टे जने किं स्यात्प्रियं नृणाम् ॥ ११ ॥

स्वेदातपप्रमथिताः तृषयाऽऽर्तजिह्वाः ।
पांथाः पतंति पथि नष्टधियो निदाघे ॥
वृक्षा विशीर्णफलपुष्पचयाश्च नद्यः ।
स्याता दरिद्र इव त्यक्तसुयाचकाश्च ॥ १२ ॥

वर्षाकालवर्णनम्

अन्यः—

सुखं दुःखानुगं हृद्यमिति संदर्शयन्निव ।
ग्रीष्मे तापप्लुते भूयः प्रावृट् गां शामयिष्यति ॥१३ ॥

शुण्डाप्रायैः जलासारैः स्तनयित्नुबलाहकैः ।
पूर्णे वटावटे भूम्यां निःस्वः स्वी समतां गतौ ॥ १४ ॥

शाद्वलैर्हरिता सस्यपूर्णा भूमिर्व्यभासत ।
कुचेलः कृष्णकृपया सकलत्रः स्मयन्निव ॥ १५ ॥

रोधःपूरजला धुनी विजयते स्फूर्जत्तरंगाकुला ।
शश्वत्ताडितशीर्षकाः गिरितटाः वर्षे न शीर्णा यथा ॥
ज्ञानी मौनरतो विपद्भिरघृणं संपातितोऽप्युच्छ्रितः ।
जाजृम्भीति विकारशून्य इति ही जैह्मयं स्वयं शीर्यते ॥१६॥

कामी भोगपरो वसंतसमये वांछत्यनूनं सुखं ।
श्रीशस्तं विगतप्रभं वितनुते नैदाघकाले कृपा- ॥
सांद्रः प्रावृषि साधुलोकमवति प्रेम्णा प्रवर्षन् पयः ।
झंपासंततिभिर्घनाघनरवैरुग्रो नृसिंहो यथा ॥ १७ ॥

## शरत्कालवर्णनम्

वर्षा कंदरपिण्डलौ वितनुते तुल्यौ च धारांबुभिः ।
भ्रांतस्तत्र गतः पतत्यवितथं ज्ञानी तु वेत्यन्यथा ॥
सत्यं भेदमवेत्त्वितीह शरदा पङ्कं न्यवारीन्मुदा ।
याथातथ्यत एव वस्तुनिचयं प्रादर्शयच्छ्रीहरिः ॥ १८ ॥

अभ्रं शुभ्रमभूददभ्रममलं पंकोऽनिलैः शोषितः ।
मार्गाः पांथजनाय गंतुममला नद्यः प्रसन्ना जलैः ॥
चंद्रः कांतगभस्तिरुद्रूघमहसा ज्योत्स्नां व्यतानीन्मुदा ।
स्वर्भानुर्गगने कवोष्णकिरणः वाभाति शुभ्राभ्रगः ॥ १९ ।

साधुः समाधिनिरतः शुद्धानंदानुभुग्यथा ।
मोदते विगतक्लेशस्तथा शरदि सज्जनः ॥ २० ॥

मंदानिलाः सांद्रपयोधरा गौः ।
शैला लतापुष्पसमृद्धगात्राः ॥
गोत्रा कृतार्था पृथुभूरियागैः ।
दर्यः प्रसुप्ताखिलवन्यसत्वाः ॥ २१ ॥

श्री विष्णुं परदैवतं प्रथयितुं यान् ब्रह्मरुद्रांतिकम् ।
मौनीशः प्रसमीक्ष्य रोषशकलं तत्राऽह तौ नोत्तमौ ।
लक्ष्म्या सेवितपादपंकजमनूनानंदरूपं हरिं ।
दृष्ट्वाऽमर्षवशस्तताड सहसा वक्षस्यथाऽपि स्वयं ॥ २२ ॥

शांतः स्वात्मनि विप्रपूजनविधिं लोकाय संशिक्षयन् ।
तत्पादाब्जसमर्हणं व्यतनुत व्रीडानतः सांत्वयन् ॥
लक्ष्मीशं वरभक्तरक्षणरतं भक्तप्रिय वीक्ष्य तम् ।
मौनींद्रः सदसि प्रहृष्टवदनः प्राहोत्तमत्वं हरे ॥ २३ ॥

देवी श्रीरथ विप्रताडनपरीभावं स्वभर्तुर्मृषा ।
नासेहे सहसा जगाम भुवि सा कोल्हापुरं श्रीकरं ।
तामन्वेष्टुमथाऽऽगतो भुवि हरिः श्रीशेषशैले स्थितः ।
लेभे मोदपरं परीणयमहे नित्याऽवियोगोऽपि ताम् ॥ २४ ॥

इत्थं लोकविडंबनं विहरति श्रीजानिरावेदयन् ।
भक्तेऽच परतत्वमुत्तमधियां व्याघोषयच्छ्वारदे ।।
मासे चाश्विनशुक्लपक्षदशमीतिथ्यां शुभाहे हरि. ।
ब्रह्माद्यैः कृतपूजनो भुवि निजब्रह्मोत्सवे सोत्सवं ।। २५ ।।

अन्यः कविराह :—

शरदि शरदि कृष्णो मंगलांगः सखीभिः ।
व्यहरदमितमोद. क्रीडया वेणुनादैः ।।
मृदुकलमदगीतैः मोहयन् श्लक्षणवेषः ।
अमलपुलिनभूमौ यामुने रोधसीशः ।। २६ ।।

अपरः कविराह :—

कौमुद्यां शरदिंदुशुभ्रकिरणैः श्वेतायितायां नदी- ।
शैलक्षेत्रगुहादरीतरुगृहारण्यानि सौधानि च ।
श्वेतिम्ना न विवेक्तुमप्रभव इत्युच्चैर्जगुर्लौकिकाः ।
चंद्रांकेन कलंकितान्यवधृताः कष्टेन निष्ठां ययुः ।। २७ ।।

शक्रः किं सुधयांऽबरे विलिखति स्फूर्जति शून्यानि वा ।
क्षीराब्धौ मथिते स्फुरत्कणगणाः नीलांबरे प्रोत्थिताः ।।
सप्ताश्वैर्हरिदश्वयानसमये प्रोद्भिन्नरेणौ नृणाम् ।
उद्वीक्षाखचितांबरे ददृशिरे तारा निमेषोन्मिषाः ।। २८ ।।

वाता ववु. स्पर्शसुखाः सुगंधसंसक्तगात्रा हिमशीकरार्द्रा ।
शुभ्राण्यहान्यत्र सुपर्वपर्वनिर्वाहयोग्यानि सतां मनांसि ।।२९।।
रात्रिंदिनं वेदविचारचर्चाकूटानि विष्णोर्गुणगानवंति ।
विप्रा सुवासिन्य उदारचेष्टाः व्रतोपवासादिरताः समस्ताः ।।३०।।

सुप्तोत्थितः श्रीकमलापतिर्द्राग्दुग्धाब्धिशायी तुलसीमुवाह ।
स्वापो नु लीलारचितो मुरारेः ब्रह्माण्डरक्षैकपटोः क्व निद्रा ।।३१।।

संन्यासिनः स्वावसथान्निरीयुः समाप्य विप्रा. नियमं विधानैः ।
चत्वारि मासान् हरितत्वचिंतारताः सशिष्याः व्रतकर्शितांगाः ।३२।

श्रीपादानामाज्ञया सदसि कोणेऽविदितोपविष्टः कविरत्नपदभाक् महामेधावी कविरेकः सद्यः हेमंतर्तुमधिकृत्य पद्यान्याह—

## हेमंतर्तुवर्णनम्

स्वसुखललितलीलालोलचित्तस्य मह्यां ।
मनसिजवशवर्तिप्राणिनः सौख्यहेतोः ।।
कुमुदवनमपश्रि द्योमणेर्भाऽस्तसत्वा ।
हिमततिरतितीव्रा जाठराग्निप्रदीप्त्री ।। ३३ ।।

वरपतिलघुकानां कन्यकानां शुभायः ।
हिमशयनशयालुर्भात्यजः श्रीवदर्यां ।
वनकुहरविहर्त्री पार्वती श्लाघ्यवेषा ।
विविधमहविधानैः पूज्यते शंकरी सा ।। ३४ ।।

हेमंतो नवधान्यपाकरुचिरः विप्रौघसत्कारदः ।
पुण्याहो धनुषोद्धरश्मिगमनेनानंदसत्वोत्सवः ।
कृष्णेनोच्छ्रितबाहुना निगदितं मासेषु मार्गोऽस्म्यहम् ।
पुण्येऽपुण्यति भव्यमाश्रयत भोः सन्मार्गशीर्षं शुभम् ।। ३५ ।।

## शिशिरर्तुवर्णनम्

सपातपस्यौ प्रतिहायनं द्वौ तीव्रेण तापेन महीविशोषौ ।
रविस्तदा तीक्ष्णघृणिर्नितांतं दुःसत्वमूलानि दहत्यवन्याम् । ३६ ।

तथाऽपि माकंदतरुः प्रसूनं धत्ते वसंते फलपाकसिद्ध्यै ।
निसर्गलक्ष्मीर्निजभर्तृपूजासंभारमाहृत्य पुरा तुतोष ।। ३७ ।।

माघे मासि दयाघनो दिनमणिश्चण्डांशुमाली रथा— ।
रूढः प्रस्फुरितप्रकाशपरिधिः व्योम्नि प्रयाति द्रुतं ।।
रात्रिर्दीर्घतरा दिनं लघु भवेत् क्षेत्राणि कार्पासगो-
धूमाद्युद्गघफलाकुलान्यनुदिनं नित्योत्सवश्चक्षुषोः ।। ३८ ।।

फाल्गुणेऽब्दपतिरभ्रमभ्रमं व्यभ्रमातनुत संभ्रमाज्जनाः ।
त्यक्तकामफलरागचेतसः शुद्धमात्मदयितं सिषेविरे । ३९ ।

भक्तिभासुरविरक्तिभूषया प्रीणयंति हरिमाद्यमादरात् ।
काममात्मविनिपातकारणं वह्निदग्धमतनिष्ट धूर्जटिः ।। ४० ।।

तत्प्रतीकमधुना गृहे गृहे दह्यते नु रिपुषट्कजेतृभिः ।
वीथयोऽपि सहकारपल्लवैः भूषिता ननु वसंतदूतकाः ।। ४१ ।।

जातस्य पुंसः षडिमे विकाराः शिशुत्वपौगण्डवबाल्यपूर्वाः ।
कौमारतारुण्यजरस्त्वसंज्ञाः आयांति गच्छन्ति निसर्गशक्त्या । ४२ ।

नित्यस्तु जीवो न विकारदग्धः देहस्थित. पश्यति सूक्ष्ममीशम् ।
तद्वद्वसंतादिनिसर्गनिष्ठं षट्कं विराड्देहविकारसूचि ।। ४३ ।।

एको हरिः कालगतः समष्टिव्यष्ट्या पृथग्रूपधरः सुनित्यः ।
न स्यानतोऽप्यस्य विभिन्नताऽस्ति विशेषशक्त्या बहुरूप आस्ते ।४४।

संवत्सराणामृतुमासपक्षतिथ्यादिभेदाः घटिकाः क्षणादयः ।
एकस्य कालस्य चकाशिरेऽतर्विहीनरूपाणि गुणात्मकानि । ४५ ।

विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ।
इति श्रुतिः पूर्णगुणं निसर्गे निदर्शयत्यद्भुतरूपमीशम् ।। ४६ ।।

हरिर्वसंते शिशुरूप आस्ते ग्रीष्मे तु पौगण्डववत्सुचेष्टः ।
वर्षासु बालो बहुलीलयाऽऽढ्यः शरत्सु कौमारयुवाऽपि भूयान् ।४७।

हेमंतकाले सुबलः सुपुष्टः वैराग्यभाग्यः शिशिरे सुपूर्णः ।
इत्थं जनानामपि चित्तवृत्तीर्नियामयत्यद्भुतशक्तिरीशः ।। ४८ ।।

हरिः स्वतंत्रः परतंत्रमन्यद्विश्वं विदित्वा सुखमाप्नुयान्ना ।
तत्वं तदेतत् हरिराप्तबुद्ध्या निदर्शयत्यज्ञजनाय सृष्टौ ।। ४९ ।।

## समुद्र वर्णनम्

कल्लोलैः करिसन्निभैः स्वनद्भिः ।
भल्लूकैरिव मल्लयुद्धनिष्ठैः ।।
अन्योन्यं प्रतिघट्टितैर्विरेजे ।
मेघैरिवरसद्भिरब्धिरद्धा ।। ५० ।।

प्रोद्यद्भिर्हिमशीकरैस्तुषारैरौर्वाग्निज्वलनोज्ज्वलच्छिखाभिः ।
माणिक्यैरुदरोत्थितैः प्रवालैः किर्मीरं व्यतनोद्वितानमब्धिः ॥५१॥

फणिशय्याशयनं वितानमध्ये वहुवर्णैः शफरैः कृतातिदीपं ।
सुरपूगै र्भ्रमिभिः प्रगीयमानं परिणिन्ये रमणं रमाब्धिकन्या ॥५२॥

स्वच्छंदं प्रविशंति निम्नगाः समुद्रं।
गंगाद्याः सुरसरितः सुमेरुकूटात् ॥
धावंत्यः परिषेवितुं तं गुणाढ्यं ।
संसक्तुः श्रीरमणं स्वनाथमाप्तुम् ॥ ५३ ॥

नवरत्ननिधिर्गुणैरुदीर्णः घनघोररवैर्जलैः प्रपूर्णः ।
द्रुहिणेन चतुर्मुखैः सुघोषैः श्रुतिमन्त्रैर्ननु सेव्यते विभुः ॥ ५४ ॥

रक्तापांगनिपातनेन रघुपो: यं शीर्णगात्रं व्यधात् ।
यो भीत्या तमलालयत्पृथुमतिर्वद्धांजलिः सादरं ॥
यस्तीर्णः कपिनायकेन मरुता सीतां सतीं चिन्वता ।
यः कुंभोद्भवहस्तचुल्लकगतः धन्यः स वारांपतिः ॥ ५५ ॥

तिमितिमिंगिलनक्रचक्रकक्रकचकर्तरिकृंतनोच्छ्रितः ।
सुरभिकल्पतरुरत्नसुधाश्रीहस्तिशीतलगभस्तिनिधानं ॥
विषयसक्तमतिरुद्धभावनैः संदधाति नरकादिवेदनाम् ।
विमलभक्तिमननादिचिंतनै रेधयत्यमितधी. सुखं परं ॥ ५६ ॥

नैदाघार्कगभस्तिभिर्द्युमणिना पीतः सुधां दास्यसि ।
नित्यं वाडवदाहदग्धवपुरप्यम्लानगात्रश्चिरं ॥
निस्त्रिंशं सुरदैत्यकैरपघृणं निर्मर्दितोऽप्यादरात् ।
दद्याः सर्वहिताय रत्ननवकं कोऽन्योऽस्ति दानीदृशः ॥ ५७ ॥

गंगानदीवर्णनम्

गंगा तुंगतरंगमंगलगुणा प्रोत्तुंगमेर्वग्रतः ।
निष्क्रांता हरिवामपादनखरप्रोद्भिन्नवेधोऽण्डतः ॥
पातंपातमभीशुवेगगमनात् हैमं गिरिं प्राप या ।
निर्ह्रादभ्रमनिर्झरह्लदझरीगुञ्जन्निकुंजोदरा ॥ ५८ ॥

ऋषीणामाद्यानां हृदयकुहरेक्षानतिमताम् ।
निधानं विद्यानां वहुलतपसां स्यूतिरथवा ॥
घृणास्त्रोत.सारो हरिपदरतानां धृतिमतां ।
प्रवाह. सूक्तानां पतति भुवि निर्धूतदुरितः ॥ ५९ ॥

कृपापारावारो दुरितविषवृक्षस्य परशुः ।
निलीनांधःकारक्षपणकिरणा ज्ञानसवितुः ॥
मुनीनां मौनं स्वित् प्रणिधिरनवद्योर्ध्वतपसां ।
असंप्रज्ञातेद्धश्रुतिमतिनिदिध्यासमहसाम् ॥ ६० ॥

सुधां निष्यंदंती जनिमृतिमुषीतप्तमनसां ।
हरेर्गाथां गात्री कलपदरवैर्वीचिनिचयै. ॥
जनन्युत्संगे स्वं शिशुमिव परिष्वज्य रमताम् ।
करैः प्रीत्योद्धृत्यातटभृगुपातादवतु मां ॥ ६१ ॥

या दृष्टा नयनांध्यदोषमपहन्त्री सा मुहुः स्वर्धुनी ।
स्पृष्टा भौतिकरोगसूतिनिवहं ध्वंसं नयंती भृशं ॥
मृष्टा मज्जनकर्मभर्मविधिनाऽप्याध्यात्मसंपत्प्रदा ।
ध्याता संसृतिमूलजालदहना दात्री पदं श्रीहरे ॥६२॥

भागीरथी त्रिपथगा भगीरथवरप्रदा ।
सगराणां भूतिदात्री रक्षतान्मां हरिप्रिया ॥६३॥

## हिमवत्पर्वतवर्णनम्

भारती भाति भाग्याढ्या भरतस्य सधर्मिणी ।
यां हि हैमवती देवी सेवते गिरिजा मुदा ॥६४॥

यदुत्तरस्यां काष्ठायां वर्तते हिमवद्गिरिः ।
रक्षन् पुत्रीं भारतीं च परचक्रप्रकोपतः ॥ ६५ ॥

महानुभावोऽयमथाद्रिराजः समुन्नतैः सानुभिरुद्घसत्वः ।
अभ्रंकषद्भिर्महरितोपलाभैर्विजृम्भते भव्यवपुर्महात्मा ॥ ६६ ॥

गंगा नूपुरति प्रवाहझरिभिश्चित्रैरधो धावति ।
ऊर्ध्वं शीर्ष्णि विराजते हिमततिः शुभ्रा हिरण्यप्रभा- ॥
छन्नः पौरुटकांतियुक् नृप इवाऽलक्ष्यो किरीटैर्वरैः ।
मंदैः पीतगभस्तिभि र्मृदुरवेः कल्ये वभावद्रिराट् ॥६७॥

किं कुंभकर्णः पृथुपीनगात्रः शेते धरिण्यां वनराजिमध्याम् ।
श्रांतो व्रजन् भ्रातृकुवेरहर्म्यं द्रष्टुं पथि स्वप्नहतोऽसितांगः ॥६८॥

सेव्यः सूरिभिरुग्रनिग्रहतपःसारैर्जटावल्कलैः ।
गेयः किन्नरगुह्यकादिपुरुषैर्वैहावसैः साहसैः ॥
भव्यः सानुशतैर्हिमांशुधवलैः छन्नैर्हिमानीभरैः ।
न स्तोतुं प्रभवत्यनल्पविभवं साहस्रजिह्वोऽप्यहिः ॥६९॥

विशाला संश्लाध्या मुनिभिरथ देवै ऋषिगणैः ।
कलिं निर्जित्याऽऽस्ति स्फुरदमलदेशा गुणनिधिः ॥
तपस्तप्त्वा यस्याममलतटिनीस्नानविमलाः ।
ययुः स्वर्गं सिद्धाः कुरुकुलजभूपाः पृथुधियः ॥७०॥

अलकनंदा बदर्यां श्रीनारायणपदांकिता ।
संगता पञ्चभिः पुण्यैर्निर्झरैः शोभतेऽमला ॥७१॥
हिमालयः शत्रुभिरप्रधृष्य सर्वाश्रयः सिद्धजनाभिवंद्यः ।
हिंस्रानहिंस्रानपि साम्यवुध्या कुक्षौ निधाय क्षमतेऽपराधम् ॥७२॥

वृक्षा लता गुल्मतृणादिकक्षाः सिद्धाः समाश्रित्य वपुर्महांतः ।
तर्के हरिं सेवितुमुद्घसत्वाः ध्यानंगतास्तत्र हि नित्यवासाः ॥७३॥

एवं उषःकालादारभ्य रात्रिपर्यंतं प्रवर्तितेषु विविधज्ञानकार्येषु नियोजितरतयः श्रीगुरुसार्वभौमाणामनुग्रहविशेषमाकांक्षंतः यात्रिकभक्ताः नूनं धन्यमात्मानं मेनिरे । श्रीचरणानां महापूजामहोत्सवः श्रीगुरसार्वभौमवृन्दावनार्चनं असंख्ययात्रिकभक्तानां ब्राह्मणसुवासिनीनां प्रसादीवतरणं सायंकालीनमहोत्सवाः इत्यनेके श्रीहरिगुरुभक्त्युत्तंभककार्यक्रमविशेषाः सवैभवं प्रचलिताः सप्तरात्रोत्सवे षष्ठदिनोत्सवस्य महांतं सुषमाविशेषं पुपुषुः ।

श्रीगुरुसार्वभौमसप्तरात्रोत्सवे षष्ठदिनोत्सव इति द्वादश उल्लासः ।

॥ श्री ॥

सर्वविद्याप्रवीणाय नमः

# त्रयोदश उल्लासः

## श्री गुरुसार्वभौमसप्तरात्रोत्सवे सप्तमदिनोत्सवः

महारथोत्सवानंतरं सम्मिलिताः गुरुराजभक्ताः प्रत्यहं प्रवर्त्यमानानि ज्ञानभक्तिविलसितकार्याणि पश्यंतः मनसि कुतूहलेनाऽऽवर्तयंतः केचित्स्वग्रामं प्रति निर्जग्मिरे। अन्ये पुनः समग्रोत्सवोपसहारसमारंभनिर्वर्णनेन श्रीहरिगुर्वनुग्रहविशेपमाप्तुकामाः अद्य सर्वसमर्पणोत्सवाय सन्निहिताः।

प्रातरेव यथापूर्वं सुप्रभातसेवा प्रवृत्ता गुरुराजसन्निधौ।

### प्रभातगीतानि

तारा अभ्रपथे चिरं विरलिताः आरक्तवर्णा दिशः।
कोकाः कुक्कुटकीरहंसमुखराः आलोकरावैर्मुदा॥
व्याजह्रुः शुभकीर्तनं गुरुभरो वीक्षस्व श्लक्ष्णेक्षणैः।
स्नात्वा दासवरा हरेर्गुणकथा गायंति संगीतकैः॥ १॥

ब्रह्माणं परिषेवितुं मृदुतुलस्यादानसेवां कुरु।
छात्रान् दैत्यकुमारकान् वरगिरा सत्तत्वसारं वद।
उत्तिष्ठोद्धर मध्वदेशिकमतं विष्णूत्तमत्वं गृणन्।
भक्तास्ते गुरुराघवेंद्र मिलिता गायंति गाथां हरेः॥ २॥

किं मौनींद्र हयास्यमन्त्रमनने सक्तो बहिर्नागता।
रात्रौ जागरितो दिवाऽपि समया नोचेच्छरण्यं वद॥
त्वद्भक्ता मम सेवका इति ननु व्याघोषयच्छ्रीहरिः।
तस्माच्छ्रीगुरुराघवेंद्रदयया वीक्षस्व मामुन्मिषन्॥ ३॥

तुंगा तुंगतरगिणी प्रवहति स्वच्छोदपूरेणहृ- ।
त्पूरं स्वागतमाकरोति मृदुलैः स्नानैर्गुरो धारय ॥
याञ्चां मे तव पादमूलरजसा सिक्तोत्तमांगस्यस- ।
त्तत्वं बोधय भावदीपकलया गंधं सुधासारजम् ॥ ४ ॥

क्व ते निद्रा स्वामिन् हरिपदनिविष्टात्मगुणधेः ।
समाधौ मग्नस्य क्व खलु बहिरर्थेषु विहृतिः ॥
पुरा प्रह्लादांशे शिशुसुलभलीलां विहरतो ।
नृसिंहध्याने ते सततरतिरासीदसुलभा ॥ ५ ॥

जना' स्तोकं द्रष्टुं तव हसितवक्त्रं गुणनिधे ।
शुचिस्नाताः शास्त्रश्रवणमननाविष्टमनसः ॥
समागत्यासीना. मुहुरुषसि भक्त्या गुरुगुणान् ।
मनस्यालोडंते कुरु विरहशांतिं शुभगिरा ॥ ६ ॥

अवशिष्टा' यात्रिकभक्ता. प्रत्युषस्येव तुंगातटिन्यां भद्रतरंगिण्यां यथाविध्यवगाह्य शुचित्वं संपाद्य भक्त्या श्रीगुरुस्तोत्रं पठंतः महावृन्दावनाय प्रदक्षिणनमस्कारादिसेवामनुष्ठातु प्रारेभिरे । घटिकाद्वयं यावत्सेवां संपूर्य विरामकाले संघशस्तत्र तत्र मिलित्वा पूर्वाह्णोभिरवलोकितान् वाहनोत्सव-रजतरथोत्सव-महारथोत्सव-वाक्यार्थविचार-विद्यार्थिपरीक्षा-प्रवचनादिज्ञानकार्य श्रीमूलरामपूजागुरुसार्वभौमवृन्दावनस्यालकार-महापूजा-महानीराजनं इत्यादि महाप्रसंगान् चित्ते विमृशंत' परस्परमनुवादयत. साट्टहासमनुशीलयंतश्च प्रभूतमानंदमन्वभूवन् । अद्य सायं सर्वसमर्पणोत्सवे श्रीसुयमीद्रयोगिनः भक्तजनानुजिघृक्षव' अविदितपूर्वप्रमेयसंग्रहं सर्वसंग्राहकमनुग्रहभाषणं कुर्वंति । तन्निशामयितुमुत्कण्ठितचित्ता तत्समयमेव पालयंति स्म ।

श्रीस्वामिनः तुगातरंगिण्यां प्रातरेव स्नात्वा जपपूजादिप्रातराह्निकं सपाद्य पंचामृताभिषेकादिकं श्रीगुरुसार्वभौमानां श्रीवादीद्र-सुधर्मेन्द्र-सुव्रतीद्रतीर्थानां बृंदावनेषु अर्चकमुखेनाकारयन् सर्वैभवम् ।

## "प्रमाणानां बलाबलविवेकः" इति विषयमधिकृत्योपन्यासः ।

प्रातरेव सम्मिलितायां विद्वत्सभायां कश्चित् पण्डितधौरेयः श्रीस्वामिपादानुज्ञया प्रमाणानां बलाबलविवेक. इति विषयमधिकृत्य विशदं त्रिषयगांभीर्यमुद्घाट्योपन्यासमकार्षीत् । यथा—

अतीतोपन्यासे प्रमाणानां लक्षणविभागपरीक्षादिकं तत्कार्यं च यथावसरं संक्षेपेण निरूपितम् । साक्षीद्रियस्य प्रामाण्याप्रामाण्यग्राहकत्वप्रकारोऽपिविचारितः सूचीकटाहन्यायेन । इदानी यथाप्रतिज्ञं प्रमाणानां बलाबलविवेकः वस्तुनिर्धारणेऽवश्यमपेक्षित इति तमधिकृत्य शास्त्रमर्यादया गुर्वनुग्रहेण यत्किंचिद्वक्तुमुद्यतोऽस्मि । श्रीपादाः गुणग्रहणेन मामनुगृह्णन्त्विति संप्रार्थयामि ।

प्रमाणानां परस्परविरोधप्रतीतौ का रीतिरवलंबनीया भावार्थनिर्णये किं ग्राह्यं किं त्याज्यं का वा व्यवस्था समाश्रयणीया निश्चितप्रामाण्यके विषये इत्यादिकमधिकृत्य किंचिद्विवेचयितुमुद्युज्यामहेऽस्मिन् उपन्यासे ।

प्रमाणत्रैविध्यं निर्णीतमतीतोपन्यासे । प्रत्यक्षादित्रिषु प्रमाणेषु बलाबलविवेकः श्रीविष्णुतत्वनिर्णयेऽतिमनोज्ञं सुबंधुरं निर्णीतः श्रीमदाचार्यैः ब्रह्मतर्कवचनान्युदाहृत्य । अनुव्याख्याने सुधायां सूत्रभाष्ये तत्वप्रकाशिकायां च तत्र तत्र बहुधा विचारितोऽयं विषयः सनिर्णयम् । तर्कताण्डवे प्रक्रांतोऽयं वादः बहुधा बहुमुखचर्चया । श्रीविजयीद्रतीर्थकृतोपसंहारविजये श्रीअप्पय्यदीक्षितविरचितोपक्रमपराक्रमनाम्नः ग्रंथस्य खंडनव्याजेन सिद्धांतमर्यादा प्रदर्शिता । उक्तं हि विष्णुतत्वनिर्णये आचार्यैः ।

द्विविधं बलवत्वं च बहुत्वाच्च स्वभावतः ।
तयोः स्वभावो बलवान् उपजीव्यादिकश्च सः ।।
ज्ञानं च द्विविधं वाह्यं तथाऽनुभवरूपकम् ।
बल्येवानुभवस्तत्र निर्दोषं त्वक्षजादिकम् ।।
प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ।
उपजीव्यविरोधे तु न प्रामाण्यममुष्य च ।।

—ब्रह्मतर्के (विष्णुतत्वनिर्णये) ।

प्रत्यक्षादेरागमस्य प्राबल्येऽपि नोपजीव्यप्रमाणविरोधे प्रामाण्यम्। विषयाभावे स्वस्यैवाप्रामाण्यप्राप्तेः। यद्यपि प्रत्यक्षानुमानाभ्यामागमस्य प्राबल्यमित्युत्सर्गः तथाऽपि यत्र प्रत्यक्षानुमानयोरागमं प्रत्युपजीव्यत्वं तत्र तयोरेव ततो बलवत्त्वम्। तत एव तद्विरोधे तस्य न प्रामाण्यमिति तावदंगीकर्तव्यम्। कुत इति चेत्। उच्यते। उपजीव्योपजीवकयोर्विरोधे न तदुभयं प्रमाण। वस्तुनो द्वैरूप्यापातात्। नाप्युभयं अप्रमाणम् वस्तुनो निःस्वभावत्वापत्तेः। ततोऽन्यतरस्यैवाऽप्रामाण्यमंगीकर्तुमुचितम्। येन हि यस्य विषय. सिद्धयति तत्तस्योपजीव्यम्। यथा पर्वतग्राहकं (प्रत्यक्षं) धूमानुमानस्य। तथा चोपजीवकविरोधेनोपजीव्यस्याप्रामाण्ये सति उपजीवकस्य विषयो न सिद्धयति। विषयाभावे स्वोदयाभावेन अबोधकत्वलक्षणमप्रामाण्यं प्राप्नोति। यत्स्वय नोदेतुमल नाऽपि बोधयितु कथ तदुपजीव्यमप्रमाणीकुर्यात्। अत. परिशेषात् अनपेक्षतया प्रबलस्योपजीव्यस्य विरोधेन स्वापेक्षया दुर्बलमुपजीवकमेव अप्रमाणं भवतीति सिद्धयति।

शुक्तिरजतज्ञानं हि दोषजन्यमिति सर्वैरंगीक्रियते। तदिदं दोषजन्यत्वं जन्यजनकभावस्यातींद्रियत्वात् न प्रत्यक्षेण ज्ञायते। नाऽप्यनुमानेन। इन्द्रियाणामतीद्रियत्वेन तद्दोषाणामप्यतीद्रियत्वात् दोषे सति अन्यथाज्ञानं (शुक्तिरजतज्ञानं) नाऽन्यथेति अन्वयव्यतिरेके प्रतियोगिनां दोषाणामज्ञातत्वात् नाऽन्वयव्यतिरेकयोः प्रवृत्तिर्भवति। नाऽप्यप्रामाण्येन हेतुना दोषजन्यत्वमनुमातुं शक्यते। अप्रमाणत्वहेतुः दोषजन्यत्वहेतुना साधनीयः तथा चाऽन्योन्याश्रयः। आगमोऽप्यत्र नोपलभ्यते। अत बलवत्प्रमाणविरोधादेव दोषजन्यत्वं तत्रानुमेयम्। बलवत्वं च बाधकप्रमाणस्योपजीव्यत्वनिरवकाशत्वाभ्यामिव बहुत्वेनाप्यंगीकरणीयम्। सर्वत्रोपजीव्यत्वादेरभावात्। तथा च यत् बहुप्रमाणविरुद्धं तद्दोषजन्यमिति व्याप्ति. सुदृढा भवति। शुक्तिकां रजतत्वेन दूरात्प्रतीत्य नेदं रजतं किं तु शक्तिरेवेति आप्तवाक्यं शृणोति। ततः समीपं गतः शुक्तिरेवेति पश्यति। पाटनदाहनादिलिंगेन तथैवानुमिनोति। ततो बहुप्रमाणविरोधेन एकस्य रजतज्ञानस्य अप्रामाण्यमेव निश्चिनोति। इति लोके प्रसिद्धमेव। ननु प्रामाण्ये बहुत्वमनुपपन्नमिति चेन्न। एकविषयकबहुप्रमाणसद्भावे प्रामाण्ये बहुत्वमुपचर्यते। द्वितीय-तृतीयादिप्रमाणानामनुवादकत्वप्राप्तिरिति नाऽऽशंकनीयम्। दार्ढ्यहेतुत्वरूप-

प्रयोजनसद्भावात् अनुवादस्य प्रामाण्यमंगीकर्तव्यमेव। एव बलाबल-व्यवस्थायां उपजीव्यत्व-निरवकाशत्ववत् बहुप्रमाणविरोधरूपदोषा-जन्यत्वमपि प्राबल्यगमकमिति वस्तुस्थितिः।

**प्रत्यक्षाऽऽगममाहात्म्यादनुमानं प्रमाणताम्।**
**याति नैवान्यथा तस्य नियतत्वं क्वचिद्भवेत्॥**

इति ब्रह्मतर्कप्रमाणानुसारेण त्रिषु प्रमाणेषु अनुमानस्य दौर्बल्यं सर्वथाऽभ्युपेयम्। प्रत्यक्षमागमं चानुसृत्य प्रवर्तमानत्वात् तस्य परोपजीवकत्वात्तदनुग्रहाभावे नाऽनुमानस्य नियतप्रामाण्यम्। परं अपरीक्षितप्रयत्क्षं बाह्य सदोषम् भवतीति तस्य दौर्बल्यमंगीकरणीयम्। तत् निर्दोषानुमानादिप्रतिरोधे पूतिकूष्मांण्डायते इति लोके प्रसिद्धम्। यथा शुक्तिरजतज्ञानं भ्रमात्मकप्रत्यक्ष दोषजन्यं ततोऽपि बलवता निर्दोषानुमानेन आगमेन च प्रतिरुद्धत्वात् अप्रमाणमित्यंगीक्रियते। रामकृष्णादिरूपेषु सदोषत्वप्रत्यक्षमपि निर्दोपित्वावेदकोपजीव्यागम-बाधितत्वात् अप्रमाणमिति निश्चीयते। रामकृष्णौ सदोषौ दुःखित्व-स्त्रैणत्वादिमत्वात् प्राकृतपुरुपवत्। इत्यनुमानं धर्मिग्राहकप्रमाण-विरुद्धत्वात् बाधितविषयमित्यर्थः। प्रत्यक्षस्य प्राबल्येऽपि उपजीव्य-प्रमाणविरोधात् तत् नार्थव्यवस्थापकमिति ज्ञातव्यम्। निर्दोपं च प्रत्यक्षं ययार्थमेव न कदापि केनाऽपि बाध्यमान दृष्टम्। अत एवोक्तं तत्वोद्योते 'न च प्रत्यक्षसिद्धमन्येन केनापि बाध्य दृष्टम्। चंद्रप्रादेशादिविषयं तु दूरस्थत्वादिदोषयुक्तत्वादपटु'। इति।

ननु प्रपंचसत्तागोचरं प्रत्यक्षं व्याप्तिपक्षधर्मतावदनुमानेन उपक्रमादिभिः अवगततात्पर्येणागमेनाऽपौरुपेयेण च निरवकाशेन बाध्यमानं दृष्टम्। सावकाशस्योपजीव्यस्य सर्पभ्रमस्य निरवकाशेनोपजीवकेन नाऽयं सर्प इत्युपजीवकेनाप्तवाक्येन बाध्यमानं दृष्टचरम्। सर्पभ्रमम-वलंब्य नाऽयं सर्प इति निषेधवाक्यं प्रवर्तते इति सर्पभ्रमस्योप-जीव्यत्वम्। अतः उपजीवकेन उपजीव्यस्य बाध· इति न वक्तव्यम्। अंततो गत्वा सर्पसर्पभ्रमादावपि शुक्तिरजतादाविव मूलभूतेन बलवता प्रत्यक्षेणैव विषयापहारः। नानुमानागमाभ्याम्। अनुमा-नागमाभ्यां संशयो भ्रमो वा न निवर्तते यथा प्रत्यक्षेण। तथाहि।

नीलं नभ' इति प्रत्यक्षं नभ अरूपि विभुत्वात् इत्याद्यनुमानबाध्यं दृष्टम् । प्रादेशमात्रपरिमितश्चंद्र' इति प्रत्यक्षं वहुयोजनविस्तारावेदकागमबाध्य दृष्टम् । अत. कथं प्रत्यक्षं नानुमानागमाभ्या बाध्यते इत्युच्यते इति चेत् । शृणुहि । गगनादे नोलत्वादिकं न प्रत्यक्षसिद्धम् । गगनादेः साक्षिविषयत्वेऽपि लौकिक (प्राकृत) प्रत्यक्षस्या विषयत्वात् भासमानं नीलत्वादिकं द्रव्यातरोपघातादिदोषमूलमितिवक्तव्यम् । चंद्रप्रादेशादिविषयप्रत्यक्षमपि न जगत्सत्यताग्राहिप्रत्यक्षवत् यथार्थम् । किंतु दूरस्थत्वादिदोषयुक्तत्वादपटु । अत एव तत् स्वार्थे प्रेक्षावंत पुरुष प्रवर्तयितु न क्षमते ।

जगत्सत्यताग्राहि प्रत्यक्षं अनुमानेन आगमेन वा बाध्यमानं दृष्टमिति यदुक्तं तदतीव मंदम् । विमत मिथ्या दृश्यत्वात् जडत्वात् परिच्छिन्नत्वात् शुक्तिरजतवत् । विमतं अनिर्वचनीय बाध्यत्वात् प्रमाणादृष्टत्वात् । सत्वासत्वे एकधर्मिनिष्ठात्यंताभावप्रतियोगिनी धर्मत्वात् रुपरसवत् इत्याद्यनुमानानि वाधसत्प्रतिपक्षविरोधानैकांत्यासिद्धचादिदोषकलुषितत्वात् अप्रमाणानीति बहुधा पूर्वपक्षाशयं विकल्प्य दूपितानि । व्याप्तिपक्षधर्मताद्यनुमानांगानामेव कल्पितत्वात् (मिथ्यात्वात्) तत्र सावकाशत्वनिरवकाशत्वप्राबल्यदौर्बल्यादिविचारः वंध्यासुतस्य विवाहसस्कारविचारवत् दूरतोऽपास्त: । विष्णुतत्वनिर्णये अनुव्याख्यानसुधयो: वादावल्या च विस्तरेणोपपादितोऽय विषयः सुधीभिरवगंतव्य. । एवं जगत्सत्यताग्राहि प्रत्यक्षं निर्दोषार्थेद्रियजन्य यथार्थमेव । कि नाम अप्राकृतसाक्षिवेद्यमिति न कदाऽपि बाधार्हं भवति । साक्षी नियतयाथार्थ्य कालत्रयाबाध्यत्वग्राही । अत एव वर्तमानमात्रग्राहिनिर्दोपलौकिकप्रत्यक्षमपि साक्षिणा गृहीतत्वात् न कदाऽपि वाध्यते इति विवेक्तव्यम् । त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमिति मायावादिभिरंगीकृतम् । वर्तमानकाले सत्यत्वग्राहित्वात् त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं विघटितमिति न बाध्यत्वशंका प्रत्यक्षविषये इत्यपि बोद्धव्यम् ।

अतः प्रत्यक्षसिद्धं न केनाऽपि वाध्यमानं दृष्टमिति स्थितम् । प्रत्यक्षं तु परीक्षितं अपरीक्षितस्य बाधक दृष्टमिति शुक्तिरजतरज्जुसर्पादि दृष्टांतैरुपपादितम् । सर्वमिदं लौकिकविषय एव । अलौकिकविषये तु

अतीद्रियविषये धर्माधर्मादिसि-
आगमस्यैव प्राबल्यमिति विवेक्तव्यम् । अतीद्रियविषये धर्माधर्मादिसि-
द्ध्यन्यथाऽनुपपत्त्या अपौरुषेयाऽऽगमः तदनुसारिपौरुषेयागमाश्च सर्वो-
च्चप्रमाणमित्यवगंतव्यम् । तथैवोक्तं विष्णुतत्वनिर्णये अनुव्याख्याने
गीताभाष्ये चाचार्यैः । 'पृष्टेनागम एवादौ वक्तव्य.साध्यसिद्धये ।' इत्या-
चार्यवचनं जागर्ति ।

प्रत्यक्षागमाववलंव्य प्रवर्तमानत्वात् नानुमानस्य नियतप्रामाण्यं
स्वातंत्र्येणेत्युक्तम् । परं निर्दोषोपपत्तिकत्वात् प्रत्यक्षे आगमे चांतर्भावि-
यितुमशक्यत्वात् तदुभयाऽस्पृष्टविषयकत्वात् सामग्रीभेदाच्च तस्य
प्रमाणांतरता व्यवस्थापिता शास्त्रेषु । उपजीव्यप्रत्यक्षागमविरोधे तु
अनुमानमप्रमाणं भवतीति न पुनरुक्ति सहते । आगमस्तु गृहीतसंग-
तिकः अवगततात्पर्यकः स्वार्थं बोधयितुं प्रभवति नान्यथा । दोषास्पृष्ट-
धिषणानां तु ब्रह्मादिदेवानां संगतिग्रहणे तात्पर्यविगतौ च न भ्रांतिः
पदं लभते । दोषदूषितधियां तु पुरुषाणां अर्थनिर्णये तात्पर्यविगतौ च
पर्याप्तः प्रयत्न. आधेय. । स च प्रयत्नः अनेकविधः । 'रूढिर्योगो योग-
रूढिः रूढोपचारो रूढलक्षणोपचारो लक्षणेति लोकप्रसिद्धसप्तवृत्तिभ्यः
अन्ये महायोगविद्वद्रूढी इति नवशब्दवृत्तीनां सूक्ष्मपरिशीलनेन तत्र
महायोग विद्वद्रूढ्योरत्यंतप्राबल्यमनुसंधाय पदार्थनिर्णयं सामान्यान्विता-
भिधानादिना वाक्यार्थनिर्णयं तत्राऽपि श्रुतिर्लिंगं समाख्याचेत्यादि षट्केन
अर्थव्यवस्थापनं उपक्रमोपसंहारावित्यादिना तात्पर्यमनुसंधाय सिद्धेषु
प्रमाणेषु आपाततः विरोधसंभवे सावकाशत्व-निरवकाशत्वोपजीवकत्वो-
पजीव्यत्व-बहुप्रमाणसंवाद-बाध-जात्याप्राबल्यदौर्बल्यादिगमकैः सम्य-
ग्विमृश्य प्रबलप्रमाणोपोद्बलित एवार्थः स्वीकार्यः । पौरुषेयेषु आगमेषु तु
श्रुत्याद्यबाधितप्रमाणाननुगुणं चेत्त्याज्यमेव भ्रांतिमूलमिति । बलवत्-
प्रमाणविरुद्धस्य दोषजन्यत्वनियमात् तत्वप्रकाशिकायामेवमुक्तम् ।
"विरोधे तु दुर्बलबाधकतया प्रबलं निर्णायकं । साम्ये निरवकाशेन
सावकाशं बाध्यते । स्वभावदुर्बलेनाऽपि निरवकाशेन स्वभावतः प्रबल-
स्यापि सावकाशस्य बाधो भवति । एवमेकेनानेकेषां बाधः । ननु
सावकाशत्वनिरवकाशत्वाभ्यामेव निर्णयो न स्वभावप्राबल्यदौर्बल्यं
नाम अस्ति । दुर्बलप्रबलयो. सावकाशत्वादिनियमात् । अन्यथा
वाक्यप्रामाण्यापत्तेरिति । मैवं । स्वभावप्रबलेन दुर्बलबाधने तत्प्रा-
माण्यायार्थांतरकल्पनम् । सावकाशत्वे पुन. स्वयमर्थान्तरवाचित्वमिति

भेदात् ।" इति ।

सर्वमेतत् न्यायनिबंधनात्मकब्रह्मसूत्रार्थविमर्शेनाऽवगम्यते । "शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णय." इत्युक्तेः । अधस्तात्स्पष्टीकरिष्यामो विचारममु उदाहरणैः ।

वाक्यस्य आदिरुपक्रमः । तदंतः उपसंहार । एकप्रकाराऽसकृदुक्ति अभ्यास. । प्रमाणांतरासिद्धार्थता अपूर्वता । फलवत्वं फलं । स्तुतिर्निंदापरकृतिः पुराकल्पोऽर्थवादः । तत्र गुणाभिधानं स्तुतिः । दोषोक्तिर्निंदा । एककर्तृकोपाख्यानं परकृतिः । बहुकर्तृकोपाख्यानं पुराकल्पः । युक्तिरुपपत्तिः ।

उपक्रमादिषु उत्तरोत्तरबलवत्वम् । श्रुत्यादिषु पूर्वपूर्वबलवत्वं ज्ञेयम् ।

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।**
**अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये ॥**
**श्रुतिर्लिंगं समाख्या च वाक्यं प्रकरणं तथा ।**
**पूर्वं पूर्वं बलीयः स्यादागमार्थविनिर्णये ॥**

एतेषामर्थनिर्णायकागमतात्पर्यग्राहकलिंगाना लक्षणानि प्राबल्यं च तत्वप्रकाशिका-भावदीप-तत्वप्रदीप तर्कताण्डवादिग्रंथेभ्यः अवगंतव्यानि । तत्र नाममात्रेण निर्देशः श्रुतिः । असाधारणधर्मो लिंग । निराकांक्षपदानि वाक्यं । एकप्रमेयप्रतिपादकानेकवाक्यानि प्रकरणं । अनेकप्रमेयप्रतिपादकमेकार्थे तात्पर्ययुक्तं स्थानम् । समानोक्तिः समाख्या । तत्र श्रुते. साक्षादर्थधीजनकत्वात् सर्वत. प्राबल्य । लिंगस्यानुमापकतयाऽर्थबोधकत्वात्तदानंतर्यम् । वाक्यस्यानेकार्थकथनद्वारा अर्थानुमापकत्वात् ततोऽपि दौर्बल्यम् । प्रकरणस्य बह्वर्थपरत्वेनार्थानुमितिहेतुत्वात्तदवमता । स्थानस्याति बह्वर्थकथनेनाभिप्रायतोऽर्थानुमितिजनकस्य ततोऽपि दौर्बल्यम् । समाख्याया. स्थानांतरगतायाः सादृश्यमात्रेणार्थानुमापकत्वात्ततोऽपि दुर्बलत्वम् । अत्रापि पूर्ववत् निरवकाशात्स्वभावप्रबल सावकाशस्य दौर्बल्यमित्यादि द्रष्टव्यम् ।

अत्र विरुद्धैतेषा समवाये सत्येव पूर्वपूर्वेण उत्तरोत्तरबाधयाऽऽगमार्थनिर्णयो भवतीत्यर्थः । न च यथास्थित एव क्रम. । आत्मा प्रकरणा-

दित्यत्र समाख्यायाः प्रकरणेन बाधितत्वात्। तदाह जैमिनिः श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति। भाष्यकारोऽपि वाक्यं प्रकरण स्थानं समाख्या च तथाविधेति। श्रुतिलिंगवाक्यानां साक्षाद्विप्रतिपन्नार्थनिष्ठत्वे श्रुत्यादित्वेनैव ज्ञापकत्वं। उपक्रमोपसहारयोः श्रुतत्वे तन्निश्चायकतया लिंगत्वमन्यत्र चेत्प्रकरणनिश्चायकत्वेन। उपक्रमोपसंहारावपि श्रुत्यादिना सत्यामर्थसिद्धौ तात्पर्यलिंगं। अन्यथा प्रकरणनिश्चायकौ। समाख्याऽपि साक्षाद्विप्रतिपन्ननिष्ठा समाख्यात्वेनैव लिंगम्। अन्यथा प्रकरणनिश्चायकत्वेन भवति। लिंगवाक्ययो. साक्षादसाक्षात्वेन भेदः गोत्रभिदं प्रवक्षणा अभिनत्पर्वतानामित्यादिवदिति। नन्वस्तु श्रुतेः स्वभावप्राबल्यं तथाऽपि बाहुल्येन लिंगानामपि प्राबल्यादनिर्णय एवेत्यत आह। तच्च लिंगं विष्णोरेव। न बाहुल्येऽपि लिंगानां श्रुतिसाम्येनानिर्णयः। श्रुतेर्निरवकाशत्वात्। लिंगानां विष्णाववकाशात्। सावकाशशतादपि निरवकाशस्यैकस्य प्राबल्यादितिभावः। 'शब्दादेव प्रमितः' इत्यत्र तत्वप्रकाशिकायां सुष्ठूपपादितो ऽय बलाबलविचारः। श्रुत्यादीना क्रमः तत्वप्रदीपे समीचीनतया वर्णित —

**श्रुतिर्नाम समुद्दिष्टं लिंगं तल्लक्षणं स्मृतं।**
**पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा॥**
**एकस्य प्रतिपत्त्यंगवचनं स्थानमुच्यते।**
**अन्यत्र तत्समोक्तिस्तु समाख्या स्थानमेव च॥**
**अध्यायादिप्रबंधास्तु प्रभेदा आगमस्य च। इति**

उपक्रमादीनां श्रुत्यादीनां च लक्षणविचारः ब्रह्मसूत्रार्थविवरणे तेषां सचार. सम्यक् प्रदर्शितः श्रीराघवेंद्रतीर्थगुरुसार्वभौमैः तत्वप्रकाशिका-भावदीपे प्रथमाध्यायतृतीयपादीयवामनाधिकरणे। तत्र उपक्रमादीनां श्रुत्यादीनां समवाये प्राबल्यदौर्बल्ये कथं निर्णये, को वा सिद्धातः। इति विषयः सुष्टु उपपादितः तत्वप्रकाशिका भावदीपे, वामनाधिकरणे।

उपरिनिर्दिष्टनवशब्दवृत्तिषु महायोग-विद्वद्रूढ्योः ब्रह्मवाचित्वाभ्युपगमात् ज्योतिरादिशब्दानां ब्रह्मणि समन्वयः समर्थितः ज्योतिरधि-

करणे। तत्रैव (तत्वप्रकाशिकायां) इतराणां सप्तवृत्तीनां लक्षणानि निरूपितानि। यथा।

प्रयोगमात्रवाहुल्यं रूढिः। यथा घटादिशब्दानां कुंभादौ। प्रवृत्तिनिमित्तमात्रमपेक्ष्य वृत्तिर्योग.। यथाधूमध्वजादिशब्दानामग्न्यादौ। प्रवृत्तिनिमित्त प्रयोगवाहुल्यं च योगरूढि.। यथा पंकजादिशब्दानां पद्मादौ। मुख्यार्थस्य शब्दप्रवृत्तिनिमित्तातिरिक्तगुणयोगेन वृत्तिरुपचारः। यथा लिखितसिंहादौ सिंहादिशब्दानाम्। वाच्यार्थानुपपत्त्याऽवाच्ये वृत्तिर्लक्षणा। तत्र च प्रयोगवाहुल्ये रूढलक्षणा। यथा ग्रामो गच्छतीत्यत्र ग्रामसंवंधिपुरुपे ग्रामशब्दस्य। उपचारमात्रं यथा पैंगल्यादियुते माणवकेऽग्निशब्दस्य। लक्षणामात्र यथा नदीशब्दस्य तीरे। एता वृत्तयो लोके। हरौ तु महायोगो महारूढियोगश्च।

सामान्यत. योगाद्रूढिर्वलीयसीति लोके प्रसिद्धत्वेऽपि अज्ञरूढ्यपेक्षया श्रुतिस्मृत्यादिशास्त्रसिद्धव्युत्पत्तिकविद्वद्रूढे. महायोगात्मकत्वात् प्राबल्यस्य कम्पनादितिसूत्रभाष्यटीकाया व्युत्पादितत्वात् महायोग विद्वद्रूढ्योरेवात्यतप्राबल्यमवश्यमभ्युपगंतव्यम्। महायोगविद्वद्रूढिरूपवृत्तिद्वयस्य ब्रह्मणि सर्वशब्दसमन्वयार्थमावश्यकत्वात्। तेन सर्वशब्दप्रवृत्तिनिमित्तगुणपूर्णत्वसिद्धिर्भवति।

सावकाशत्व—निरवकाशत्वाभ्यां बलावलनिर्णये तत्वमस्यादिश्रुतिवाक्यानि विषयवैशद्यायोदाहर्तुं शक्यंते। तत्रैवोपजीव्योपजीवकत्वन्यायोऽपि निर्दर्शितो भवति।

(१) जीवमनूद्य ब्रह्मत्वं प्रतिपादयंतीना त्व तदसि (तत्त्वमसि) इत्यादिश्रुतीनां उपजीव्यप्रत्यक्षविरोधात् न जीवाभेदपरत्वम्। तत्पदग्राह्यस्य ब्रह्मणः सर्वज्ञत्व श्रुतिसिद्धम्। त्व पदग्राह्यस्य जीवस्याल्पज्ञत्व साक्षिसिद्धम्। परस्परविरुद्धयोरेकत्र समावेशायोगात् धर्मिग्राहकप्रमाणविरोधाच्च तत्वमसि इति वाक्य अप्रमाण भवति। अपौरुपेयत्वाच्चोपनिपद. अप्रामाण्य सर्वथा परिहर्तव्यम्। अत. प्रतीतार्थप्रच्यावनेन सादृश्यपरतया अर्थः कर्तव्य.।

**स्वातंत्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि।**
**सादृश्ये चैक्यवाक् सम्यक् सावकाशा यतो भवेत्॥**

—अनुव्याख्याने

एवमभेदपरत्वेन प्रतीयमानस्य वाक्यस्य सावकाशत्वात् दौर्बल्यम् ।

(२) या. ब्रह्मानुवादेन तस्य जीवैक्य विदधति तासा तद्योऽहं सोऽसौ योऽहं सोऽसौ इत्यादीना उपजीव्यश्रुतिविरोधेन पूर्वोक्तरीत्या नाऽभेदपरत्वम् । तत्रापि सादृश्यपरतया वांतर्यामिपरतया वाऽर्थो व्यवस्थापनीय. ।

अधिकबलविरोधेन हीनबलमप्रमाण भवति । भेदवाक्यानि निरवकाशानि अभेदवचन सावकाशमिति प्राबल्यदौर्बल्यनिर्णयो भवति । न हि भिन्नमभिन्न भवति कदाऽपि । अभिन्नवचनं तु भेदपरतया व्याहर्तुं शक्यते इत्युक्तम् ।

परेऽव्यये सर्वे एकीभवंतीत्यादि श्रुतय उपजीव्यप्रत्यक्षागमविरोधात् च्विप्रत्ययेन वस्तुत. नैक. एक. सम्पद्यते इत्यर्थकरणे न जीवब्रह्मभेदबोधकत्वे प्रमाणं भवति ।

एवमुपजीव्यप्रत्यक्षविरोधेनाभेदानुमानाना अप्रामाण्यं साधितम् । तत्राप्रामाण्यं नाम प्रतीतार्थप्रच्यावनमेव । उपजीव्यागमविरोधात् रामकृष्णादीनां सदोषत्वानुमानं दुष्टमित्युक्तम् । क्वचित् उपजीव्यानुमानविरोधादपि आगमो दुष्टो भवति । प्रतीतार्थप्रच्यावनं वा अर्थांतरीकरण वाऽऽश्रयणीयम् । उपजीव्योपजीवकयोरुपजीवकस्य दौर्बल्यमप्रामाण्य चेत्यत्र बहु वक्तव्यमस्ति । तथाऽपि विस्तरभिया नाऽत्र प्रयत्यते । सुष्ठु प्रतिपादितोऽयं विषय श्रीन्यायसुधायां । "अनेकप्रकारोह्युपजीवभाव: । क्वचिद्धर्मिग्राहकतया । क्वचित्साध्यग्राहकतया । क्वचित्तद्ग्रहणोपयुक्ततया । क्वाऽपि स्वरूपग्रहणेन । कुत्रचित्प्रामाण्योपपादनेन । क्वचिद्व्याप्त्याद्यंगप्रतिपादकत्वेनेति । तत्र सर्वत्रोपजीव्यविरुद्धं उपजीवक बाध्यत एवेत्यादि. ग्रन्थभागे सुधीभिरवधेय: ।

एवमुक्तदिशा प्रमाणानां प्राबल्यदौर्बल्ये निर्धार्य वस्तुनिर्णय: सम्पाद्य इति संक्षेपेण दिङ्मात्रप्रतिपत्ति' कृताऽस्मिन्वाङ्मुखे । समुद्रस्नानसंकल्पवत्कृतार्थ भवति प्रतिज्ञातार्थनिरूपणं विशेषाधिगमविवित्सां जनयति चेज्जिज्ञासुषु । अर्थव्यवस्थापनेऽतीवावर्जनीयोऽयं विषय इति कृत्वा विचारजटिलताऽस्यां परिषदि उपस्थापिता । महांतोऽनुगृह्णंतु गुणग्रहणेन । इति श्रीपादानां पादकमले प्रणम्य विरमामोपन्यासको विद्वद्वर: ।

तदनु सर्वे यात्रिका· नूतनकविकाव्यस्पर्धाप्रसंगमुपवीक्षितुं स्पर्धा-मण्डपं गताः ।

तदनु कवीनां सम्मेलने पद्यनिर्माणे आशुकविताकृतौ च स्पर्धा समजनि श्रीसुयमीद्राणामाध्यक्ष्ये । वहवः कवयः स्वीयकवितानिर्माण-कौशलं झटिति श्लोकरचनेन परिषदि प्रादर्शयन्ननितरसाधारण्येन । कविरेकस्तत्र स्फुटप्रतिभापाटव· सद्यः श्लोकान् रचयित्वा परिषदः श्लाघामतुलामवाप्नोत् ।

या सृष्टिः स्त्रष्टुराद्या प्रकृतिगुणचिता विष्णुतः शुद्धसत्वात् ।
ब्रह्माऽऽभूद्वायुराद्यः रजसि पुनरमी रुद्रपूर्वाश्च देवाः ॥
त्र्यैविध्यात्तामसाच्च त्रिविधकरणतन्मात्रपूर्वा समक्षाः ।
स्पर्शाद्याश्चित्रवृत्ता जगति विततिमापुर्नुको वेत्तुमर्हः ॥ ७ ॥

सर्गोऽयं विविधो विचित्रविभवः विष्ण्वैकहस्तांकितः ।
नित्यं तन्नियतः क्षणादिषु रतस्तच्छासने त्वादृतः ॥
वायुर्वाति रविः प्रतापति भृशं स्वच्छंदकांत्या विधुः ।
लोकं ह्लादयति प्रसह्य दहति प्रत्नोऽग्निरद्धांवरे ॥ ८ ॥

तारास्तारचराः स्फुरंति नियतं षाण्मासिकं चायनं ।
आरात् षड्तव. स्वकार्यनिरताः वासाः समक्षास्तिथि-॥
व्रातैः साकमनुद्रुता जगदिदं श्रीशप्रशस्तौ स्थितं ।
तल्लीलां ननु क क्षमो निगदितुं वेत्तुं तथा तत्वत· ॥ ९ ॥

अन्यः कविः साटोपमागत्याऽऽहः—

जीवान् जीवयति प्रदाय बहुधा स्वान्न सुमृष्टं मही- ।
सस्याढ्या जलदा जलं प्रशमनं तृष्णा बुभुक्षाहरं ।
नद्यां पापविनोदनैः सुमधुरस्वादै रसैस्तृप्तिदैः ।
सर्वः स्वीयगुणानुदानविधया विष्णुं पर सेवते ॥ १० ॥

अपरोऽपि मेधावी कविः स्पर्धया कवते—

चक्षुः पश्यति रूपमभ्रगुणमत्याकर्णयत्यंजसा ।
श्रोत्रं जिघ्रति नासिका परिमल जिह्वा रुचिं गाहते ॥

त्वक् स्पर्शं च तथैव कर्मकरणान्याकुर्वते यद्वशात् ।
चेष्टास्तं विभुमप्रघृष्यवचनं पूर्णं हरिं नौम्यहम् ॥

ततः श्रीपादाः सम्मिलितान् कविवरेण्यानभिनन्द्य दक्षिणाभिर्विपुलाभिस्तान् सत्कृत्य स्वकुटीरं प्राप्ताः । किंचिद्विश्रम्य मठाभ्यंतरे स्नानगृहे उष्णोदकेन स्नात्वा श्रीमन्मूलरामचंद्रसपर्या सवैभवं यथाविधि निर्वर्त्यालंकारमण्डपे ब्राह्मणान् अर्घ्यपाद्याद्युपचारैः संभाव्य श्रीगुरु सार्वभौमवृंदावनं प्रति प्रस्थिताः । तत्र श्रीगुरुराजं पूजयित्वा भैक्षं दत्वा महानीराजनमकार्षुः । तथैव वादींद्र-सुधर्मेंद्र-सुव्रतींद्रगुरूणां ससत्कारं भैक्षं प्रदर्श्य नीराजयित्वाऽलंकारमण्डपमागत्य ब्राह्मणेभ्यः तीर्थमंत्राक्षतादिप्रसादं अनुजगृहुः । अलंकारब्राह्मणेभ्यः सुमृष्टान्नं दत्वाऽवशिष्टभक्तजनकूटाय तीर्थं दत्वा स्वस्थानमागताः । ततः पृथक् निक्षिप्तं तीर्थं प्राश्य गंधाक्षतादिभिरात्मानमलंकृत्य भैक्ष्यं स्वीचक्रुः श्रमविश्रांतिमनुभवंतः ।

अपराह्णे जनाः स्वं स्वं ग्रामं जिगमिषवः 'यात्रिका' पात्रेण क्रीतेन सनाथैः प्रस्थातव्यमिति लोकरीतिमनुसृत्यापणवीथ्या पदार्थक्रीणनाय संचरंतः वणिग्भिः साकं व्यवहरंति स्म । केचिच्स्टीलभाण्डान् केचित्पित्तलभाण्डान् केचिद्वस्त्राणि क्षौमानि अन्ये पुनः शिशुविनोदनाय नानाविधानि दारुमयानि धातुनिर्मितानि पुत्थिकानि वा क्रीडनकानि प्रभूतधनव्ययेन व्यक्रीणन् । चित्रविचित्रसंभारभूयिष्ठान् आपणानवलोक्य कवयः बहुधा वर्णयामासुः ।

अपराह्णे सर्वसमर्पणोत्सवः जगत्कल्याणप्रार्थना रात्रौ पूर्वयामे श्रीमूलरामचंद्रसायंपूजा दीपोत्सवाश्च सवैभवं निर्वर्तिताः । समग्रवृन्दावनभवनानि बाह्यांतरांगणानि सौधशिखराणि चक्षुःप्रसरं यावत् घृताक्तदीपैः प्रज्वलितानि प्रकाशंते स्म । तदैव तुंगातरंगिण्यां प्रज्वलद्दीपपंक्तयः प्रवाहे वाहिताः रात्रौ विश्वमखिलं सग्रहनक्षत्रमंबरं गर्भे दधारेवाभासत तरंगिणीक्रोडदंष्ट्राग्रजा तुंगा । कवयः प्रकाममिदं मनोज्ञं दृश्यं मुक्तकण्ठं व्यावर्णयन् शब्दार्थालंकारभूयिष्ठैः पद्यैः नवरसमाधुर्यनिष्यंदिभिः । अत्रैव तेषां मेधा एधावभूव । चमत्कृतिः मानुषधीगतिमतिक्रांता दैवं प्रभावमाविर्भावयति ।

## सर्वसमर्पणोत्सवः

श्रीगुरुवर्यानुज्ञया अर्चकैः नीलहरितमाणिक्यमणिवज्रखचितायां कलधौतदोलायां श्रीगुरुराजानां प्रतीकमादाय उत्सववृंदावनेन साकं उपवेशित । ब्राह्मणाः वेदमंत्रान् पठंतः दोलां कंपयामासुः । अतीव मनोज्ञोऽयं संनिवेशः स्मर्तुं द्रष्टुं च मनोनयनयोराप्यायमानः समभूत् । समग्रसप्तरात्रोत्सवस्य सांगत्यसिद्धयै सर्वकार्यकलापः श्रीगुरुसार्वभौमांतर्गतश्रीनृहरि-वेदव्यास-कृष्ण-रामचंद्ररूपाय परमात्मने भक्त्या समर्पितः विगताहंभावैः श्रीसुयमीद्रगुरुचरणैः सहर्षम् । तस्मिन् पुण्यतमेऽवसरे श्रीसुयमीद्रगुरवो भक्तानुद्दिश्यात्यतं हृदयस्पर्शि भाषणमकार्षुर्यन्मननं अज्ञाननिदानं संसारांधतमसं निवारयति अपुनरावृत्तये ज्योतिर्मार्गमाविष्करोति । मनोमाद्यमधरीकरोति । मोहमहिमानमनूनं विगमयति । विज्ञानभास्करमज्ञानमेघवननिलीनमलघुप्रभूतप्रभासंदोहेन विपुलयति विशालम् । यथा—

अस्माकं परमप्रीतिभाजनानि गुरुराजसपर्यासमुत्सुका परमधार्मिका बुभुत्सव. सम्मिलिताः यात्रिकभक्ता. तुंगातरंगमंगलनिर्मलांभसि सुभगावगाहनेन तदभिमानिदेवताप्रसादेनासादितपावित्र्याः जपपारायणप्रदक्षिणाप्रणतिभि. महतां समागमसंभाषणदर्शनपादस्पर्शनाद्यविगीत कर्मपरिचर्यैः संवर्द्धितज्ञानार्कप्रदीपाः श्रीगुरुसार्वभौमश्रीराघवेंद्रतीर्थपूज्यपादानामनुग्रहैकपात्रमभूवन्निति निश्चप्रचम । महोत्सवोऽयं सप्ताहावस्थायी निरपह्नवं संभ्रमेण संपूर्तिमलमाटीकत विगताटोपाडंबरं निष्प्रत्यूहम् । श्रीगुरुराजसन्निधौ विग्रहेणाऽऽत्मानमुपस्थापयंतः सर्वे चतुर्मुखमुखलेखाः सभार्याः अखर्वतेजोनिक्षेपाः भव्यमिदं क्षेत्रमपवर्गपदसममकुर्वन्निति सप्रमोदमाकलयामः । अस्मात्पुण्यभवनात्प्रतिनिवर्तमानाः भवंतः सर्वे हृदि कुर्वंतु निखातमस्मदुपदेशसारमवद्यविदूरं पूर्वाचार्यजुष्ट शिष्टानुशिष्ट भूतिकामाः ।

भगवान्नारायण. सत्वरजस्तमोरूपां प्रकृतिमुपायनीकृत्य स्वमाययाऽचिंत्याद्भुतशक्त्या लक्ष्मीदेवी चेतनप्रकृतिं निमित्तीकृत्य जगदिदं ससर्ज जीवानां स्वरूपगुणाविर्भावाय । अयं च विहार एव भगवतः स्वरमणस्य परार्थैकप्रवणः न स्वप्रयोजनसापेक्षः ।

स्वक्ष्ये हि चेतनगणान् सुखदुःखमध्यसंप्राप्तये तनुभृतां विहृतिं ममेच्छन् ।
सोऽयं विहार इह मे तनुभृत्स्वभावसंभूतये भवति भूतिकृदेव भूत्याः ॥

श्रीहरेः परमात्मनः परमदयालोः संकल्पोऽयमुदात्तः सर्वैर्बुभूषुभिरवगंतव्यः यथार्थतः । विदितचरमेव सप्ताहमहोत्सवे वाङ्मुखेषु विद्वद्भिः प्रतिपादितं तत्वजातं प्रतीपमतनिरासेन वेदांताचार्यैः श्रीबादरायणमुनिभिर्यत्सिद्धांतितम् । वादिषु वैदिकाः वैदिकाभासाः अवैदिका नास्तिका इति त्रिविधाः संति प्रधानाः तत्वचिंतनरताः । तत्र वेदप्रामाण्याभ्युपगंतारो वैदिका इति प्रतीताः । तदन्येऽवैदिकाः चार्वाकार्हतसौगतादयः । आद्येषु सांख्य-योग-वैशेषिक-मीमांसकाऽऽगमिकादयः वैदिकाभासाः यतस्तेऽपरीक्षितदृश. वेद आपातप्रतीतिस्वैरव्याख्यानाभ्यां कदर्थीकृत्य वस्तुतत्वात्प्राच्याविरे । परमवैदिकास्तु श्रीबादरायणाचार्या एव वेदविभागेन वेदव्यासनाम्ना जगति प्रसिद्धिमातेनिरे । ते एव स्वय सज्जनानुजिघृक्षया वेदार्थनिर्णयाय ब्रह्मसूत्राणि न्यायग्रथनात्मकानि अष्टादशपुराणानि (तत्र षट्सात्विकपुराणान्युपादेयानि, अन्यानि राजसतामसानि मिश्रज्ञानविपरीतज्ञानौपयिकानि तत्तदधिकारिविवक्षया तेषां स्वरूपप्रकाशाय निर्मितानि) ब्रह्मकर्मादि सहकारिसाधनानि च व्यरीरिचन् । तत्र तथाऽपि स्वरूपगुणानुबधेन परमात्मेच्छया च अनेके प्रतिवादिनः समुत्तस्थिरे विपरीतमतिमातन्वानाः । सर्वानपि वैदिकसिद्धांतपरिपंथिनः दुर्वादिनः निरस्य श्रीमदानंदतीर्थभगवत्पादाः बादरायणमतमाविरकुर्वन् सप्तत्रिंशतिकृतिरत्नानि विरचय्य । तेषां सारसंग्रहः भवतां व्युत्पित्सूनां सुखबोधायातीतसप्तरात्रोत्सवोपन्यासेषु समर्हणीकृतः विद्वद्वरैरुपन्यासकैः । तदेतत्संगृह्यास्माभिः सुलभावगाहायानूद्यतेऽधिकप्रमेयविशेषलेशसनाथम् ।

श्रीहरिः गुणत्रयसमिश्रणेन त्रिवृत्करणेन पंचीकरणेन वा जीवानां स्वरूपगुणानुगुणं सुरनरोरगादिभेदभासुरं जगदिदं ससर्ज । जीवाः अनादिकालतः लिंगदेहानुबद्धाः स्थूलदेहसनाथीकृताः ज्ञानेंद्रिय-कर्मेंद्रियमनोबुद्धिसामग्रीसमन्विताः येन सात्विकजीवस्य नैजबीजरूपेणावस्थितज्ञानानंदादिबलं अभिव्यज्येत प्रफुल्लानुभवपदमारोहेत च । इयमेव मुक्तिर्नाम यद्गुणनिमित्तमन्याभावमुज्झित्वान्यथास्वरूपेणव्यवस्थि-

तिः। गुणनिर्मितसंसारकांतारे संचरंतो जीवाः सात्विका विस्मृतस्वरूप-सामर्थ्याः महत्समागमतदुपदेशवलेन च स्वस्रष्टारमधिगम्य गुणा-नुवंधिसत्वरजस्तमःकार्याण्यनुसंधाय तन्निमित्तमहं ममतासंमोहं त्य-क्त्वा स्वस्वामिभावेन विंवप्रतिविंवसंवेदनेन परमात्मानं विदित्वा स्वपारतंत्र्यं स्रष्टु· परमात्मनः स्वातंत्र्यंचानुसंधातुमर्हंति।

य एतत्परतंत्रं तु सर्वमेव हरेः सदा।
वशमित्येव जानाति संसारान्मुच्यते हि सः॥

जीवेषु स्वरूपगुणानुवंधितारतम्यं सर्वथा नान्यथयितुं शक्यते। शिष्टमिदं प्रमेयजातं सर्वेषां विवेकिनां प्रत्यहमनुभवपदमारोहत्येव सूक्ष्मदर्शिनां नाऽस्त्यत्र विसंवाद. कदापि कुतश्चन। यथा दर्पणे प्रति-विंवितमस्मन्मुखाद्यवयवजातं छायेव विंवमनुकरोति। अत्राद्वैतिनो दर्पणरूपोपाध्यपगमे प्रतिविंवमपसरति। विंवमात्रमवाशिष्यते। तद्व-ज्जीवब्रह्मभावस्योपाधिकत्वेन अज्ञानरूपोपाध्यपसरणे (अज्ञाननाशे) ब्रह्मैवावशिष्यते। जीवादिजगदिदं ब्रह्मैक्यमाप्नोति। अतः ब्रह्मैव सत्यं अन्यन्मिथ्या इति तर्कयंति। परं तन्न चारु। अप्रामाणिकं प्रमाण विरुद्धं च। उपाधेर्नित्यत्वात् ब्रह्मवत्स नैवापसरति। अतः जीवब्रह्म-भावः नौपाधिकः जपाकुसुमसंनिधौ स्फटिकस्य रक्तिमावत्। किंतु स्वभाविक एव। नित्य पारमार्थिकसत्य एव। जीवस्वरूपमेवात्रालौ-किकोपाधिः। विंवस्यैक्येऽपि प्रतिविंवानां नानात्वं नित्यजीवस्व रूपोपाधिवैचित्र्यनिमित्तं। '॥ आभास एव च॥' इतिसूत्रभाष्ये 'रूपंरूपं प्रतिरूपो वभूव' इति जीवस्येश्वर'प्रतिविंवत्वमभिधाय-'द्विरूपावंशकौ तस्य परमस्य हरेर्विभो.। प्रतिविंवांशकश्चाथ स्वरूपांशक एव च। प्रतिविंवांशका जीवाः प्रादुर्भावाः परे स्मृता'। प्रतिविंवेष्व-ल्पसाम्यं स्वरूपाणीतराणि तु।' इति वाराहवचनमुपन्यस्तम्। अत्र ज्ञानानंदाद्यात्मकत्वरूपकिंचिद्भगवत्सादृश्यम्। सत्तया मुख्यांशसादृश्य मिति विवेक्तव्यम्। सोपाधिरिंद्रचापो यथा रवेः। इति पैंगिश्रुत्या जीवस्य लोकसाधारणसोपाधिकत्वं न। किंतु इंद्रचापो यथा रवेरित्युक्त-रीत्या स्वयमेव स्वस्योपाधिर्भवति। अंशो नानाव्यपदेशादिति सूत्रेऽपि अंशस्य स्वरूपांशत्वं विभिन्नांशत्वमिति द्वैविध्यमुक्तम्। तत्र दृष्टांतः

'प्रकाशादिवन्नैव पर:' इति सूत्रम्। 'मत्स्यादीनां जीवानां च परमेश्वरांशत्वस्य साम्येऽपि तस्य नैकप्रकारता। किंतु मत्स्याद्या स्वरूपांशाः एव। जीवा विभिन्नांशा एवेत्यत्रासंभावनानिरासाय प्रकाशादिवदिति सूत्रकृता दृष्टांतो दत्त इति सुधायामुपपादितम्। एवं च प्रतिबिंबत्वं नाम तद्भिन्नत्वे सति तदधीनसत्ताकत्वम्। तच्च स्वाभाविकं पारमार्थिकम्। न तु परोक्तरीत्या मिथ्या। 'ममैवांशो जीवलोके जीवभूतः सनातनः।' अत्र जीवपक्षे अंशत्वं परमात्मभिन्नत्वे सति तदधीनसत्ताकत्वं बोध्यम्। परमात्माधीनजीवस्य स्वेच्छाधीनप्रवृत्तिमत्वरूपस्वातंत्र्यं न सर्वथोपपद्यते। अन्यथा हिताकरणं अहितकरणं च न प्रसज्येत। कथमयं नित्यसुखी न स्यात्। हिताकरणादिदोप प्रसक्तिश्च। जीवस्य कर्तृत्वं तु परमात्माधीनमेव। यथा च तक्षोभयथा इतिवत। तक्ष्णः गृहनिर्माणे सत्यपि स्वातन्त्र्ये तत्तु तत्स्वामिनियतमेव पराधीनम्। तद्वज्जीवोऽपि पराधीनकर्ता जीवस्य ज्ञानानंदादिरूपत्वं स्वाभाविकमपि न प्रयत्नं विनाऽनुभवारूढं भवति। 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' इत्यादिसूत्रेपु ज्ञानानंदादिरूपत्वं पूर्वमनभिव्यक्तं मुक्तौ ईश्वरप्रसादादभिव्यज्यते इति प्रतिपादितं। तदभिव्यक्तये साधनसंदर्भः प्रसक्तः। परमात्माधीनत्वाज्जीवस्य तत्प्रसादः सपाद्यः मोक्षेच्छुना जीवेन। ब्रह्मजिज्ञासया ज्ञानं ज्ञानेन प्रसाद (ज्ञानी प्रियतमोऽतो मे—इति गीतावचनं) प्रसादादेव मोक्ष। प्रसादो नामेश्वरेच्छाविशेपः। अहमेन मोचयामीति। यमेवैष वृणुते तेन लभ्यः। अत्र वरणं प्रसाद एव। ज्ञानादेव तु कैवल्यमिति मायावादिनः वदंति। अज्ञाननिवृत्तिरेव मोक्ष। अविद्याऽस्तमयो मोक्षः इत्युक्तेः। स च ज्ञानेनैव संपद्यते। यथा दीपेन तमो निवृत्तिः। अत्र क्वेश्वरप्रसादस्यावकाशः इति। तन्न सर्वथा समंजसं। ज्ञानाज्ञानयोर्जडत्वान्नते क्रियाजननशक्तिमती। पुरुपश्चेतनोऽपेक्षितः। स च परमचेतन. श्रीहरिरेव। नाऽपरे तदधीनाः ब्रह्मरुद्रादयो जीवाः। नाऽपि जडा प्रकृतिः। कर्तृत्वशून्यत्वात्। श्रीहरिप्रसादस्तु तत्प्रीतिसाध्यः। प्रीतिश्च भक्तिसापेक्षा। 'भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित्।' न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात्। तत्प्रीणनान्मोक्षमाप्नोति सर्वः ततो वेदास्तत्परा. सर्वे एव' इत्युक्तेः। परमात्ममाहात्म्य-

ज्ञानादेव भक्तिरुदेति । भक्त्यर्थं भगवन्महिमोक्तिरित्याचार्यैरुक्तम् । सर्ववेदाध्ययनेन परमात्मन. गुणपूर्णत्वमवधार्य भक्त्या भगवदाराधनं कार्यम् । स एव परमो धर्मः । 'धर्मः प्रोज्झितकैतवोऽत्र परमः' । इति भागवतवचनात् वर्णाश्रमविहितधर्म एव भागवतधर्मः भगवत्प्रीतिकरः ब्रह्मार्पणानुसंधानेन फलापेक्षां विनाऽनुष्ठितः । श्रवणमननिदिध्यासनरूपयोपासनया ज्ञानमुत्पद्यते । तेनात्यर्थप्रसादः । ततो मोक्ष इति जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते इत्याचार्यैरनुव्याख्याने व्यवस्थापितम् । अत्र सर्वत्र अधिकारिणामेव मोक्षमार्गे प्रवेशः न मत्सरधियां शठानां वेदमार्गपरिपंथिनाम् । अत. सर्वैः समचित्तैः शमदमादिमद्भिः भाव्यम् ।

हे गुरुराजानुव्रताः श्रीहरिगुरुभक्तिपरायणाः, सावधानमालोडयत्विदं पीयूषसदृशं दैत्यबालकेभ्यः प्रह्लादेनोपदिष्ट वचनजातम् । देवर्षिनारदानुशिष्टः प्रह्लादो दैत्यबालक· श्रीलक्ष्मीनृसिंहं साक्षात्कृत्य परमपुरुषार्थमासेदिवान् । शृणुतेमं तत्वसारम् ।

मानुषं जन्मेदमसारं नश्वरं च । 'शतायुर्वै पुरुषः' इति वचनेन शतवर्षायुर्मानवतोऽपि पुरुषस्यार्धं रात्री गलति । पंचाशद्वर्षपूर्वरितेषु शैशवबाल्यकौमाराद्यवस्थास्वज्ञानदशायां विवेकविधुरतया जीवजडेश्वरस्वरूपमवगंतुमक्षम· कार्याकार्यं न जानाति । क्रीडामात्रासक्तः अंधेनैव नीयमानो यथांधः इति प्रयोजन विना कालं क्षिपति । यौवनं तु कामाद्यरिषड्वर्गस्य विहारभूमिः । शिष्टोपदेशस्योपरक्षेत्रं । विवेकविधुरतायाः ताण्डवरंगः । ब्रह्महत्यास्वर्णस्तेयसुरापानपरांगनालिंगनादिमहापातकोपपातकादिदुरितानि लब्ध्वाऽऽत्मान प्ररोहंति निर्बाधम् । वार्धक्ये तु जराव्याधिकाममोहपरीतेनाऽऽत्मनः श्रेयो विधातुं न जातु पार्यते वराकेन संसारांधतमसाऽवकुण्ठितेन । अहो पश्यध्वं मतिवैषम्यं दैत्यात्मकविषयाकृष्टचित्तवृत्तीना बालिशमानुषाणाम् । यतध्वं संगतशक्तिभिरात्मानं विमोचयितु संसारनक्रक्रकचचक्राद्दुरंताधिरोहात् । जानीत सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुंबारामः । क्षणलवत्रुटीक्षेपमविलंब्य जन्मप्रभृत्येव यदा कर्मानुष्ठाने उपचितांगः संपद्यते तदैव-कुमारावस्थायामेव कुर्यामिति

भगवत्प्रीतिकराणि कर्माण्यनुष्ठेयानि। कौमारे आचरेत्प्राज्ञः धर्मान् भागवतानिह। संप्रति भोगानुपभुज्य यथाऽवसरं वार्धक्ये धर्माचारे मतिं कुर्यामिति न वृथाकालः अतिपातयितव्यः। दुर्लभं मानुषं जन्म। तदप्यध्रुवं अर्थदम्। अनिष्टनिवृत्तीष्टप्राप्तिरूपपुरुषार्थार्जने हरिपादस्मरणमेव शरणम्। किं च दुःखपंकमग्नः कथं स्वयं दुःखाद्विमोक्तुं अन्यान्विमोचयितुं वा प्रभवेत। सर्वं दैववशम्। अनुष्ठितोऽपि प्रयत्नः दैवबलविहीनश्चेत् न फलिष्यतीति न पुनरुक्ति क्षमते।

महाप्रयत्नवर्जिता हरेरनुग्रहोज्झिता।
महानुभाववर्जिता न जग्मुरुन्नतिं जनाः॥
प्रयत्नमेकमग्रतो विधाय भूतिमाप्नुमः॥

इति वाय्ववतारेण पाण्डुनंदनेन भीमसेनेन श्रीहरिकृपापोषिताः सत्वशालिनो वयं समरे कौरवबलं प्रधृष्य हत्वा साम्राज्यमाप्नुमः इति स्वसिद्धांतः श्रीकृष्णाभिमतः उद्घोषितः।

किं तत्कर्म कथमनुष्ठेयमिति प्रश्नस्य समाधिः पूर्वमेव दत्ता। अमाययाऽनुवृत्त्या, प्रोज्झितकैतवेन भागवतधर्मेण श्रीहरिसेवाऽनुष्ठेया। नाऽहं कर्ता हरिः कर्ता तत्पूजा कर्मचाखिलं। इति सायंप्रातः नक्तं दिनं प्रतिक्षणं क्रियमाणं कर्म निष्कामं ज्ञानपूर्वं श्रीहरिप्रसादाय तस्मिन् समर्पयेत्। सतां प्रीतिकरो धर्मोह्यधर्मस्तद्विपर्ययः। अतः स्वस्ववर्णाश्रमोचितः फलाभिसंधिं विना भगवदर्पणबुद्ध्या क्रियमाणो धर्म एव भगवत्प्रीतये कल्पते।

न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मनाम्।
आत्मत्वात्सर्वभूतानां सिद्धत्वादिह सर्वतः॥

इति प्रह्लादेन ऋजुः पंथाः प्रदर्शितः स्वयूथ्येभ्यः दैत्यबालकेभ्यः। हे भक्तवरेण्याः। आत्मन्यात्मानं पश्यध्वं। सावधानमात्मनोंतःकरणवृत्तीः शोधयध्वम्। ताः किं नीचवृत्त्या कामलोलुपाः सत्यः परमात्मानं विमुखीकुर्वत्यः अंधकारगर्ते आत्मानं पातयंति उत विषयापसदान् दूरतः निष्कास्य दैवीः शक्तीः प्रबोधयंत्यः विरक्तिभक्तिपथेन शुभोदर्केण परमात्मोपासनाय कल्पंते। इति विमृश्य दुष्टशक्तीः अपसार्य

हठादाक्रांतवतोऽसुरान् स्वहृदः दूरतः निःसारयत । ततः ईश्वरेण सृष्टि-काले तत्तदिंद्रियेषु अभिमानितया प्रेरकतया क्लृप्ता. देवता' स्वस्वा-धिष्ठाने स्थिताः विहितव्यापारान् कारयंति । श्रीहरिदूतास्ते देवाः अधिकारिणं जनं स्वोचितमार्गे प्रवृत्तिमंतं कुर्वते । तेन भागवतधर्मः प्रतिष्ठितो भवति । तदनुष्ठाता च न स्खलति सुपथात् शिष्टादृतात् । सुखभाक् च भवति ।

कलिकालिम्ना दूषितेऽस्मिन् काले भवद्भिः सर्वथाऽवहितैः भवित-व्यम् । आसुर्य' शक्तय' साधुजनानवस्कन्द्य भृशं पीडयंति । भागवत-धर्मः जनहितपरिपंथीति वृथा प्रथां प्रसारयंति । दुरितप्रचोदकाधुनि-कविज्ञानशास्त्रमहिम्ना तत्र तत्र युक्त्याभासैः साधुजनान् अधयति अव-हेलयति च । अथाऽपि हरिगुरुशरणा भवंत प्रमाणपूत स्ववर्णाश्रमो-चितं भागवतधर्ममपरित्यज्य दांभिकवृत्तिमुज्झित्वा विषयसुखकामना त्यक्त्वा शुद्धाभिसंधिना श्रीहरिप्रीत्यर्थं सर्वं विहितं कर्म कुर्वंतु ।

**अनन्याश्चिंतयंतो मां ये जना पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।**

इति श्रीकृष्णपरमात्मना दत्तं समाश्वसनं हृदि धारयंतु । 'युध्य-स्व विगतज्वर.' इति निर्भयं धर्ममार्गे प्रवर्तंताम् । स्वार्थं मनसि निगूह्य बहिःपरार्थमिति प्रकाशयंतो विप्रलंभका. गलग्राहं निर्वासितव्या. । वंचना कथंकारं जनमनोरगमजसांचितुमुत्सहते । तन्नि.सारणार्थमेव श्रीहर्यनु-ज्ञयाऽऽसुरी शक्तिरुदयमालभत साधूनपि पीडयति इति जानीमः । देवा-सुरयुद्धं देवबलप्रकर्षप्रकटनाय किल भगवताऽघटितघटनापटीयसा प्रव-र्तितं मर्त्यशिक्षणाय कृतावतारेण । अचिरेणैव धर्मसंस्थापनायावकाशं कल्पयति कलिना प्रचोदितोऽधर्म इति विभाव्यताम् । सुखं हि दुःखान्य-नुभूय शोभते' इति हि प्राचां वचः चकास्ति । हिरण्यकशिपुः महादैत्यः धर्मप्रवर्तकस्य हरिभक्तस्य प्रह्लादस्य जनक' किल । कलियुगात्यये कृत-युगस्यावसरः संपद्यते इति सर्वेतिहासपुराणपरिणतानां विदितचरमेव । अतः ज्ञानिनमपि मूकयितुं प्रवृत्तोऽधर्मः आगामिनो धर्मयुगस्य दूत इत्यवधार्यताम् ।

धर्मसंस्थापकस्य श्रीप्रह्लादस्यापरावतारः श्रीराघवेंद्रगुरुसार्वभौमः

व्यासकूट-दासकूटप्रचयमुपाचिन्वन् चकास्ति जगतीतले ज्ञानभक्ति-विरक्तिपथजीवातु कलियुगेऽस्मिन् । अतः सप्तरात्रोत्सवे सन्निहितैः भवद्भिः प्रह्लादस्योपदेशसारं नारदोपदिष्टं श्रीहरिसाक्षात्कार-निदान भक्त्या श्रुत्वा मत्वा ध्यात्वा च श्रेयोभाग्भिर्भवितव्यम् । इति अस्मदुपास्यगुर्वंतर्गतमुख्यप्राणांतर्गत श्रीमूलरामचंद्रं प्रणम्य तच्चरणपङ्कजे सप्तरात्रोत्सवफलं समर्प्य जगत्कल्याणं प्रार्थयंतो विरमामः । इति नारायणस्मरणानि ।

सशिष्या. श्रीपादाः श्रीगुरुसार्वभौमवृन्दावनसन्निधि प्राप्य महानीराजनमन्त्रपुष्पाद्युपचारैः पूजयित्वा प्रणतिततिपुर.सरं श्रीहरि-गुरुभक्तिमचलां गुरुसेवां च प्रार्थयामासुः ।

**श्रीगुरुसार्वभौमसप्तरात्रोत्सवे सप्तमदिनोत्सव इति त्रयोदश उल्लासः ।**

॥ श्री ॥

इष्टार्थसमृद्धिप्रदाय नमः

# चतुर्दश उल्लासः

## श्री पंचमुखीप्राणदेवसंदर्शनं चम्पूसमर्पणं च

श्रीपादानामनुग्रहभाषणं ह्यः रात्रौ श्रुत्वाऽतीव हर्षभरेण चेतसा गुरुसार्वभौममहिमानमनुगृणतो यात्रिकभक्ताः तुंगातरंगिणी तीर्त्वा पादचारेण प्रत्यंतशैलकुहरे स्वयंव्यक्तं पंचवक्त्राजनेयं दर्शनपूजादिभिः सेवितुकामाः तरीयंत्रेणापरं पारमाययुः। ततः क्रोशद्वयादर्वाक् पंचवक्त्रान्जनेयशैलं तपस्विनिधानं जगति श्रीवायुसेवयाऽभीष्टानि पूरयितुकामैः सदा सेव्यमानं परिशोभते। यत्र श्रीगुरुसार्वभौमाः वत्सरद्वयमांजनेयमुपासांचक्रिरे इति निविडा गाथा भक्तिमुद्रेकयति। तत्रैव गुहायां गुरुराजाना उपासनापीठं अद्यापि 'रायरगद्दिगे'' (गुरुराजस्य आसन)इति प्रसिद्ध दरीदृश्यते। तत्रैवास्मत्प्रपितामहाः यरगेरिपण्डितवेकटाचार्याः द्वादशाब्दं तपः कृत्वा श्रीहरिवायुगुरुप्रसादं प्राप्तवंतः। अंत एव तेषां पंचमुखहनुमद्भजकः इति गृहनाम रूढं भूत्वा तद्वंशस्य पंचमुखीत्युपनाम प्रचलितं व्यवहारेषु। तद्वंशजोऽहं श्रीगुरुराघवेंद्रपदपंकजदत्तचित्तः श्रीसुयमींद्रमुनिभिः चम्पूप्रबंधनिर्माणे नियुक्तो गुर्वाज्ञां पूरयित्वा यथाविभवं तं समर्पयितुमभिलषामि।

सर्वे वयं यात्रिकभक्ताः अनुतुंगातटं गाणधाळ इति ग्रामपरिसरे प्रत्यंतपर्वते विराजमानं प्राणदेवं द्रष्टुकामाः समागताः। गुहायां शिलाफलके रेखामयो विग्रहः दत्तावधानैः निखातदृष्ट्याऽवलोकितुं शक्यते।



कपिमुखमपि पूर्व दक्षिणे नारसिंहम् ।
गरुडमुखमपि पश्चादुत्तरे मूकरास्यम् ॥
हयवदनमथोर्ध्वं चिन्तयेद्वायुसूनुम् ।
सकलदुरितहर रामदूतं नमामि ॥
(गाणधाल पंचमुखी हनुमान्) (प. ३१०)



श्रीरामपादसरसीरुहभृङ्गराज ।
ससारवार्धिपतितोद्धरणावतार ॥
दो स्साध्यराज्यधनयोपिददभ्रवुद्धे ।
पचाननेश मम देहि करावलम्वम् ॥
(प. ३१०)

अस्मदाचार्यैरुपश्लोकितोऽयं विग्रहः—

कपिमुखमपि पूर्वं दक्षिणे नारसिंहम् ।
गरुडमुखमपि पश्चादुत्तरे सूकरास्यम् ।।
हयवदनमथोर्ध्वं चिंतयेद्वायुसूनुम् ।
सकलदुरितहरं रामदूतं नमामि ।।

श्रीपूज्यवेंकटाचार्यैः कृतं नित्यं पूजाकाले पठ्यमानं पंचवक्त्रकरावलंबनस्तोत्रमपि सिद्धिदं जागर्ति ।

श्रीरामपादसरसीरुहभृंगराज ।
संसारवार्धिपतितोद्धरणावतार ।।
दोस्साध्यराज्यधनयोषिददभ्रबुद्धे ।
पंचाननेश ममदेहिकरावलंबम् ।।

आप्रातराश्रित कुनाथनिकेतनालि- ।
संचारकृत्यपटुपादयुगस्य नित्यम् ।।
मानाथसेविजनसंगमनिष्कृतं नो ।
पंचाननेश मम देहि करावलम्बम् ।।

षड्वर्गवैरिसुखकृद्भवदुर्गुहाया- ।
मज्ञानगाढतिमिरातिभयप्रदायाम् ।।
कर्मानिलेन विनिवेशितदेहधर्तुः ।
पंचाननेश मम देहि करावलम्बम् ।।

सच्छास्त्रवार्धिपरिमज्जनशुद्धचित्ताः ।
त्वत्पादपद्मपरिचिंतनमोदसांद्राः ।।
पश्यंति नो विषयदूषितमानसं माम् ।
पंचाननेश मम देहि करावलम्बम् ।।

पंचेंद्रियार्जितमहाखिलपापकर्म ।
शक्तो न भोक्तुमिह दीनजने दयालो ।।
अत्यंतदुष्टमनसो दृढनष्टदृष्टेः ।
पंचाननेश मम देहि करावलम्बम् ।।

इत्थं शुभं भजकवेंकटपण्डितेन ।
पंचाननस्य रचितं खलु पंचरत्नम् ।।
यः पापठीति सततं परिशुद्धभक्त्या ।
संतुष्टिमेति भगवानखिलेष्टदायी ।।

सर्वे भक्ता तुगावगाहनेन शुचिस्नाता श्रीपंचवक्त्र हनूमंतमभिपेकादिसपर्या कृत्वा सप्रार्थ्य तत्प्रसादमाकांक्षत. प्रदक्षिणनमस्कारान् वायुस्तुतिपुरश्चरणेन सूत्रभाष्यपारायणेन च समर्पयामासुः :

## गुरुभ्यः चंपूप्रबंधसमर्पणम्

श्रीमत्पूज्यपरमहंसानां श्रीसुयमींद्रतीर्थगुरूणामाज्ञया प्रारब्धं चम्पूप्रबंधरचनाकर्म श्रीगुरुसार्वभौमानुग्रहेण यथामनीपित समाप्तिमगमत् । तत्र चतुर्दशोल्लासा समुद्भासते विपयवैविध्येन संगताः । सप्तरात्रोत्सवविशेपा. सस्मरणीयचरितैर्गुरुभि. श्री सुयमींद्रमुनींद्रैरुपक्राता. दैनदिनचर्यया क्लृप्तरीत्या प्रगल्भशैल्या क्रोडीकृताः यथा हृद्यारोहयति विविदिषूणा भक्तानाम् । तत्र भागद्वय वर्तते । प्रथमे भागे पट्सूल्लासेषु श्रीगुरुसार्वभौमाणा पूर्वावतारकथाप्रसक्ति. प्रदर्शिता । द्वितीये भागे सप्तमोल्लासाच्चतुर्दशोल्लासपर्यंतमष्टसूल्लासेषु सप्तरात्रोत्सवस्य वर्णना दैनंदिनवृत्तानुवादक्रमेणोपायनीकृता । यथा हि—

तत्रादौ गुरुप्रेरणासंदर्भ. प्रबधकर्तुर्वंशविशुद्धिपरिचयश्च प्रस्तावितौ । द्वितीयोल्लासे शंकूकर्णस्य प्रह्लादरूपदैत्यवशजन्मनाऽवतारप्रसंगः उपस्थापित.। तृतीये स एव श्रीव्यासतीर्थरूपेण भूमाववतीर्ण इति कृत्वा व्यासयोगिना चरितमुपवर्णितम् । चतुर्थमारभ्य षष्ठपर्यंत त्रिपूल्लासेषु श्रीगुरुसार्वभौमाणा राघवेंद्रतीर्थाणां जननमारभ्योपनयनविद्याभ्यास विवाह-सन्यासाश्रमस्वीकारादूर्ध्व जैत्रयात्राया संघटितानि विस्मयावहानि जनताहितसाधनानि सत्सिद्धातप्रचयग्रथरचनाद्यनन्यसाधारणानि निरूपितानि । सर्वोऽयं भागश्चारित्रात्मकः ऐतिहासिक प्रमाणानुबद्ध. सर्वैरपि चारित्रकैरुपादेयो भवतीति न पुनर्वक्तव्यम् ।

द्वितीयभागस्तु सप्तरात्रोत्सवं यथावृत्तमनुवर्णयितु प्रवृत्तः । अत्र केचनासाधारणाः धर्मा. केवलं गद्यपद्यात्मकशरीरेऽपि वैविध्य-वैलक्षण्य-

संपादनाय निवेशिताः विवित्सुमनस्तोषाय चम्पूकाव्यस्य नावीन्य परिपोषाय च । उत्सवांगतया सुप्रभातसेवा, पचामृताभिषेकवैभवं गुरुसार्वभौमालंकारपूजा श्रीमन्मूलरामचंद्रसपर्यामहोत्सवः अलंकार-पूजातीर्थवितरणं ब्राह्मणान्नसंतर्पण सायं वाहनोत्सव. इत्यादयो विशेषाः समयानुगुणं साहित्यशैल्योपवर्णिता. । तत्र मध्यमाराधनादिने रात्रौ रजतरथोत्सवः उत्तराराधनोत्सवांगतया महारथोत्सव. सिहाश्वादिवा-हनोत्सवाश्च प्रकामं स्वभावोक्त्याद्यलंकारभूयिष्ठै. गद्यपद्यभंगैभक्ति-रसोल्लसितया साहित्यशैल्योपवर्णिताः ।

तत्र तत्र कविभिः सद्यो निर्माय पद्यैः वर्णिता. समुद्रनदीपर्वतवणना-विशेषाः शोभते नितरां चेतोहरंतः वाचकानाम् । सप्रदायप्राप्तं गद्यपद्य-मयं काव्यं चम्पूरिति आलंकारिकैरुक्त लक्षणमतिक्रम्य नाट्यवाचनो-पन्यासविशेषा. आध्यात्मिकविद्यालहरीप्रचोदकाः इमं प्रबध व्यावर्त-यंति नवीनकृतिशरीरसपादनेनेति विशिष्टं वैलक्ष्यण्यमवश्य चित्ते अव-धातव्यं विमर्शपटुधिषणै. साहित्यविद्याविहारनदीष्णैरालंकारिकैश्च ।

श्रीसमीरसमयसंवर्धिनीसभांगकलापत्वेन उपन्यासा. रात्रौ नाट्य-वाचनान्यभिनयपूर्वाणि अत्र संनिविष्टा. प्रबधस्योपयुक्ततां पोषयति । कविकाव्यस्पर्धाऽपि आयोजिता । उपन्यासेषु वेदनित्यत्वं प्रमाण-लक्षणं विभागश्च मोक्षसाधनविचार. मोक्षस्वरूपं प्रामाण्यस्वतस्त्वं साक्षिसमर्थनं च अततः प्रमाणानां बलाबलविवेकः इत्याद्यत्यंतोपयुक्ता विषयाः पण्डितैः चर्चिताः निर्णिताश्च । एवमेतत्प्रबंधवाचनेन समग्र-तत्त्वशास्त्रस्य परिचयः वैष्णवोत्तमानां चारित्र्यज्ञान च संपादितं भवतीति निश्चप्रचम् । विष्णूद्रेकाय वैष्णव यशः । इत्यभियुक्तोक्तिम-नुष्याय एतेन प्रबंधेन विष्णुसर्वोत्तमत्वमेव समर्थ्यते येन विष्णौ भक्ति-रुद्रिक्ता भूत्वा तत्प्रसादायोपकल्पते । 'मम भक्तास्त्वामनुव्रताः' इति प्रह्लादाय श्री नृसिहपरमात्मनाऽऽश्वासितं किल । श्रीगुरुसार्वभौम-चम्पूप्रबधोऽयं श्रीहरिप्रसादायोपकल्पते भक्त्या पिपठिषूणा अमायया-ऽनुवृत्त्या श्रीहरिशुश्रूषूणाम् । श्रीहरिप्रसाद एव शाश्वतसुखसाधनम् ।

अन्यदप्ययं चम्पूप्रबंध साधयितुमभिप्रैति यत्तस्य पिपठिषवो जनाः विरक्ति-भक्ति-ज्ञानसाधनकलापस्य शाश्वतसुखोदर्कफलोदर्कं मन.-

प्रावण्यं प्राप्य धर्माधर्माद्यतीद्रियेषु आस्तिक्यबुद्धिं संपाद्य जगच्चक्रनियंतरि श्रीनारायणे ब्रह्माद्यगदेवतोपास्ये सुदृढां भक्तिमुपलभ्य सद्धर्मरता भवेयुरित्याशासे। 'मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभो' इति भागवते उपदिष्टं तत्वं नित्यमनुसंधाय स्वविहितवृत्त्या भक्त्या भगवदाराधाने सर्वस्वमर्पितं चेत् बुभूषुभिः तेषां संसारतरणं श्रेय.प्राप्तिश्च निश्चितैवेति सुदृढं विश्वसिमः।

एवं महोन्नतमुद्देशं मनसि निधाय श्रीसुयमीद्रतीर्थपूज्यपादाः कार्यभरमिम सुभगं निर्वोढुमाशीर्वचनैरनुगृह्य मां प्रेरयामासुः सदयार्द्रचित्ताः गुरुसार्वभौमप्रसादमासादयितु सुकरममायांचितचेतसा।

तत्कारुण्यसरणिमनुप्रपन्नोऽहं चम्पूप्रबंधमिमं समाप्य तद्द्वारा श्रीगुरुसार्वभौमेभ्यः समर्पयामि। परमभक्त्या समर्पितमिदमुपायनं दिव्यदृष्ट्याऽवलोकयंतः श्रीगुरुसार्वभौमेभ्य तदंतर्गतमुख्यप्राणात्मकपंचमुखाजनेयातर्गतश्रीमूलरामचंद्राय समर्पयंतीति निश्चप्रचम्। अनेन भक्त्युपायनेन श्रीमूलरामचंद्रात्मको वेदव्यास. प्रीयतामिति परःसहस्रं प्रणम्य विरमामि।

कायेन वाचा मनसेद्रियैर्वा बुद्ध्यात्मना वाऽनुसृत स्वभावम्।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि॥

यो भक्त्या गुरुराघवेन्द्रचरणद्वंद्वं स्मरन्यः पठेत्।
स्तोत्र दिव्यमिदं सदा न हि भवेत्तस्यासुखं किंचन॥
किंत्विष्टार्थसमृद्धिरेव कमलानाथप्रसादोदयात्।
कीर्तिर्दिग्विदिताविभूतिरतुला साक्षी हयास्योऽत्रहि॥

॥ श्रीपंचमुखीप्राणदेवसंदर्शनं चम्पूसमर्पणं च इति चतुर्दश उल्लासः॥

॥ श्रीराघवेंद्रगुरुसार्वभौमसप्तरात्रोत्सवचंपूः समाप्ता॥

॥ श्रीकृष्णार्पणमस्तु॥

# चम्पू भावबोधिनी

टिप्पणीकारः
पंचमुखी राघवेन्द्राचार्याणां सूनुः
डॉ० पंचमुखी वादिराजाचार्यः
एम. ए. पी.-एच. डी.

॥ श्रीमत्पंचमुखप्राणेशो विजयते ॥

# श्रीगुरुसार्वभौमसप्तरात्रोत्सवचम्पूभावबोधिनी

श्रीरामचंद्रं सर्वेशं ज्ञानविज्ञानकारणम् ।
हनूमंतं चास्मदीयं मध्वं सद्धर्मरक्षकम् ॥

भक्त्या नत्वा गुरुं चैव मंत्रसद्मनिवसिनम् ।
व्याख्यानमुत्सहे कर्तुं चंपूग्रंथस्य सद्धिये ॥

सप्तरात्रोत्सवश्चित्रः विचित्रपदबंधनैः ।
वर्णितस्तातपादैर्यो जिज्ञासूनां विशद्यते ॥

समाप्तिकामो मगलमाचरेदिति श्रुत्युक्तरीत्या चंपूग्रथस्य निर्मातारः कविवर्याः आदौ श्रीविष्णुं वायुमध्वव्यासराघवेंद्रादिगुरूंश्च स्तुवतः मंगलाचरणं संपादयंति प्रथमद्वाचत्वारिंशद्भि. श्लोकैः । गद्यमद्यमयं चपू इति निर्दिष्टप्रमाणमनुसृत्य अयं ग्रथः अनेकानेकपद्यैः गद्यभागैः नाटकोपन्यासादिनूतनागैश्च सुशोभते संस्कृतवाङ्ग्मयक्षेत्रे । तत्र तत्र च पुनः ग्रंथवैशिष्ट्यजातं निर्दिशामः ।

श्लोक १. गुणान् गृहीतुमलसा—श्रीविष्णोर्गुणपरिगणने असमर्था । लक्ष्मीरपि श्रीविष्णोर्गुणसंख्याने न प्रभवति इति श्रुतिसिद्धमेव । अनतानंतगुणगणपरिदोपविदूरः मुक्तिप्रदाता विष्णुः इति विष्णोर्लक्षणानि अत्र वर्णितानि । स्वानदशब्देन स्वरूपानंदाविर्भावरूपमोक्षस्वरूपं निर्दिष्टम् । नित्य तुष्टाऽपि लक्ष्मी. पूर्ण. श्रीविष्णोर्विभवं निध्याय पर अतिशयेन तुष्टाव स्तुतवती इत्यर्थः ।

श्लोक २. 'जन्माद्यस्ययत.' इति ब्रह्मसूत्रोक्तरीत्या श्रीविष्णुलक्षणं पुनर्निर्वचन्ति द्वितीयश्लोकेन ।

श्लोक ३. वाय्ववतारस्य श्रीमन्मध्वाचार्यस्य तत्वं श्रीविष्णुसमतमेव इति सूच्यते।

श्लोक ४. किं सज्ज्ञानं किं विपरीतज्ञानमिति विवेके मंदबुद्धयः । 'पेलवं विरलं तनु" इत्यमरः । वेदव्यासः तनुः अवतारः यस्य स वेदव्यासतनुः भगवान् विष्णुः एव ।'"'तेने ब्रह्महृदा य आदिकवये'"' इति भागवते उक्तं यत् विष्णुः स्वसुताय चतुर्मुखब्रह्मणे विज्ञानमुपदिदेश । यत् तत्वं अनन्यलभ्यसुखदं तत् तत्व प्रोवाच इत्यन्वयः । इद तत्व विहाय केनाप्यन्योपायेन मोक्षाख्यसुखं न लब्धु शक्यते । अथवा तदनन्यलभ्यसुखद यत् तत्व प्रोवाच तत् तत्व शुद्धा धिय च सः नारायणः दद्यात् इति च अन्वयः शक्यः । तस्मिन् परमात्मनि अनन्याः नारायणैकशरणबुद्धयः 'अनन्याश्चिन्तयतो मां'"' इति गीतोक्तप्रकारेण अनन्याः । तैरेव लक्ष्य प्राप्तियोग्य सुख मोक्षाख्य । तादृशसुख ददातीति सुखदं तत्वम् ।

श्लोक ५. पंचमषष्ठश्लोकयोः कुलकं कार्यं अन्वयार्थसंगत्यै । आपाततः जीवब्रह्मैक्यप्रतिपादनपरत्वेन गोचरीभवति कानिचन श्रुतिवाक्यानि । परन्तु एतादृशवाक्यानि भेदपरतया एव निर्वाह्यानि । अंतर्यामिपरतया निबधनं यस्य वचनस्य तत । ब्रह्म सर्वेषु अंतर्यामितया स्थितः इति उभयसमतम् । स्थानैक्यमत्यैक्यसादृश्याख्यैर्युक्तिभिर्वा भेदपरतया निर्वाहः शक्यः । श्रुतिषु अनेकानि स्पष्टार्थानि भेदपरवाक्यान्यपि विद्यते । उपक्रमोपसंहारादि-तात्पर्यलिंगैः जीवब्रह्मभेद एव श्रुतिनिर्णीतार्थ इति ध्येयम् । तदानुगुण्येन आपाततः अभेदपराणां वाक्यानां अपि भेदपरतया एव युक्तिविशेषैः निर्वाहः कार्यः । इममेव वेदव्याससम्मत भाव अभिप्रायं तच्छिष्यः पूर्णप्रज्ञः श्रीमध्वाचार्यः उपादिशत् ।

श्लोक ७. श्रीरामचंद्रस्तुतिः । विजयिना हनुमता साकं इत्यर्थः । हनुमतः विजयित्व श्रीरामचंद्रानुग्रहविशेषेणैवेति सूचितमत्र । निजं स्वस्वयोग्यतानुगुण । परसुखं स्वरूपानंदाविर्भावरूप अलौकिक परमं सुखम् । पितृभक्तिः सत्यसंधता, भक्तविशिष्टता इत्यादिक सद्धर्मस्वरूप श्रीरामावतारेण मर्त्यजनेषु शिक्षितम् इति हि प्रसिद्धम् ।

श्लोक ८. श्रीकृष्णावतार गृणति कविवर्याः । प्रोद्वृत्ता प्रकर्षेण विशेषतः उद्गत सन्मार्गादुत्क्रांत वृत्त वर्तन एषा ते । वेदमार्गविमुखान् इत्यनेन बुद्धौ विचारे च प्रोद्वृत्तानित्यनेन वर्तनेऽपि अवैदिकत्व सूच्यते । वाय्वतारिणा भीमेन साकम् । कौरवादिवधे भीमः निमित्तमात्र इति सूचितम् । मयैवेते निहताः पूर्वमेव । निमित्तमात्रं भव सव्यसाचिन् इति गीतावचनं स्मार्यते । पृथोः पुत्राः पार्थाः

पाण्डवाः । तान् । अपायात् इति समुदाये एकवचनम् । श्रुतिनुतः कृष्ण. श्रुतिमार्गविमुखान् कंसादीन् जघानेति श्रुते. प्रामुख्यं सूच्यते । सकलापायनिर्हंता कृष्णः अस्मिन् ग्रन्थनिर्माणकर्मणि मे निर्विघ्नता सपाद्य मा रक्षतु इत्यभिप्रायः ।

श्लोक ९. पुन श्रीकृष्ण स्तुवत. भगवद्गीतासारं निर्वचति ।

'द्वाविमौ पुरुषौ लोकेक्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्य परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वर ॥'

इति गीतावचनम् । विष्णोः जीवजडात्मकात् प्रपचात् श्रीलक्ष्मीदेव्या अपि भिन्नत्व सर्वोत्तमत्व च अनुसधाय विष्णुप्रसादप्राप्त्यर्थं साधुबुद्धया स्वस्वनियतकर्माचरणमेव श्रीभगवद्गीतोपदेशसार. इति श्लोकार्धेनैव सारसर्वस्व निवेदित इत्यय नून काव्यचमत्कृतिविशेष । तस्य विष्णो प्रतिपत्ति ज्ञान तत्सन्निधिप्राप्तिश्च तस्यै । 'बुद्धिर्मनीषाधिपणाधी प्रज्ञा शेमुषीमतिः' इत्यमरः । 'स्वेस्वे कर्मण्यभिरतः ससिद्धि लभते नरः' इति गीतावाक्यम् ।

श्लोक १२. नृसिहावतारं वर्णयंति अद्भुतरसपरिप्लुतैः समुचितपदविन्यासैः । विस्फूर्जत्स्फुरदुग्रलोलविलसत्किंजल्केति केशस्य विशेषणम् । 'किंजल्कः केसरोऽस्त्रिया' मित्यमरः । विस्फूर्जत. विद्युदिव प्रदीप्ता· प्रकाशमानाः । स्फुरंत. रभसेन पुरतः सरत. । लोलाः कपमानाः । "चलन कम्पने कम्प चल लोल चलाचलम् ।" इत्यमरः । विलमत शोभायमाना. किंजल्कवत् सहस्रश· नि सृताः केसरवर्णिताश्च । भशा एव भवति इति केशायित नृसिह । अकेश. केश भवति इति केशायितम् । "भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" इति भवत्यर्थे क्यङ् प्रत्ययः । उग्रस्वरूपतया सर्वत्र अगेषु बहुधाविक्षिप्तकेशत्वात् रौद्रलक्षण मुख भीकरतया द्रष्टुमपिअशक्यत्वाच्च केशा एव दृग्गोचरीभूता इत्यर्थ सूचित । अत एव विस्फूर्जदित्यादिनृसिंहविशेषणानि केशे अन्वितानि । हरीष्टकीर्तनरतेः प्रह्लादस्य अस्मद्रक्षकः श्रीश सर्वत्र व्याप्तः स्वभक्तान् त्राति इत्यात्मक वचनम् । देवर्षेर्नारदस्य वचस्तु—"अय निष्किल्बिषः साक्षान्महाभागवतो महान् ।" इति इद्र प्रति बोधनप्रसगे प्रह्लादस्य महाभागवतत्वेन वर्णनं । ब्रह्मण. वरदान तु 'मृत्युर्मा भून्मम प्रभो । नांतर्बहिर्दिवा नक्तमन्यस्मादपि चायुधैः । न भूमौ नाम्बरे मृत्युर्न नरैर्न मृगैरपि" इति हिरण्यकशिपो. प्रार्थनामनु "तथास्तु" इति प्रदत्तमासीत् । तदपि सत्य विधातुमित्यर्थः ।

'सत्य विधातु निजभृत्यभाषित'मिति भागवतवचनम् । प्रह्लादनारदब्रह्माणः निजभृत्यपदेन सूचिता इति विजयध्वजीयटीकायाम् । तद्रक्षां श्रीप्रह्लादस्य रक्षा । प्र उपसर्गपूर्वक तनु धातो' ल्यवतरूप प्रतायेति ।

सुपर्वपर्वकर्ता सुपर्वणा देवाना । 'सुपर्वाणः सुमनस' त्रिदिवेशा दिवौकस" इत्यमर' । पर्व उत्सवदिनं करोति संपादयतीति सुपर्वपवकर्ता । स्वावतारेण दैत्यवधेन च देवाना महत्सतोषनिदानँ सवृत्त इत्यर्थः । भूलेखाः भूसुरा. तेषः भूत्यै सपदभिवृद्धये । 'विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा' इत्यमर. । श्रीमध्वा चार्यान् स्तुवंति । ज्ञानावतारः वेदव्यासः श्रीनारायणश्च पूर्णप्रज्ञं वाय्ववतार श्रीमध्व—

श्रृणु देवकार्यमवधार्य धैर्यवद्यदुदीर्यमाणमिदमार्यसम्मतम् ।
भविताऽन्यदुष्करतर विधाय यत्तरुणं तवावतरणं महाफलम् ॥
कुरुसूत्रभाष्यमविलम्बितं व्रजेः सुमतेन योजय कवे श्रुतिमृतीः ॥

इति (सुमध्वविजये वर्णितम्) सद्भ्य सत्तत्वप्रसाराय आदिदिशातु ।

आर्यसंमत'—वेदम्यासम्मतम् । नारायण वेदव्याससम्मतं स्वादेश श्री-मध्वमुनिभ्य. न्यरूरुपत् । इममेव आशयं अय श्लोकः प्रतिपादयति ।

श्लोक १५ प्रद्मनाभतीर्थाः श्रीमध्वाचार्याणा पीठे विरेजिरे । नियोज्य इत्यनेन अष्टमठसप्रदायः तद्वारा अष्टदिक्ष्वपि तत्वप्रचारव्यवस्था कृता श्रीमदा-चार्यैरिति ध्वन्यते । श्रीमदाचार्याणां पीठे एव जयतीर्थमुनयः व्यराजत ।

श्लोक १६. १७. श्लोकद्वयेन श्रीजयतीर्थमुनिचरितं उपवर्णयति । यरगो-लनामक ग्रामनिकटस्थगुहायां अनेकमासान् उषित्वा तपस्तेपे जयतीर्थमुनिः । तत्रैव टीका ग्रथान् व्यरचयदिति बृहज्जयतीर्थविजये । स्त्रीगजस्य गजनी इति प्रयोगः कृत राराज्येत इति विध्यर्थप्रयोगेण अधुनापि टीकाचार्याणा यशः सर्वत्र प्रसृत मिति सूच्यते ।

१८. प्रालेयाद्रि हिमालय ।'अवश्यायस्तु नीहारस्तुषारस्तुहिन हिम । प्रालेयं महिका (मिहिका) च' इत्यमर' । प्रलीयते पदार्था अत्रेति हिमाद्रि प्रलय । तत. आगतम् । प्रालेयम् । अण् । "केकय" इत्यादिना यादेरिय ।

प्रालेयाद्रितटात् आ पर्यंतमित्यर्थ. । "आङ् सीमाया परिव्याप्तौ क्रियायोगे-

पदर्थयो ' इति विश्वः । आपरितोषात् इति कालिदासप्रयोग. । सकलभारतदेशे शैवमत अद्वैतमत च निरस्येत्यभिप्रायः ।

श्लोक १९. प्राकृता —कन्नडभाषानिबद्धा । श्रीव्यासतीर्था कन्नडभाषायां सामान्य जनतत्वज्ञानाय अनेकभक्तिगीतानि विरचितवत । दासकूटप्रवर्तका: व्यासकूटदासकूटयोः समन्वयं प्रदर्शितवत ।

भक्तिरूपा शंपा विद्युल्लेखा कांतिरित्यर्थ तया सुहास शोभायमान सद्दास-कूटमित्यन्वयः । "शम्पाशतह्लदाह्लादिन्यैरावत्य· क्षणः प्रभा । तटित्सौदामिनी विद्युच्चंचला चपलापि च ।" इत्यमर. ।

श्लोक २०. "छेको विदग्धे" इत्यमरः । दुर्विदग्धाः दुष्टशास्त्रेषु अथवा दूषितार्थ कल्लने विदग्धा. कुशला । तेषां मत । शैवाद्वैतादिदुर्मतानि इत्यर्थ । तान्येव कदा. सस्यानि । तेभ्य कृशानु· अग्निरिव स्थित· । 'कदोऽस्त्री सूरणे सस्यमूले जलधरे पुमान्" इति मेदिनी । कदति । कदयति कद्यते वा इति कद· ।

"आश्रयाशो बृहद्भानु. कृशानु· पावकोऽनलः" इत्यमरः । कृश् तनूकरणे इति कृश्यति अल्पीकरोति सपर्केण इति कृशानुः । "ऋतन्यञ्जि" इत्यानुक् ।

श्लोक २३. एतद्ग्रंथत्रय श्रीमध्वसिद्धान्तस्य त्रीणि नेत्राणीव स्थितानीति श्रीवादीन्द्रैर्वर्णित श्रीगुरुगुणस्तवने । "नेत्राणीव त्रयोऽपि त्रिजगति नृहरेरिंधते यत्प्रबधा·" इति ।

श्लोक २८. श्रीविजयीर्थतीर्थानां सर्वेऽपि ग्रंथा· नैवोपलब्धा. अद्ययावदिति नूनं माध्वानां चितासंतापविषयः । कतिपय ग्रन्था· पण्डितप्रपंचे विदिता· येषु केचन प्रकाशतां नीताः ।

भेदविद्याविलासः, उपसंहारविजय· शैवसर्वस्वखण्डनम् ब्रह्मसूत्रन्यायसग्रह· परतत्वप्रकाशिका प्रमाणपद्धतिटिप्पणी प्रमाणलक्षणटिप्पणी इत्यादयः सुप्रसिद्धाः ।

निगमाः—वेदा. । "वणिक्पथ पुर वेदो निगमा "इत्यमर । शास्त्रं ब्रह्म-मीमांसातर्कधर्म ज्योतिः शास्त्रादिक ।

विषयपतय —मण्डलाधिपतयः । "नीवृज्जनपदो देशविषयस्तूपवर्तनम्" इत्यमर· ।

श्लोक ३० अत्यत भ्रमतीति बभ्रमः। जंगमादिशब्दवत् प्रयोग.। बभ्रमः बभर भ्रमरः इत्यर्थं । "निपानागमयोरतीर्थमृपिजुष्टजले गुरौ।" इत्यमर'। विजयीद्र तीर्थाभिघा सद्गुरव.। "एके मुख्यान्यकेवलाः"। एकप्रभुत्व मुख्य-प्रभुत्व।

श्लोक ३१. "मौनीशव्यासराजादुदितकिसलयः पुष्पितोऽयं जयीद्रादद्य श्री-राघवेद्रा द्विलसति फलितो मध्वसिद्धांतशाखी।" इति व्यासराजै' राघद्रवेद्रतीर्थैः च संपादित मध्वसिद्धातवृक्षस्य प्रवर्धन वर्णित श्रीगुरुगुणस्तवने।

श्लोक ३२. "घरा घरित्री घरणी क्षोणी ज्या काश्यपी क्षिति." इत्यमरः। श्रीगुरुराजावतारमगलप्रसगे पृथ्वी तुष्टा वाता नदी अग्निश्च तुष्ट' इत्यर्थः। मगलविषयवर्णनपद्धतिरियम्। अस्मादारभ्य एकचत्वारिंशच्ल्छोकपर्यंत श्री-गुरुराजाना स्तुतिविशेष सपाद्यते।

श्लोक ३३ गाव ब्राह्मणाश्च वेकटपति प्रार्थयामासुरय वाल' ज्ञानी भूसुरेभ्य' वराणा अभीष्टानां देष्टा दाता भूत्वा अस्मत्पालको भूयादिति बालस्य पुरत. प्रवर्तमानविविधागाधचरितमनुलक्ष्य उत्कठितचित्ता. ब्राह्मणा इति मत्वा उत्कचेत. ब्राह्मवृंदमित्युक्ति.।

श्लोक ३४. एव गोब्राह्मणै प्रार्थित इव वेकटश स्वनाम 'वेंकण्ण" इति पदेन दत्वा अनेन ससारसागर दघ्नं जानुपर्यंतमात्रं कारयन् सुलभतारणानुकूल कारयन् इति यावत्। श्रीगुरुराजप्रसादेन संसारसागरः अनायासेन भवतैं. तर्तुं शक्यते इत्यर्थ.। श्रीगुरुराजानां अयं महिमाविशेष श्रीवेकटेश्वरसकल्पत. प्राप्त इति तेषा वैशिष्ट्य द्योत्यते। प्राणधाम्न वाय्वावेशविशिष्टस्य प्रह्लादा-वतारस्य इत्यर्थ.।

श्लोक ३५ जैत्र. जयशील। सुरगुरुधिषण बृहस्पत्याचार्याणा समान-प्रज्ञ'। "बुद्धिर्मनीषाधिषणा धी प्रज्ञाशेमुखी मति." इत्यमर.।

तस्य नाम स ददे सदाशिषा राजराज इव राजितः श्रिया।
रामभद्र इव भद्रभाजनं तत्कृपेव जगतां हिते रतः॥
श्रीसुरेन्द्रवदय तपस्यया श्री जयींन्द्र इव कीर्तिसंपदा॥
विश्रुतोऽहमिव वादसंगरे राघवेंद्रयतिराट् समेधताम्॥

३७ भक्त्युपायसंपादितविष्णुप्रसाद एव मुक्तिसपादने मुख्यसाधनमिति विदितचरमेव। विगता तृष्णा असारसुमारसुखविपयेपु आसक्ति, यस्य स,। विरक्तः इत्यर्थ,।

श्लोक ४२. समुद्रैकदेशे स्नाने कृते सत्यपि समुद्रस्नानकार्यसंपादनवत् श्रीगुरुराजाना महिमाचरित्रसागर समग्रतया अवलोडितु अस्माकं असाध्य सदपि चरित्रैकदेशावलोडनकर्ममात्रेणापि चरितकथनरूपकार्य सपाद्यते । क्रीडास्थानं जेतु विविधागाधचरित्रविशेषं वर्णयितुमित्यर्थः ।

निर्लिपा. सुराः तेषु वर्या. श्रेष्ठा· । तेषां उत्सवे । सुरोत्तमानामुत्सवे इत्यर्थः ।

"यज्ञ. सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमर· । चित् ज्ञानम् । चित्सवः ज्ञानसत्र इत्यर्थः । परिषदे परिषत्सतोषाय निर्यन् प्रचलितश्चासौ चित्सवः परिषन्निर्यच्चित्सव तस्मिन् । आराधनामहोत्सव सकलसुरवृन्दमह. परिषज्जनसंतोषाय प्रवृत्त ज्ञानसत्र च भवति इति वर्ण्यते ।

स्यातं जीर्ण वच प्रसर भाषणसामर्थ्य यस्य सः । "वारिप्रवाहो निर्झरीझरः" इत्यमर. । ऊषरभूमि. "स्यादूषः क्षारमृत्तिका" इत्यमरः ।

क्षारभूमौ वारिप्रवाहः सहसोत्थितवारिसचयो वा नोपकल्पितुं शक्येते । तथैव मतिपेलवे मयि प्रबंधरचनाचातुर्य असंभाव्यमित्याशय· ।

खर्वगत्वरैः—"खर्वो ह्रस्वश्च वामन" इत्यमर । खर्ववत् लघु गच्छति इति खर्वग· । तस्य त्वरा गतिरिव गतिः येषा तानि । तैः मानवमनोभिः । मंदगतिभिः इत्यर्थ· । "जिह्मस्तु कुटिले मन्दे तगरपादपे" इति हैम· । विगतः जिह्म. यथा स्यात्तथा । निरातंकमित्यर्थः । साहस साध्यतासीमां अतिक्रम्य असाध्यताप्रदेशं प्राप्नोति ।

४३. "अनादरः परिभव. परिभावस्तिरस्क्रिया" इत्यमर । परिभाव. एव एक शरणं आश्रय एषा ते । स्वसामर्थ्याभावात् कार्यप्रवृत्तौ अनादर एव अवश्यं कार्यः एतैः । कार्यात्पराङ्मुखीभवनं एव एतादृशाना अतिमोपाय. सामर्थ्याभावा दित्यर्थः ।

वैराटिः—विराटस्य अपत्य पुमान्—उत्तरकुमार । स्त्रीगणमध्ये स्वपौरुष उद्घोषमाण· उत्तरकुमारः अर्जुनेन रथे युद्धस्थान प्रापित । तदा युद्धात् परावृत्य पलायितु संनद्धोऽभूदिति कथा ध्येया । समुद्रोऽब्धिरकूपारः पारावार. सरित्पतिः" इत्यमर· । वितस्ति द्वादशाङ्गुलपरिमाणम् । "उडुप तु प्लव. कोल. स्रोतोऽम्बुसरणं स्वत·" इत्यमर । उडुन जलात् पातीति उडुपं । पा रक्षणे । उडूनीव पातीति वा ।

सख्यशिरसि—युद्धस्य पुरोभागे।

प. ७ मितंपचेन—अल्पाक्षरेण मितेनेत्यर्थ ।

प ८ श्रीसुयमीद्रा. उपनेत्रद्वय धारयति स्म इति सूच्यते अत्र। "दवीयश्च दविष्ठ च सुदूरे" इत्यमर । अत्यत दूरस्थितेभ्य देशेभ्य इति यावत्।

श्लोक ४७. विमतिशूक शूक इति कश्चित् विपालुक्रमि:। विमतिरूप अधैर्यादिरूप शूक दूरत. नि सरितमिति भाव.।

४६. श्रीमठीयताम्रशासनपत्राणि श्रीपचमुखीवशस्य गौरवप्रसूचकानि वशीयगृहे अद्यापि राराजते।

प. १०. लभित सवाद ।श्रीगुरुपादाना अनुमति लब्धा इत्यर्थ ।कक्षत: वीक्ष्य कटाक्षक्षेपेण दृष्ट्वा इत्यर्थ·। कृपापूर्णा दृष्टि. कटाक्षत एव नि सरति इति प्रथा।

श्लोक ५२ विष्णुना रात· रक्षित विष्णुरात परीक्षिन्महाराज ।अर्जुन-पुत्र्या उत्तराया गर्भे स्थित शिशु श्रीकृष्ण. सुदर्शनचक्रेण अश्वत्थामाचार्य. निक्षिप्तात् ब्रह्मास्त्रात् ररक्षेति प्रथितमेव। स एव शिशुः परीक्षित् विष्णुरात. इति प्रसिद्धः।

दैवेनाप्रतिघातेन शुक्ले संस्थामुपेयुषि।
रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना॥
तस्मान्नाम्नो विष्णुरातः इति लोके बृहच्छ्रवाः।
भविष्यति न संदेहो महाभागवतो महान्॥"

इति श्रीभागवते प्रथमस्कन्धे द्वादशाध्याये।

"कीरशुकौ समौ" इत्यमर कीर ।शुकाचार्य.।

इति चम्पूभावबोधिन्यां प्रथमोल्लासः।

# द्वितीय उल्लासः

चपूग्रन्थने गुरुप्रेरणां स्वसहजकवित्वशक्त्युंभन च संपादितवत. कविवर्या श्रीराघवेंद्रसप्तरात्रोत्सववर्णनस्य पूर्वपीठिकारूपेण द्वितीयोल्लासमारभ्य षष्ठोल्लास यावत् गुरुसार्वभौमस्य अवतारत्रयचरित्र वर्णयति । द्वितीयोल्लासे प्रह्लादचरित्र तृतीये व्यासयोगिचरित चतुर्थपचमषष्ठेषु श्रीगुरुसार्वभौमाणा अवतारकथामृतमिति विभाग ।

श्लोक १ श्लोकद्वयेन श्रीनृसिंहभक्ताग्रेसरप्रह्लादस्तुति क्रियते । सुतर्पित-नृसिंहकुलावतस —नृहरि अवव्यवरप्रसत्त दुष्ट हिरण्यक हत्वा य ररक्ष असौ (स) सुदैत्य. एप विज्ञानवार्धिपरिवर्धनचद्र सुतर्पितनृसिंहकुलावतस इत्यन्वय । शोभनश्चासौ सद्गुणभूपित दैत्यश्च सुदैत्य' प्रह्लाद । दैत्यकुलोत्पन्नत्वमात्रेण दैत्यपदव्यवहार न दैत्यपदनिष्ठहरिद्वेपादिदुष्टगुणविवक्षया । भागवते अपि प्रह्लादस्य सुदैत्यवालकपदप्रयोग दृष्ट. । "एवं दैत्यसुतैं पृष्टो महाभागतोऽ-सुर ।" इति भागवते सप्तमाध्याये ।

प्रथम तावत् वैकुण्ठलोक. वर्ण्यते अस्ति इत्यारभ्य ददाति इत्यतम् ।

प. १२. शक्तित्रयसंपन्न —"शक्तयस्तिस्र. प्रभावोत्साहमत्रजा " इत्यमर. सुरगुरव बृहस्पत्याचार्या तैं. भाते प्रकाशिते शोभनत्वेन निर्णीते इति । गुरु-दृष्टिपूते अनवद्यपुण्यमुहूर्ते इत्यस्य विशेषणम् ।

"शक्यते जेतुमनया" इति शक्ति । "स्त्रियां क्तिन्" कोशदण्डवल प्रभु-शक्ति । विक्रमवलमुत्साहशक्ति. । संध्यादीना सामादीना च यथावदास्थवपन न तु ज्ञानवल मत्रशक्ति । पञ्चाङ्गमन्त्रो मन्त्रशक्ति. इत्यन्ये ।

भित्तिचित्रायित—यया पुरत. भित्त्या निखात चित्र स्पष्ट दृश्यते तथा प्रह्लादावतारेणैव सकलमपि अवतारकार्य स्पष्टीभूतमभवत् ।

भित्तिचित्रायितं करतलामलकायितं च इति स्पष्टीभावस्य दार्ढ्यार्थ द्विरुक्ति. ।

श्लोक ३ विधे ब्रह्मण. पुष्पाहरणरूपकर्तव्यच्युतिनिमित्त स्वकर्मण: उपभोगेन शमनार्थ जात शकुकर्ण प्रह्लादरूपेण।

अलीक—अविश्वसनीय। "पीडार्थे व्यलीक स्यादलीक त्वप्रियेऽनृते" इत्यमर.।

न्यग्भाव—तिरस्कृतरूप। न्यक् + भू धातो निष्पन्न रूप।

"सादृष्टिक फल सद्य उदर्क फलमुत्तरम्"। इत्यमर॰। जगतः उपप्लवः विनाश उदर्क फल यस्य तत् इति युद्धस्य विशेषणम्।

श्लोक ४ सर्वभूताना आत्मभूतस्य परमात्मन गति चरित्रविशेषः मनसः गति विषय सपूर्णतया न भवितु शक्यते।

अतटात् तटरहितात् उच्चादित्यर्थ। भृगो शृङ्गात्। "कूटोऽस्त्री शिखर शृग प्रपातस्त्वतटो भृगु" इत्यमर।

"सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा" इत्यमर। सुत्रामा इन्द्रः। इन्द्राशत्वेन अर्जुन इत्येकोऽर्थ॰। पर्यायत्वेन सुत्रामशब्देन सर्वे सुरा निर्दिष्टा। तेषा सखा हितकारी मित्रमित्यर्थ।

श्लोक ६ अध्वरहतृभूतपतिना—दक्षप्रजापते यज्ञ भूतगणमाहात्म्येन प्रध्वस्तमकरोत् महादेव इति पुराणप्रथितम्। परमात्मन नाम्ना एव अनुग्रहणैव लक्ष्मीरपि इति भाव। जगता अभेद्यत्व प्रददाति। यद्वाग्यत यस्य वाचा वचनेन आज्ञया इत्यर्थ। यत नियन्त्रित। "य कामये तंतमुग्र कृणोमि त ब्रह्माणतम् ऋषि त सुमेधाम्।" इत्यभृणीसूक्ते लक्ष्म्या अभेद्यः प्रभाव वर्णित।

पथ सन्मार्गादुत्क्राता उत्पथा दैत्या तेषा रोद्धा ताच्छील्ये तृन्नत॰। शक्तिह्रासकर्ता। तादृशे दुष्टसहारशीले हरौ सिद्धे प्रसन्ने सति कि अत्याहितं अनिष्ठ भवितु शक्यते। न किमपि इति भाव।

श्लोक १० यज्ञसेनस्य द्रुपदस्य अपत्य स्त्री याज्ञसेनी द्रौपदी। उत्तम गी हरे गोविंद रक्ष रक्ष त्वमेव शरण इत्यात्मिका वाक् यस्या सा। ता द्रौपदी उत्सवयन् सतोषयन्।

पर शत्रु सहरन्।

प. १५ निर्वाण अस्त गच्छत दिनमणि सूर्य अनु अनुसृत्य। सूर्यास्तगमना-

नतर इत्यर्थ । तरणिमणि सूर्यकातशिला। अपगता घृणि रश्मि. काति यस्य स । सूर्यकातमणि. सूर्यास्तसमयानतर अवसादितकाति भवति इति लोकप्रसिद्धम्। श्रीहरि हिरण्यकशिपु तस्य दैवबलस्य निर्वापणेन हतकातिमकरोदित्यर्थ. । दैवतावष्टभ दैवबलम् ।

प्रालेयाद्रि हिमाद्रि. ।

प्रावृषेयघनाघन—प्रावृट्कालीय मेघसमूह "वर्षुकाब्दो घनाघन" इत्यमर । प्रावृट्काले वर्षणोन्मुखमेघ अतिगभीररवमुत्पादयतीति लोकप्रसिद्धम् । तादृशनिनादवत सिहशिशु हरिणशिशु नानुगतु शक्तो भवति । तथैव हिरण्यकशिपु नृसिह प्रतिरोद्धु न शशाक ।

चराचरजगत्प्रतीक्ष्यमाणक्ष्माक्षमागुणनिधाने—सकल चराचरजगता समस्त लोकेन प्रतीक्ष्यमाणे कुतूहलेन स्वोत्तमोऽय प्रह्लाद इति अभिनद्यमाने । क्ष्माक्षमागुणनिधाने पृथिवीवत् क्षमागुणनिधाने ।

भस्त्रायमाण—भस्त्र अग्निप्रज्वालक: चर्मनिर्मितवस्तुविशेष. तद्वदाचरित अत्र—अत्यते वध्यते देहोऽनेन इति अंत्र ।

वेत्र—वेणु । वृक्षविशेष:

देह: वेत्ररूपेण अस्थिना अत्रेण च आवेष्टित गात्र भस्त्रवद् आचरित । निश्वासमात्रेण जीवति देही । नो चेत् अय देह अस्थिनाडीमज्जानिर्मित भस्त्रसदृश वस्तुजातमात्र परतत्रमेव इति भाव. ।

प १६ निस्त्रिशेन-खड्गेन । निस्त्रिश क्रूर । "तूण्या खड्गे तु निस्त्रिशचन्द्रहासासिरिष्टय ।" इत्यमर. ।

श्लोक ११ "रसज्ञा रसना जिह्वा प्रातावोष्ठस्य सृक्किणी"

"शिखा चूडा केशपाशी व्रतिनस्तु जटा सटा" इत्यमर. । सटाना छटा: समूहा ताभि । रिपो उत्कटकोटिशस्त्रान् ।

भटान् प्रदिश प्रकर्षेण दिश सर्वत्रेत्यर्थ । विदूरयन् नि सारयन् । रसनेन जिह्वया सृक्किणी ओष्ठस्य अतिमभाग लेलिहान । क्रोधभाव सद्य पुरोभाविहिरण्यकशिपुवध च सूचयति शीघ्र जिह्वाचालनव्यापारेण । सुतीक्ष्णाक्षितटै: अग्निकणान् किरन् प्रसारयन् । उग्रतेजा नृसिह शरै नखाग्रै. दैत्योदर ददार । अथ वियति आकाशे च सुरा सपुष्पगुच्छ स्तवै. त प्रणेमु. ।

नाभसी वीथि. नभस सवद्धो मार्गः । आकाशमार्गः इति यावत् ।

दिवाभीत —रात्रिमात्रचर पक्षिविशेप. घूक. ।

कादिशीका —भयद्रुता । 'कादिशीको भयद्रुत' इत्यमर' ।

प. १७ सुरविसिनीमालानालायित'—सुरा एव विसिनीरूपा ।"कुमुदिन्यां नलिन्या तु विसिनी पद्मिनीमुखम् ।" इत्यमर' । तेपा माला समूह. । तस्या नालारूप. । सुरसघे अतीव कोमलरूप. प्रह्लादः । यथा विसिनी नालया जीवन स्वीकरोति तथा सुरसमूह प्रह्लादं जीवातुमाश्रित्याभिवर्धते । गुरचैतन्यसवर्धक इत्यर्थः ।

आत्त गृहीत तनु देह' येन स । आत्ततनुर्जीव' देही मानव इत्यर्थ. ।

"कालो दिष्टोऽप्यनेहापि समयोप्यथ पक्षति." इत्यमर । कश्चित्काल इत्यर्थः ।

प. १८. विष्वक्—सर्वतः । भासयन् इत्यन्वयः ।

अक्षिविदूरगः—अदृश्यः ।

उपप्लवैः पीडाभि प्रोप्लूयमान पुन. पुन' वाध्यमान चित्त येपा ते ।

इति चम्पूभावबोधिन्यां द्वितीय उल्लासः ।

## तृतीय उल्लासः

प. १९ अस्मिन्नुल्लासे श्रीगुरुसार्वभौमपूर्वावताराणा श्रीव्यासयोगिनां चरित्रविशेष अभिवर्ण्यते। सत्वेन उर्जिता. उन्नता अध्वरा तेषा धौर्य धुरि वर्तनं। तेन। अनेकयज्ञयागादिकर्माचरणेन इत्यर्थः। विद्राविता दूरीकृता.। रक्षस निद्रालव। नागा कद्रूपुत्रा. इति पुराणप्रसिद्धमेव।

"प्रपातस्त्वतटो भृगु." इत्यमर.।

शिखरन्यस्तागुलिन्यक्कारेणावभुग्नशीर्षस्य — अगस्त्यकरावमर्दनोत्तरोत्तर प्रवर्धमान विध्यशिखरमवभुग्न स्थगितमासीदिति पुराणकथाऽनुसधेया। "उर्वरा सर्वसस्याढ्या" इत्यमर। "तनुत्रं वर्म दशनम्" इत्यमर। वर्म इति क्षत्रियाणा पदवीविशेषोऽपि मन्यते। चडवर्म. इतिवत्। सम्यक् आत्त सपादित वर्मभर्म तनुत्ररूपपोषण वर्मरूपभूषण वा यैः ते।

शीर्षण्यजना. राज्यधुरिस्थिताः पुरोवर्तिन. जना.।

श्लोक. ६ दुर्वादिरूपमत्तेभाना सिंहो भूत्वा सिंहनाम्न. उत्कर्ष साधयतीति संतोष। द्वरिण द्व्यक्षरस्य "हरि" पदस्य सर्वोत्तमत्वं प्रकाशयति इति ननृते। उत्प्रेक्षालकार.। नून काव्यप्रपचे नूतनकल्पनाविशेषः।

श्लोक ७. सिंधो जामाता श्रीहरि। समुद्रमथनकाले श्रीलक्ष्मीरुद्भूता इति पुराणविदितमेव। समुद्रपुत्र्या श्रीलक्ष्म्या भर्ता श्रीहरि इति तस्य सिंधोः जामातृत्वम्। इदुयोगे असत्यपि उद्वेलत्व हर्षोद्रेकसूचकम्।

श्लोक ८ चद्र. आत्मन. शशचिह्नकलकितत्व कृष्णस्य निर्दोषचद्रान्वयोत्पन्नत्व विचार्य श्रीकृष्णस्य व्यासयोगीश्वरैः पुनरपि समुन्नति. भवतीति च पाण्डुरतां गत इवेति उत्प्रेक्षा।

व्यासतीर्थानां उपसदा. शिष्याः इत्यर्थ। पक्षपाती पक्षी गरुड तस्य विपक्षी शत्रु. नाग. शेषः इत्यर्थ.। शेष एव शय्या तस्या निक्षिप्तकाय. लक्ष्मीपतिः नारायणः। तस्य सानुग्रहकटाक्षेक्षणवलेन इत्यर्थ.।

श्लोक ९. श्रीशकराचार्यस्य निर्देश कृत अस्मिन् श्लोके ।

श्लोक १४ श्रुत्यर्थस्य विलुप्ति अनाकलय्य अचित्य अनिच्छन् श्रीहरि इष्टपुत्रवर वितर इति ब्रह्मण्यतीर्थाय दिदेश इत्यन्वय ।

शुष्यत् तालुनाल । तस्य पेलवता । चरित्रविशेषस्य वर्णने असामर्थ्य सूचयति ।

"कविका तु खलीनेऽस्त्री" इत्यमर । खलीन मुखनियत्रणाय शलाका । घोटक' अश्व । "घोटके पीतितुरग तुरगाश्वतुरगमा" इत्यमर ।

सौविदल्ल.—भक्तः सेवक. इत्येवार्थ । सुष्ठु विदतीति सुविदः विद्वास' । तान् लाति प्राप्नोति इति सुविदल्ल भगवत्प्रसाद । सुविदल्लस्य अयमिति पात्रमिति सौविदल्ल भगवत्प्रसादभाक् भक्त इत्यर्थ ।

श्लोक २३ शब्दगुणकमाकाशमिति हि प्रसिद्धम् ।

श्लोक २५ व्युत्पाद्य-निरस्य दूरीकृत्येत्यर्थः । विपश्चिम अपश्चिम अग्रेसर. वराहतनु. श्रीविष्णु तस्मात् जनु. यस्या स ।

अ ब्रह्मैव नाथ स्वामी यस्य स. ।

अनाथ. सन्यासी इत्यर्थ ।

सनाथीकृता धन्या' । नाथेन रक्षकेण सहिता. कृता. ।

न उपरित व्यर्थमभूदित्यर्थ ।

नरीनर्तति—नृत्यति नृत्यति इति नरीनर्तति । जरीजागर्तिवत् प्रयोग' । नितरा नृत्यति इत्यर्थ. ।

श्लोक ३३ "उदर्क फलमुत्तरम्" इत्यमर' ।

उदर्क्यते इति उदर्क । अर्क स्तवने इति घञ् । श्रीहरितुष्टिरेव अतिमफल यस्य तत् चेष्टितमित्यन्वय ।

श्लोक ३४ अपावृणोत् प्रकटीचकारेत्यर्थ ।

श्लोक ३५ ससाररूपारण्ये प्रवास' श्रीव्यासयोगिभि' उपदिष्टमार्गेण सुलभसाध्य इति भाव. ।

श्लोक ३६ करदिता. वशीकृता साल्वादितुल्वादिवश्याः यैः ते । विधुमणि चद्रकातरत्नम् ।

श्लोक ३७ हिमघृणि. चद्र । द्रोणस्यापत्य पुमान् द्रौणि अश्वत्थामा। तस्य अस्त्रेण ब्रह्मास्त्रेण आर्त । उत्तरागर्भस्थ शिशु परीक्षिदारय. श्रीकृष्णेन सुदर्शनचक्रप्रयोगेन रक्षित इति भागवतकथाऽत्र अनुसधेया। कर्णाटेश श्री कृष्णदेवराय. । हरे. श्रीकृष्णस्य गुरो श्रीव्यासयोगिनश्च कृपाकटाक्षबलत ।

श्लोक ३८ नि शक मल्ल. शूर श्रीकृष्ण कृष्णदेवरायभूपति मुने श्रीव्यासयोगिन: सौविदल्ल: सेवक किंकर अभवत् ।

श्लोक ३९ "भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मय" इत्यमर । "रोचि. शोचिरुभे क्लीबे" इत्यमर । हरिदश्वस्य शोचिरिव शोचि काति यस्य स । सूर्यवत् प्रस्फुरत्कातिमान् श्रीव्यासयोगीश्वर । निर्गता आशा परमात्मातिरिक्तवस्तुषु इच्छा यस्मात् स । निराश विरक्त इति यावत् । प्रतिवादिना प्रमुखानित्यर्थ· ।

श्लोक ४१ यथा लौह. मणि लोहचुम्बक स्वजात्य अन्य लोह आवर्जयति आकर्षति । यथा च चन्द्र. चन्द्रकान्तरत्न स्वरश्मिभि आवर्जयति स्निग्धीकरणेन आकर्षति । तथैव व्यासमुनि अनेकान् स्वज्ञानप्रतिभया आत्मान प्रति आकृष्य शिष्यानकरोदिति भाव ।

श्लोक ४२ गच्छन् सचारक्रमे रत. यति व्यासयोगीश्वर. उपरि अधस्तात् पुरत. अग्रतश्च सर्वत्रेति यावत् । प्राणदेव विचिन्वन् । प्राणदेव ध्यायन्निति भाव. । सप्तशतसंख्याकानि हनूमद्विग्रहाणि प्रतिष्ठापयामास ।

श्लोक ४३ अधिकै. वित्तहरै अल्प धनहीन. न बबाधे न बाधितोऽभूत् ।

विपक्षकक्षस्य आशुशुक्षणि. अग्निरिव स्थित । "लोहिताश्वो वायुसख: शिखावानाशुशुक्षणि" रित्यमर । आशु शीघ्र आशु व्रीहि वा शुक्षणोति । 'क्षणु हिंसाया शु इति पूजार्थमव्ययम् ।

प २९ गीर्वाणनगरवदाचरितम् । प्राण मुख्यप्राण धाम अतर्यामित्वेन स्थित्यर्थ वासस्थान यस्य स प्राणधामा श्रीविष्णु । तस्य धाम वैकुठनगर तद्वदाचरितम्। धन्वतरिवत् आयुर्वेदशास्त्रे प्रवीणैरिति भाव । दण्डिमम्मठादिभ: इत्यादि प्रयोगा. तत्तत्सादृश्यार्थे प्रयुक्ता ।

प. २९ "बुद्धिर्मनीषा धी· प्रज्ञा शेमुषी मति" इत्यमर । शेमुषीविषय-

मासादयन् बुद्धिविषयता प्रापयन्नित्यर्थः। श्रीनारायणस्य अगणितगुणगणचिंतन कुर्वन्नित्यर्थ.। "श्रीमध्व कल्पवृक्षश्च जयतीर्थश्च कामधुक्। चिन्तामणिस्तु व्यासार्य. मुनित्रयमुदाहृतम्"।

वराहतनुः श्रीविष्णुः। तस्मात् जनु. यस्याः सा। तस्मादुद्भूता इत्यर्थः।

"भयकर प्रतिभय" इत्यमरः। प्रतिगतं भयेन। प्रादिसमासः। प्रति गत भयमस्मिन् इति वा। प्रतिभयाश्चते भयकराः वन्यकपयश्च।

"मतल्लिकामचर्चिका प्रकाण्डमुद्घतल्लजौ प्रशस्तवाचकान्यमूनि" इत्यमर। नदीषु मतल्लिका। श्रेष्ठनदीत्यर्थ। "बृहस्पति· सुराचार्यो गीर्पति धिषणो गुरु" इत्यमर। बृहस्पत्यादिसुरैः निषेव्यमाणे क्षेत्रे इत्यर्थ.। प्रशस्ता धिषणा अस्येति धृष्णोति इति वा धिषण। ञिधृषा प्रागल्भ्ये।

इति चम्पू भावभावबोधिन्यां तृतीय उल्लासः॥

# चतुर्थ उल्लासः

प. ३१ तृतीये उल्लासे देवांशसंभूतस्य प्रह्लादापरावतारस्य श्रीव्यासतीर्थयोगिराजस्य चरित विचित्रपदविन्यासेन वर्णयित्वा कविवर्या अधुना उल्लासत्रयेण तस्यैव अवतारविशेपस्य श्रीगुरुसार्वभौमश्रीराघवेंद्रतीर्थस्य चरितामृत प्रपञ्चयति तत्र चतुर्थे श्रीगुरुसार्वभौमावतारपूर्वकथासक्षेप, पञ्चमे पूर्वाश्रमेस्थितस्य श्रीवेंकटनाथस्य वेदांतसिंहासनाधिरोहण, षष्ठे श्रीराघवेंद्रगुरुभरो. दिग्विजय वृंदावनप्रवेशश्च वर्णिता. इति विवेक.। तत्रादौ सूत्ररूपेण श्लोकपञ्चके श्रीराघवेंद्रतीर्थस्वामिन. पूर्ववशचरित तच्चरित च जिज्ञासूनामाकाक्षोपरामर्थ सक्षेपतः वर्णयति श्रीकृष्णरायेत्यादिना ।

विजयनगराधिपेन कृस्णरायनृपतिना गुरुत्वेनास्थानपण्डितत्वेन स्वीकृतस्य वीणाकृष्णभट्टस्य पुत्र वीणाकनकाचलभट्ट । सौवर्ण भट्ट कनकाचलभट्ट । तत्पुत्रस्तु वीणातिम्मणभट्ट· कालक्रमेण म्लेछाक्रातहिंदूराज्यात् तत्र देवास्तु नदति यत्र भूदेवतास्थिति. इति न्यायेन विप्रभूमि तुन्डीरमण्डलनामप्रदेश जगाम। स एव पुण्यभाक् तिम्मणभट्टः श्रीगुरुराघवेंद्रेति ख्यातगुरो जनकत्वमवाप कुलपतिवेंकटनाथस्य परमकारुण्येनेति कथा सक्षेप.। मृधभ्रशित इति। शिथिलद्वित्वम्। गुरुप्रस्य. गुरुरित्यर्थः।

किंपचानदशा किं पचितव्यमिति दशाति दारिद्रचमित्यर्थः। कौलेयक्षुण्णपथात् कुलसप्रदायमार्गादित्यर्थः। "कृपीटयोनिज्वलनो जातवेदास्तनूनपात्" इत्यमरः। अग्निरित्यर्थ ।शिक्षाकल्पोव्याकरण निरुक्त छदसा चिति । ज्योतिपामयन चैव पडगो वेद उच्यते ॥ इति वचनात्। "गोपानसी तु वलभी"त्यमर । गृहस्योन्नतं स्थानमाच्छादने। कुटुम्वभर्म कुटुम्वपोपणम्। "भर्ममर्मभृतिर्मर्म" इति शाश्वत.।

घटीयत्र तावत् 'यात' इति प्राकृते कथ्यते। क्षेत्रेपु कूपात् जलाहरणार्थमुपयुज्यते। तत्तु प्रथममधस्तात् कूपे प्रविश्य जलमूर्ध्वमानयति। जल च क्षेत्रेपु तदर्थकृतमार्गमनुसृत्य प्रवहति । अस्मिन् यत्रे एव नीचोच्चताविपर्यास. इत्यभिप्राय.।

विवर्तपरिणामवादानुद्दिश्याय प्रयोग. । तेऽप्रामाणिका इत्यभिप्राय· । वैकुण्ठित. वैकुण्ठवत् कृत. भूलोक. येन स. । स्ववासेन भूलोक एव वैकुण्ठलोकवदभवदिति भाव. ।

श्लोक ६. ब्रह्माद्यैरिति । भृगुऋषि ताडनावमानमसहमाना अत एव वैकुण्ठं त्यक्त्वा करवीरपुर भुवि गता । अथ द्रष्टुकाम. श्रीहरि. भुवं गतः किम् । ब्रह्माद्यै. प्रार्थित. पुरा स्वीकृत स्वसंकल्पं पूरयितुं वा गतः किं भूलोकम् । अथवा धर्मसंस्थापनार्थाय सभवामि युगे युगे इति कलौ चोलराजादीनामधर्मनिर्मूलनपूर्वक धर्मसस्थापनायावततार कि भूमौ । को नाम तस्य संकल्प ज्ञातु प्रभवेतागम्योऽयमत एवेति श्लोकाभिप्राय. ।

श्लोक ७. साक्षादिति । वैकुठितभूलोके साक्षात् स्थितस्य श्रीवेंकटेशस्य परममगल कल्याणवृत्त सूचितमत्र श्लोकचतुष्टये कविभिः। भैष्मी भैष्मकीत्यर्थ. विदर्भाधिपते. भीष्मकराजस्य पुत्री रुक्मिणीत्यर्थ । पद्मावती वेदवती एव, वकुलादेवी यशोदा स्वय वेंकटेशः इति रामावतारकृष्णावतारयोः कृत सकल्प पूरयामास वेंकटेशावतारे। यद्यपि श्रीमन्नारायणावतारेषु नास्ति न्यूनता तथापि पूर्वावतारेषु कृत सकल्प उत्तरावतारेषु पूरयामासेति वस्तुस्थिति चमत्कारेण कथयति । सीताया अग्निप्रवेशे स्वय सीता अपि च अग्नेः सन्निधौ स्थापिता वेदवती अग्निकुण्डात् वहिर्गते। यथा श्रीरामावतारे रामचद्रेण एकपत्नीव्रते सकल्प. तस्मात् स वेदवती न परिणिन्ये परमुत्तरावतारे परिणेष्यामीति वचनं ददौ। सा एव पद्मावती वभूवेति श्रीवेंकटेशमाहात्म्यवर्णिताश । यद्यपि यशोदा श्रीकृष्णजननी तथापि षोडशसहस्रपरिणयोत्सवप्रकारेषु श्रीकृष्णस्य नैकमपि विवाहोत्सव साक्षात्कृतवती। तत्साक्षाच्चिकीर्षुः सा श्रीकृष्णेन आश्वासिता यदुत्तरावतारे तदवकाशो लभेतेति कथापि अत्रानुसंधेया। एव उभयावतारवैभव श्रीवेंकटेशावतारे इति सूच्यते। ईदृगवताराराधनेनाव्ज्य गोपाम्बिकातिम्मणार्ययो मनोगत परिपूर्ण भवेदिति प्रागेव सूचितम् ।

नरसख.—अर्जुनसख. । यथा । यादव श्रीकृष्ण भैष्मी भीष्मराजस्य पुत्री रुक्मिणी प्रणयेन जग्राह तथैव पद्मावतीमुवाहेत्यर्थ. ।

संसाररूपमहारण्यस्य सतरण केनोपायेन सिद्ध्येत् इति जानतावापि इत्यर्थ.

जघालिताच्छोदे अतरवगाहमानमीनकमठनक्रादियादश्चरसचारचीर्णोदरे पद्मसरसि स्थित (तोयनिधि) मुकुरमिव स्थित (तोयनिधि) प्रतिबिंबितानीव

स्थितानि विविधवर्णरञ्जितकोकनदकमलकुवलयेंदीवराणि गर्भीकुर्वंतमिव स्थित तोयनिधि आसाद्य इति अन्वयव्यवस्था। विकचारविंदाना विकसितकमलपुष्पाणा मकरदस्य पुष्पातस्थितस्वादुरसस्य गंध. तेन सुवासितेन गधवहेन वायुना आनीतेन पुष्परज.सघातेन पुष्परजसा संघातेन। प्रवातः पुष्परजोभि साक सरस नीर संघट्टयति। अनेन जघालितं चंचलीकृत अच्छ स्वच्छं अद. यस्य तत्। जघालिताच्छोदम्। तस्मिन्। सरस अतर्भागे मीननक्रादिजलचरा सचरंति। तादृग-संचारेण चीर्ण विभाजितं उदर यस्य तत्। तस्मिन्। "दर्पणे मुकुरादर्शो" इत्यमर। मङ्कते मकिमण्डने। मकुरु दर्दुरौ इति साधु.। "यादासि जलजतव" इत्यमरः। "रक्तोत्पल कोकनदम्" इत्यमरः।

अत्र विशेषोत्प्रेक्षालकार· भासते। देव्याः लक्ष्मीदेव्या. पुजार्थ गन्धर्वाप्सरस स्वालङ्कारभूषासहिता. आकाशे अहमहमिकया स्पर्धया विमानयानै सचरति।

"आकल्पवेषौ नेपथ्य प्रतिकर्मप्रसाधनम्" इत्यमर। तासा भूषणाना अलंकारविशेषाणा वेषभूषादीना च सवादाय सादृश्यप्रदर्शनाय प्रतिबिंबप्रदर्शनायेत्यर्थ·। भूतले स्थापित। मणिशिलाफलकेन खचित प्राकार परिधि· यस्य तत्। प्रतिफलित प्रतिबिंबित. तारापथ आकाश. यस्मिन् तत्। मुकुर दर्पणं। "तारापथोऽन्तरिक्षं च मेघाध्वा च महाबिलम्" इत्यमर.। हरिद्राकुकुमाकितानि आयतानि विशालानि फालकपोलानि एषा तानि। सुरकन्यकामुखानि प्रतिबिंबीभूतानीव। हरिद्राकुंकुमवर्णै चित्रिताना कन्यकामुखाना प्रतिबिंबवत् दृश्यमानानि विविधवर्णरञ्जितानि कोकनदकमलकुवलयेंदीवराणि। "श्याम शितिकण्ठनील कुवलयमिन्दीवरं च नीलाब्ज" इति नाममाला। "सहस्रपत्रं कमल" मित्यमर। गर्भीकुर्वतमिव स्वांतर्भागे निवेशयतमिव स्थित तोयनिधिम्। सलिलस्य उपरिभागे विविधकमलकुवलयादिरूपै दृष्टा प्रतिबिंबा सलिलस्य अतर्भागे नानाविधवर्णरञ्जितमीनादिजलचरजतुरूपै निवेशिता इव आभासते। तादृगप्रतिबिंबरूपै अलकृत सलिलनिधि। अय भाव। आकाशे देवीपूजार्थं विविधालकारभूषिता गधर्वाप्सरस सुरकन्यकाश्च इतस्तत सभ्रमेण सचरति। तेषा मुखानि फालकपोलानि विविधवर्णरजितानि अलकारमण्डितानि च। ते च स्वमुखसौंदर्य स्वयमपि द्रष्टुकामा। तेभ्य. स्वप्रतिबिंबप्रदर्शनार्थं भूतले दर्पण इव स्थापितं एतत् पद्मसर। सुन्दरदर्पणस्य परिधिः सुवर्णरौप्यनिर्मितपट्टिकाभि. खचितः भवति। तथैव पद्मसर· सुन्दरशिलाफलकैः समंतत परिघट्टित प्रतिभाति। प्रतिबिंबा कीदृशा.। सलिलस्य उपरितनभागे नानाविधरक्तनील-

शुभ्रवर्णैः रंजितानि कमलानि जलपुष्पाणि एव प्रतिबिंबाः। एते प्रतिबिंबाः सलिलस्यांतर्भागेऽपि निविष्टाः। सलिलस्य अन्तः विविधवर्णरञ्जिताः भासुरप्रकाशभासिता मीनादिजलचराः सभ्रमेण इतस्ततः संचरति। एते आकाशे सुरकन्यकानां मुखानां प्रतिबिंबा इव दृश्यंते। एवं अनन्यसाधारणकल्पनासौष्ठवेन सुरुचिरपदविन्यासैः उत्प्रेक्षोपमाद्यलंकारैश्च पद्मसरः वर्णयतः कविवर्यः स्वग्रंथस्य चम्पूसाहित्यप्रपंचे अत्यग्रिमस्थानं संपादयति इति सुस्पष्टम्।

प. ३४. अतिलापातजनसमर्दैन। न शक्यः तिलमात्रस्यापि आपातः यस्मिन्। तादृशेन जनसंमर्देन इत्यर्थः। आत्मानं पातयंतः विपर्यस्तगतयः इत्याभ्यां भक्तजनानां श्रीवेंकटेश्वरदर्शनकौतूहलमपि सूच्यते। विपर्यस्ता इष्टमार्गं विहायान्यमार्गे स्थिता गतिः एषां ते। उत्कोच विशिष्टकार्यनिर्वाहमुद्दिश्य अनुचितनियमबाह्यद्रव्यलाभः प्राकृतभाषाया 'लच' इति कथ्यते। तेन परिचितः वामहस्तः एषां ते। उत्कोचस्य निषिद्धत्वात् तद्ग्रहणस्य वामहस्तेन संबंधः क्रियते। स्थानिकाधिकारिणां प्रभावविशेषोऽपि आयुक्तकानां उत्कोचसंधानं विना न फलतीति हास्यरसः सूचितः। एवमुत्तरत्रापि। विश्लेषितानि दूरीकृतानि परिधानप्रावरणानि एषां ते। "वराटकः पद्मबीजकोशे रज्जौ कपर्दिके" इति मेदिनी। अकिंचनेषु दरिद्रेष्वपि वराटकाः कपर्दिकावत् (कवडीति प्राकृतभाषाया) निकृष्टाः तुच्छिताः। तान्। आत्मनः दैन्यं परमात्मनि शरणभावश्च सूच्येते।

११ अभ्रंकष इत्यादिपंचभिः श्लोकैः श्रीवेंकटेश्वरमंदिरस्य वर्णनं क्रियते।

अभ्रंकषं अत्युन्नतम्। आकाशे संचरते गंधर्वाप्सरोगणायापि अत्युन्नतप्रायं। अभ्रं उद्दिश्य कषः औन्नत्यपरीक्षकवस्तु इव स्थितमिति शब्दाभिप्रायः। निलिम्पाः देवाः। तेषां संपदमपि जयति स्ववैभवेनेति निलिम्पसंपज्जयि।

विराजिताः तटित्सदृशाः कांतिविशेषाः। तेषां कोटिसंख्या। तस्याः कूटं एकत्रीकरणं इव स्थितं विमानम्।

१२ "तोरणोऽस्त्री बहिर्द्वा"रमित्यमरः। तोरणे भित्तौ च निखातैः अमरैः नाशरहितैः रूपैः। श्रीवेंकटेश्वरचरितस्य कथानकानि अनेकविग्रहनिखातनेन चित्रितानि इति भावः।

"विष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः" इत्यमरः। द्रुहिणः ब्रह्मा धूर्जटिः शिवः विष्णुः इन्द्रः तथा च अन्ये लेखाः देवाः तेषां व्राताय संघाय।

भूलोके स्थित्यभावात् एते श्रीवेंकटेशचरितं न परिजानन्ति इति भावेनैव तच्च-रित्रप्रसूचकाः विग्रहा. तत्र निखाता इति भाव । विष्णोरनादित्वात् तच्चरित-स्यापि अनादित्वम् ।

१३. प्रोद्यत: खरा तीक्ष्णा नखरा. एषां ते । क्रूरा इति भावः । शार्दूला व्याघ्रा । करटिनः गजा. । तै. प्रकीर्णे । गिरे. मूर्ध्नि उपरितनभागे इत्यत्र विशेषणम् । करटः गजकपोल अस्यास्तीति करटी । निम्लोचे सूर्यास्तसमये । विटपितटे अरण्यस्य प्रांतभागे निविष्टा. करिण. यस्मिन् सः । अनेन अरण्यस्य घनत्वं सूच्यते । तादृशे मूर्ध्नि इत्यन्वय । प्लवगै प्रकीर्णे इति भावः ।

१४. रजसा स्नातः मार्गोद्धूतधूलिभि. व्याप्तगात्र । अथवा भक्तजनाना यात्रिकाणा पादधूलिं पावित्र्यभावेन स्वमूर्ध्नि मुहुर्मुहु धारयन् तेन स्नात इव दृश्यमान । चिरं दध्यौ । बहुकालं ध्यानासक्त स्थित ।

मनोरथरूपद्रुमस्य फलं प्राप्तमित्यर्थ ।

कहल इति वाद्यविशेष. । पटह दुंदुभि । घृणार्णवेन-कृपासमुद्रेण ।

सूचीमुखस्यापि प्रवेशो यथा न स्यात्तथा ।

जना श्रीवेंकटेश्वरदर्शनार्थीरकठ्यात् स्वयमेव पुरत. गतुकामा. परपति-र्निर्दिष्टब्राह्मणं आत्मानमेवाघोषते । अत्र हास्यरस. प्रबंधे नितरा प्रकाशते ।

प्रलोभनरूप आशुशुक्षणि अग्नि तस्य हव्यं आहुतिः ।

ब्राह्मणा इति ब्रुवंतीति ब्राह्मणब्रुवाः । वचनमात्रेण ब्राह्मणा नाचार-विचारसत्यवचनादि धर्मपरिपालनलक्षणैरित्यर्थः ।

यमेवैष वृणतेन लभ्यः इति श्रुतिः ।

न्यभालयत् । अपश्यत् । "निभृतविनीतप्रश्रिता समा." इत्यमर. । विनी-तमार्गेण ।

"प्रवण क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे" इत्यमर । भक्त्या प्रवणः नम्रः इत्यर्थः ।

येन श्रीमनवे इत्यादिना दशावतारस्तुति. क्रियते ।

१९. सरक्षि भावे प्रयोग । सरक्षितमिति भाव । स्वय मोहिनीरूपी भूत्वा ।

२०. कोलस्य इदम् कौलम् । वराहरूपं कायं । पुष्पमाला प्रकंपती माला-

निविष्टं पुष्पगुच्छं मदमपातयदिति भाव' ।

"उदर्क. फलमुत्तर"मित्यमरः । उदर्क्यते । अर्क स्तवने । शुभः एव भावि-फल यस्य तत् । भाविशुभफलसूचकेन ।

पुत्रीयान् पुत्रेच्छावान् ।

२३ श्रीमध्वाचार्य· श्रीबदरिकाश्रमे व्यासाश्रम गत्वा श्रीवेदव्यासमन्निधि प्राप्य तत्रत. प्रतिनिर्वर्तितुमेव नैच्छत् । तदानी श्रीवेदव्यासः श्रीमध्वमादिदेश—

> "कुरुसूत्रभाष्यमविलम्बितं व्रजे
> सुमतेन योजय कवे श्रुतिस्मृतीः" इति ।

तदादेश समानयन् श्रीमध्वः हैमाद्रिकृष्णाश्रमात् हिमालयस्थितवेदव्यासा-श्रमात् नारायाणश्रमादिति वा भुव प्राप इति श्रीमध्वचरितमत्रानुसधेयम् । श्रीमध्वाचार्येण सता कल्याणाभिवृद्धये सच्छास्त्रोपदेशग्रथरचनादिकार्याणि सपादितानि । एवमेव श्रीवेंकटेश्वरप्रसादभाग् तिम्मणार्य· श्रीराघवेंद्रगुरुसार्व-भौम इति प्रथा संपाद्य भुव. कल्याणिनिदानं भविष्यमाण पुत्रं श्रीराघवेंद्रगुरुं जनयित्वा परमात्मन सकल्प यथार्थितवान् इति भाव. ।

चम्पूभावबोधिन्यां चतुर्थ उल्लासः ।

## पञ्चमः उल्लासः

प. ४१. समं अमनुत आर्यवचनं अवार्यसुफलं इति पदच्छेद । आर्याणां वचनं अवश्यमेव सुफलप्रदमिति अमनुत विश्वासमकरोदित्यर्थ. । मन् अवबोधने तनादिगण लङ् । गोपाम्बिकाया दोहदलक्षणानि यतिसार्वभौमस्य श्रीराघवेंद्र स्वामिन भविष्यदवतारस्य सूचकानि आसन्निति युक्तिविशेषै· प्रतिपादयति कविवर्या: ।

"आयुर्जीवितकालो ना जीवातुर्जीवनौषधम् ।' जीवत्यनेन । जीव प्राण-धारणे । जीवेरातु । "जीवातुरस्त्रिया भक्ते जीविते जीवनौषधे" इति मेदिनी ।

धन्वंतरि अमृतोरुकरै जगति मजीवयतीति प्रसिद्धमेव ।

"तरक्षुस्तु मृगादन" इत्यमर. । तरं गति मार्ग क्षिणोति क्षिणु हिंसायाम् । तरक्षुनखनिचितमाला शिशूना दृष्टिदोषपरिहारायोपकल्पते इति प्रसिद्धम् ।

प ४३ श्लोक ३. विय परिणाह विशालता । तस्य सीमा ।

श्लोक ५ श्रीगुरुराजाना पूर्वाश्रमनाम वेंकटनाथ इत्यासीत् । वेंकटनाथः प्रथम स्वाग्रजत. गुरुराजाचार्यात् काव्यालंकारादिषु तत. उपनयनानंतर स्वज्येष्ठ-सहोदर्या· भर्तु· श्रीलक्ष्मीनरसिंहाचार्यात् वेदादिशास्त्रेषु च विदग्धतामवापेति श्रीराघवेंद्रविजये उपवर्णितम् । बाल्ये एव वेंकटनाथस्य पिता तिम्मणार्य. स्वर्ग-लोकमगमदिति ज्येष्ठभ्राता एव पोषणभारमुवाह । भावात् स्वभगिनीभर्तु-रित्यर्थ. । श्रीगुरुराजाना श्रीमध्वपीठे विराजमानाना श्रीसुधींद्रगुरूणामित्यर्थः ।

प. ४४. अकिंचनचिंतासञ्चितसुकृतपञ्चाननः अकिञ्चनस्य परमात्मनः चिन्तया सञ्चित सुकृतपञ्चानन पुण्यविस्तार प्रह्लादः । नरपञ्चाननः नृसिंह । तस्मिन् निचिता दृढ निवेशिता पञ्चेंद्रियाणां चेतसश्च वृत्ति. यस्य स ।

"अपर्णा पार्वती दुर्गा मृडानीचाडिकांबिका" इत्यमरः । अपर्णापतिः परमेश्वर तेनापि वर्णित. विभव. यस्य स. । त श्रीविष्णुमित्यर्थ. । शिव-पार्वतीनामग्रहणेन सकलसौभाग्यकल्याणगणपूर्णिते कुले इत्याशय. प्रकटीभवति ।

उदीर्णाः परिफुल्ला दोषलेशसंपर्करहिता इति भावः । गुणा सकलकल्याण-गुणा तेषामर्णव· सागर इव स्थित· ।

श्लोक ६ यथा प्रभिन्न. सोपाधि. अग्नि. सुशुष्क तृणमपि दग्धु न प्रभवति । यथा धन्वंतर्यमलगुणनाम्ना विषमहालाहलमपि अमृतमभूत् । तथैव द्विजमणि;

अद्धाऽक्षुब्धः समहृदयः आसीत्। इत्यन्वयः। वैराग्यमनोनिग्रहभगवद्ध्यानासक्त्यादिनिमित्तेन दारिद्र्यविकारः तं द्विजश्रेष्ठं नैव प्रक्षुब्धमकरोदिति भावः।

सद्विद्या अधिगन्तुं इच्छया सद्विद्याधिजिगासया। कीरेण यथा पठ्यते तथा कीरपाठम्।

"वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि" इत्यमरः। वावदूकान् अतिशयेन वाचालान् इत्यर्थः।

तर्कवेदांतेषु अधिगतप्रावीण्यस्येत्यर्थः।

एकदा श्रीवेंकटाचार्यः स्वगुरुणा श्रीसुधीन्द्रेण साकं दक्षिणद्वारका इति प्रसिद्धस्य चम्पकारण्यक्षेत्रस्थितस्य राजमन्नारुगुडीति नाम्नः स्थलस्य ईशं श्रीकृष्णं द्रष्टुं समागतः। तत्रैव मायावादिना सभायां कस्मिंश्चित् वादिनि जीवब्रह्माभेदं अधिकृत्य उपन्यासं कुर्वति सति वेंकटाचार्योऽपि गुरुणा साकं उपविश्य तद्वादिना साकं वादप्रसङ्गं प्रारभत। "जीवः ब्रह्माभिन्नः इत्यत्र किं प्रमाणं" इति तीक्ष्णं प्रश्नं पृष्टवान्। तदानीं कश्चित् मायावादी "यस्माद्विश्वं मिथ्या तस्मात्" इत्युक्तवान्। झटिति वेंकटार्यः "किंचातः जीवब्रह्माभेदे मानं नोक्तं प्रपंचमिथ्यात्वकथनेन किमायातं" इति अघोषयत्। निरुत्तरीकृतः मायावादी विषयांतरचिकीर्षया "किंचातः इति शब्दप्रयोगः यः कृतः स न कुत्रापि दृष्टः अतः त्वं अपशब्दप्रयोगेण निगृहीतोऽसि" इति आपादितवान्। परन्तु व्याकरणशास्त्रनदीष्णः वेंकटार्यः झटिति पातञ्जलमहाभाष्ये बहुषु स्थलेषु प्रयुक्तं 'किञ्चातः' शब्दं प्रदर्श्य "शास्त्रप्रसिद्ध एवायं शब्दः। पातञ्जलमहाभाष्यं पठद्भिः सर्वैः श्रुतः। तवाश्रवणमात्रेण नापशब्दो भविष्यतीति" तं निरुत्तरीचकारेति श्रीराघवेंद्रविजये वर्णितं चरितमत्रानुसंधेयम्। तस्यामेव सभायां स्था धातोः यङ्लुगन्तस्य शत्रंतस्य रूपे पृष्टे झटित्येव "तास्थत्" इत्युत्तरं प्रदाय स्थाधातोर्यङन्तस्य रूपं पृष्ट्वा वादिनं निरुत्तरीकृत्य स्वव्याकरणवैदग्ध्यस्य श्लाघनामवाप गुरुभिः सभिकपण्डितैश्च। तदैव श्रीसुधीन्द्रतीर्थाः तस्मै "महाभाष्यं वेंकण्णः" इति विरुदमनुजगृहुः इति कथाऽनुसंधेया।

"मैरेयमासवः शीधुः" इत्यमरः। दानासवं गजस्य मदजलं। तेन मत्ताः भृङ्गाः मदजलपानार्थं परिभ्रमंतः तत्पानेन च मत्ताः भ्रमराः। तेषां माला समूहः। तस्याः तेन साकमित्यर्थः। विलोलाः संचरंतः इभाः हस्तिनः। भ्रमरसमूहसान्निध्यं मत्तेभानां मदविकारस्य तीक्ष्णतां द्योतयति। तेषां घटा समूहः।

तस्याः प्रपाताः। तैः दुर्दांता कष्टेन दमनयोग्या इभघटा इत्यन्वय.। कण्ठीरवः सिंह.। मत्तेभमर्दनेनैव सिंहः वनराजत्वमाप्नोतीति भावः।

श्लोक ८. तथैव प्रमत्तान् जैत्रान् जयशीलानपि। दिगंतेषु श्रुता मेधा एषां ते दिगंत श्रुतमेधसः। "धीर्धारणावती मेधा" इत्यमर.। मेधते संगच्छते सर्वमस्यामिति मेधा। बहुव्रीहिसमासे मेधाशब्दस्य मेधस् इति भवति। लीलाविनोदेन अनायासेन जिगाय।

श्लोक ९. वितथिता व्यर्थीकृताः। मनसिजकुरोपदोषा. कामक्रोधादिदोषाः येन स। कामक्रोधाद्यरिषड्वर्गप्रभावविदूरः इति भावः।

प. ४६ "रहस्तरसी तु रय स्यद." इत्यमर.। कालस्य वेगः कालगतिः इत्यर्थ.। गिरितटात् निसरंती जलधारा यथा वेगेन पुर. सरति तथैव कालगातौ वेगेन प्रचलति सति इत्यर्थ। प्रथ् विस्तारे। प्रथेरमच्। प्रथम इति विस्तारेण प्रचार इत्यर्थेऽपि प्रयुज्यते। श्रीहरितत्वप्रचारायेत्यर्थ.।

दारिद्र्यरूपकृशानो अग्ने. कवलित आहुतिभूतमिव स्थित गात्र देहः यस्य सः। दारिद्र्येण कृशगात्रः इत्यर्थ। "दर्वीकरो दीर्घपृष्ठो दन्दशूको विलेशयः" इत्यमरः। विले शेते। "अधिकरणे शेतेः" इत्यच्। "प्रशयवास्—"इत्यलुक्। संसाररूपसर्पेण संदष्टोऽपि नैव विकृतोऽभूदित्यर्थः।

"सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम्" इत्यमर.। अमति। अम् गत्यादिषु। "अमिनक्षियजिवधिपतिभ्योऽत्रन्।" स्तेनैः पात्राणि वस्त्राण्यपि हृतानि इति कथाऽत्र स्मार्यते। संत्रस्तजनाना शेवधिं कल्याणकरं निधिं।

प. ४७. श्लोक १०. व्याप्ताकाशे अर्भकौकसि अल्पस्थाने च वर्तमानं अत एव अगम्यमहिमान नारायण सर्वदा ध्यायन्नित्यर्थः। दारिद्र्यनिमित्तेन परिछिद्रवास.परिधान भविष्यत्सन्यासाश्रमसूचकमिवासीत्।

श्लोक ११ सुषिरानुबधा. छिद्रसहिताः। अनर्थकाले एव पुनः पुन. अनेके क्षुद्रपीडाः अपि उद्भवन्ति इति भावः। विविधसकष्टपरिप्लुष्टाः अनर्थाः चित्तत्रासकप्रसंगाः देवमाया परमात्मन. माया वदति निवेदयति। अनर्थप्रसंगैः सज्जना. पुनः पुन. परमात्मन. अचित्यमायाशक्तिमेव ध्यायति न तु स्वयमनुभूयमानदुःखेन खिन्ना गोचरीभवति इत्याशय.।

श्लोक १२ कृष्णे क्षोणिपुत्रं नरकासुरं जेतरि सति। नरकचतुर्दशीदिने इति

भाव: । वत्सरे एकमात्रदिने नरकचतुर्दशीदिने तैलाभ्यगस्य अवकाश: आसीत् ।

श्लोक १३. पर्णसघै: स्यूतं निपिद्ध पात्र जहौ । वेंकटनाथस्य गृहे दारिद्रच-निमित्तेन भोजनादिकृते पर्णसघपात्रमपि नाभवत् । अनेकवार भूतले एव भोजन कुर्वंति स्म । परमात्मन. अनुग्रहस्य सत्पात्रत्व प्राप्तु अन्यत् सकलमपि-पात्रं जहौ इति विरोधाभासालकार. ।

श्लोक. १४ वेंकटनाथस्य दारिद्रयातिशय: वर्ण्यते चाद्रायण धारणपारण-भीष्मपंचकविष्णुपचकाद्रिव्रतानि अनेकवारमनुष्ठितानि इति कथानकेन ।

श्लोक १५ प्रमेयनवमालिकाख्या श्रीसुमध्वविजयस्य व्याख्या कृता नारायण-पण्डिताचार्ये । तस्या टिप्पणी रचिता श्रीवेंकटाचार्येण । एव श्रीमध्वरूपि-वायुदेवस्य सेवा कुर्वाणस्य वेंकटनाथस्य लोकगुरुत्वमेव प्राप्तम् । श्रीगुरुगुणस्तवने एव सुरुचिर वर्णितम् यथा—

"धीरश्रीराघवेंद्र कृतनिजविजयस्रग्धरार्थप्रकाश ।
दृष्ट्वा सतुष्टचेता' दशमतिरचिरादभ्यपिञ्चत् पदे स्वे ।"

यथा अर्जुन. धनुर्युद्धे अनवरत विजयशाली आसीत् तथैव वादे सर्वदा विजयशालिन. इत्यर्थ. ।

प. ४७: वैयासकि—श्रीव्यासपुत्र शुकाचार्य: ।

"परिग्रह कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्त्रस्थ-भास्करे" इत्यजय । अपरिग्रहा' संन्यासाश्रमित्वात् पत्नीपरिवारविदूरा अपि विष्णो: वैष्णवमात्रस्य च परिग्रहे स्वीकारे भक्त्या पूजने निष्ठा' रता' इत्यर्थ । परिग्रहशब्दस्य अर्थद्वयेन विरोधोक्तिरूपालकार । एवमेव स्वय भार्यारहिता अपि सकुटुम्बजनै. सम्मानिता. इत्यपि ।

प. ४८. अयस्कातमणि यथा अय' आकर्षति तथैव तव सद्गुणसमूह: अस्म-च्चेत परमानदतुदिल कृत्वा आवर्जयति अवनमयति स्वायत्तीकरोति आकर्षति इति भाव । "तेजसावर्तनी मूषा" इत्यमर । सुवर्णभूषणाना परिशोधनाय युक्त. अग्निपात्रविशेष: ।

अनन्यथयन् अन्यथा न कुर्वन् यथास्थित वर्णयन् इत्यर्थ । आम्नायसमा म्नाय. विष्णुपदस्य मोक्षस्य आरोहण मोक्षप्राप्तिक्रम यथास्थित वर्णयन् तव मुखाग्नि.सरति इत्यन्वय ।

दुर्मतरूपसर्प विपमविपेण सहिता. फूत्कारा एपा ते । तान् इत्यस्य विशेषणम् ।

"क्षण कालविशेषे स्यात् पर्वण्यवसरे महे। व्यापारविकलत्वे च परतन्त्रत्व मध्ययो" इति हैम । क्षणोति दुःखम् इति क्षण.। क्षणु हिंसायाम्। पचाद्यच्। जगतीजनाना उत्सव सतोप कल्याण प्रदातु समर्थस्य वैदिकधर्मरूपकल्प-वृक्षस्य इत्यर्थः। "कुम्भीनस. फणधरो हरिर्भोगधरस्तथा ।" इत्यमरः ।

प ४९ वाग्जाल वाचालुत्व । तदेव विभीषिका भयकारकोपाय.। तेनैव प्रायश. उपजीविन । वहुभाषणरूपोपायमात्रेण प्रतिवादिन भीषयंत। वला-त्कारेण दुर्मत प्रतिपादयत. इत्यर्थः।

गभस्तिमत—सूर्यम्। त्रुटितस्वरव्यञ्जनविशिष्टै तत्र तत्र अपरिपूर्णै वचनै-रित्यर्थः प्रसारितन्यक्कृत वक्रीकृत अवनमित च पूर्वकाय यस्य सः। विनय-पूर्वककथने कृतस्य आकृतिविशेषस्य वर्णनमत्र कृतम्।

अकूपारे-समुद्रे। "सायात्रिक पोतवणिक्" इत्यमरः। समुदिताना गमन द्वीपान्तरगमन वा सयात्रा। सा प्रयोजनमस्य। "तदस्य प्रयोजनम्" इति ठञ्। यथा समुद्रे प्रक्रातु सायात्रिक एव प्रभवति तथा लौकिकव्यवहाररूपसागरे विविधजनताचारविचारपरिणत एव संचलितु क्षमः भवति। तादृशं जनं नियो-जयतु इति प्रार्थना।

मितपचेन अल्पेन। "कदर्ये कृपणक्षुद्रकिपचानमितपचा." इत्यमरः। स्तन-धयात् वालकात्।

धौतोत्तरीयमयी—शुभ्रस्वच्छोत्तरीयवस्त्रमात्र आच्छाद्य तदुपरि सुष्वाप। अनेन श्रीवेंकटाचार्यस्य वैराग्य स्फुटीभवति।

प. ५० श्लोक २० यदा निद्रादूती निद्रादूतीविरहकलुषाक्षिप्तहृदये कृशम-नसि विप्रेअवस्थानं न लेभे तदा सा वहि प्रतिययौ। अविकलकला कलाभि प्रपूर्णा। ब्रह्म रमणी सरस्वती ध्यायती ता च नयती आनयती पुन प्रत्येत्य ता सरस्वती विप्रमनसि आविशत् प्रावेशयदित्यर्थ। प्रथम वेंकटाचार्यः निद्रा नावाप। तस्य मनसि केवल निद्रादूती पद निधातुं प्रयतते। पूर्व सरस्वती तत्र नासीदिति सरस्वतीविरहकलुषाक्षिप्तहृदये इत्यपि अर्थ शक्य.। निद्रादूती सरस्वतीमपि आनीय प्रविवेश। वेंकटाचार्य. रात्रौ वहुकाल निद्रां नावाप। यदा ईषन्निद्राम-वाप तदा स्वप्ने सरस्वती तस्य.पुरत स्वात्मान दर्शयामास इति भाव.।

श्लोक २२. सिद्धांत एव हार्द हृदयगर्भितार्थः तेन अधिकृतात् दृढीकृतात् प्रामाणिकात् कृतिरत्नसंघात्।

श्लोक २३. मम (सरस्वत्याः) भर्ता ब्रह्मा स्ववेदविद्यास्वरूपेण अहं तथा च स्वधाम्ना वैकुंठेन सहित श्वशुर· श्रीलक्ष्मीनृसिंहः चत्वयि (वेंकटाचार्ये) नित्य आस्म । आसम् आस्व आस्म । वसामः इत्यर्थः ।

चतुर्मुखब्रह्मणो विष्णुपुत्रत्वात् सरस्वत्याश्च ब्रह्मपत्नीत्वात् विष्णोः सरस्वतीश्वशुरत्वम् ।

श्लोक २५. अय श्रीराघवेंद्रविजये षष्ठसर्गस्थितः श्लोकः ।

इति चम्पूभावबोधिन्यां पञ्चम उल्लासः ।

## षष्ठ उल्लासः

प. ५३ श्लोक १ सौभाग्यसारवनधि.—सौभाग्यसारस्य पातिव्रत्यसौमंगल्यरूपसंपद वन निवासस्थान धीयते पोष्यते अनेनेति । वनधि: इति शेवधि. इतिवत् साधु । डुधाञ् धारणपोषणयो कर्मण्यधिकरणे च । इति कि । "क्लीब स्यात् कानने नीरे निवासे निलये वनम्" इति रभस. । सौभाग्यसपन्निलयः भर्त्रा पोष्यते अभिवर्ध्यते इति भाव । पतिव्रताना स्त्रीणा सौभाग्यसपत् पतिदेवसनिधानेन नूनमभिवर्धते । यद्वा वनधि जलधि· सौभाग्यसारेण जलधिरिव स्थितः । पूर्ण इति भाव. ।

श्लोक ७. अद्यापि श्रीराघवेंद्रस्वामिना पूर्वाश्रमवशीयै· विवाहादिमगलकार्येषु प्रारभे एव पचसख्याका ब्राह्मणसुवासिनी. आमन्त्र्य ता हरिद्राकुकुमवस्त्रादिभि वायनोपायनादिभिश्च समान्य सौमगल्यसपदभिवृद्धिसूचकपद्यानि गायतीभिः अन्यसुमलीभि स्त्रीभि. आर्तिक्यं कारयित्वा च य. उत्सव सपाद्यते स. हूविल्येति नाम्ना प्रथितः ।

पद ५५. श्लोक ६ भक्तपुण्डलीक. विट्ठलदेव सेवमानः स्ववृद्धपित्रो. शुश्रूषां कर्तुं कचित् समय गतुकामः तत्रैव इष्टिकाया. उपरि क्षण तिष्ठ पित्रो शुश्रूषा कृत्वा पुन. प्रतिनिवर्तिष्ये इति विट्ठल विज्ञाप्य गत. । तत्रैव इष्टिकाया उपरि स्थित विट्ठलदेव नूनमद्यापि शोभते इति कथाऽनुसधेया । तृप्तः पितृशुश्रूषारूपस्वकर्तव्य कुर्वाणो भक्त पुण्डलीकः नून अनुग्रहपात्रमिति सतुष्टः विठ्टलः इति भाव. ।

श्लोक ८. अद्भुते दरवनजे शंखकमले । तयो. दीप्त्या उपलसितौ । हस्तौ कटिप्रदेशे स्थापयित्वा । हरिध्याने सक्तस्य दुरितसागरः कटिमात्रपरिमितः भवेत् । दुरिताब्धेः कटिमितत्वस्य घोषणार्थमेव कटौ हस्तयोः न्यासः इति उत्प्रेक्ष्यते । नृहरे. । हरति इति हरिः । "अच इ." नृणा नायक· । अथवा नृषु हरि सिंह इव श्रेष्ठ इत्यर्थः । नृहरे. पुरुषोत्तमस्य श्रीविष्णोः सुभगवपुः श्रीविठ्ठलाख्यावतारं ।

प. ५६ सर्षप. प्राकृतभाषाया सासिवि इति कथ्यमानं धान्यम् । "सर्षपे तु द्वौ तन्तुभकदम्बकौ" इत्यमर । सरति स्नेहोऽस्मात् । सृ गतौ । "सर्तेरप. पुकच" इति अप. पुगागमश्च । अस्मात् प्राप्तं तैलं सरसतैल इति विदितम् ।

श्लोक ६ मधु उत्तमपूजाद्रव्यत्वेन स्वीकृत भ्रमरमुखान्नि सृत अतः जुष्टम् । तथाऽपि भक्त्याऽनीत परमात्मन इष्टमिति स्वीक्रियते । तथैव कृमिवपुष. क्षौम-कृमिपरिवेष्टनपिण्डात् उष्णजले क्वथनानतर क्षौमतन्तव निर्भिद्यते किल । कृमिदेहनिर्भिन्नत्वेऽपि तादृशवस्त्रस्य अनेकगुणविशिष्टत्वात् शुचित्वेनादर । अत गुणानुबधि एव आदरार्हत्व नोत्पत्तिस्थानकल्पितमिति भावः । आरात् समीपे एव पवित्र । अत्यत पवित्रमिति भाव ।

प ५६ यादवार्याणामनुजस्य पुत्रः । अनाददान न स्वीकुर्वतम् ।

प. ५७. श्लोक १०. "अब्जो जैवातृक. सोमो ग्लौर्मृगाङ्कः कलानिधि." इत्यमर । मध्वसिद्धान्तरूपसागरस्य चन्द्र इव स्थित. । यथा चन्द्रेण अब्धि. उद्वेल प्रसरति तथैव मध्वमत अनेन प्रस्फुरत् सर्वत्र प्रसृत भवतीति भाव. । कलौ य श्रीराघवेद्रस्य सुतरा भक्त. स एव कृष्णस्य अनुवृत भक्त । अत्र हरि एव साक्षी । एतत्सर्व श्रीविष्णुप्रसादेनैव यथार्थ भवति । "मद्भक्तास्त्वामनुव्रता." इति श्रीनृसिंह. प्रह्लादस्य वरप्रदानमकरोदिति श्रीराघवेद्रस्य प्रह्लादावतारत्व च अत्रानुसधेये ।

श्लोक ११. पुभुबुद्धि. पूर्णप्रज्ञः श्रीमध्वाचार्य. । तस्य वल्लभ प्रियः । तत्सिद्धातप्रचारकार्येण सतामुद्धार कुर्वन् श्रीराघवेद्र. नून श्रीमध्वस्य प्रियः । दैवतकुलस्य भूषणप्राय । "पुस्युत्तसावतंसौ द्वौ कर्णपूरे च शेखरे "इत्यमरः । जिह्मवृत्ति हेयताप्रवृत्ति अनादरप्रवृत्ति । तस्या विषय । नैव अनादरणीयः इति भावः ।

प ५७ परीप्सुना प्राप्तुमिच्छुना । कदर्थीकरण तुच्छीकरण अनादरण । पारत्रिकस्य जन्मातरे सुखदस्य पुण्यस्य प्रत्यूहव्यूहेन विघ्नजातेन विना । महात्मना अनादरकरणेन पुण्यसपादने नूनं विघ्नतति उद्भवतीति भाव ।

निगूढ तिरोहित प्रत्यय निश्चलबुद्धि यस्य स । नाह लोकव्यवहार जानामि । नास्ति च मे निश्चयबुद्धिः । तादृश मामुद्धरतु इति प्रार्थना । पुरोभिवृद्धिनिमित्तं । अयमेव वेकण्णपत इति नवाबस्य सचिवो भूत्वा श्रीमठस्य अभिवृद्धिकार्ये धर्मप्रचारकर्मणि च नितरा सहायको भविता इति भविष्य जानत श्रीचरणा तमनुजगृहुरिति भावः ।

प ५८ वेकण्णस्य प्रभुत्वस्य गोचर विषयीभूतम् । वेकण्णेन प्रार्थित गुरुसन्निधि सबहुमानमागत्य दर्शनानुग्रहलाभमुपलब्ध्, प्रार्थित ।

अ त.सत्व वैदिकधर्मे निगूढ दृढ तत्परिपालनेन सपाद्यमान आत्मनिग्रहः

परमन.प्रवेश त्रिकालज्ञान मन्त्रसिद्धि इत्यादिक सामर्थ्यम् ।

हैंदवगुरु । हिंदो. हिंदुधर्मस्याय हैंदव । हैंदवश्चासौ गुरुश्च । तम् ।

निसर्गत स्वभावत: सत्वप्रधानोऽपि प्राधान्यत सत्वगुणसपन्नोऽपि । जीवाना सत्वरजस्तमोगुणविभाग तत्तद्गुणप्राधान्येनैव । प्रत्येक जीवे गुणत्रयस्यैव सत्वेऽपि प्रधानगुणमनुनलक्ष्यैव विभाग. ।

प. ५६. श्लोक १२. विगत: प्रतीपभाव. विरोधभाव: यस्मात् स. । निर्जित वशीकृत. लोकानां चित्तभाव चित्तक्रिया येन स । अग्नौ दाहगुणपरीक्षणरत इव विमूढा सारासारविवेकहीनबुद्धिमान् सवृत्त । मुषित एतादृग बुद्धया वचित: अस्मि इति भाव: ।

श्लोक १३. प्रसभ अतिशयेन प्रसरत् प्रस्फुरत् सुभानुतेज: शुभ्रभानो. तेज· काति: इव काति । तया कमनीय॑ मनोहरम् । अत्यंततेजस्विवपुरित्यर्थ: ।

श्लोक १४ द्रुहिणाण्डं ब्रह्माण्डम् । तस्य नेता सर्वोत्तमत्वेन समस्तलोककुलस्य चराचरात्मकप्रपचस्य च अग्रे पूज्यस्थाने स्थित । "धाताब्जयोनिद्रुहिणो विरिञ्चि. कमलासन" इत्यमर । द्रुह्यति दुष्टेभ्य द्रुह् जिघासायाम् "बहुलमन्यत्रापि" इतीनच् । बाहुलकाद् गुणाभाव. । सर्वोत्तम परमात्मा इत्यर्थ. । तस्य दूत तेन धर्मप्रचाराय प्रेषित प्रतिनिधि । मुस्लिमसस्कृत्यां गुरव अल्ला इति ख्यातस्य देवस्य दूता इत्येव मन्यते । श्रीराघवेंद्रस्वामी देवदूत· इति भाव । स एव मम पाप प्रमार्ष्टुं ईश: समर्थ इत्यर्थ । गुरूणा दर्शनमात्रेण प्रभावित स· खान स्वापराधस्य रीतिं विमृशन् प्रायश्चित्तभावप्रबोधितमतिरभवदिति भाव. ।

प ५६. दुरधिरोहिणी सोढुमशक्या इति भाव । दुराशाशुशुक्षणिहेति दुष्टमन प्रवृत्तिरूपाग्ने ज्वाला । तादृशमन प्रवृत्तिमत द्रोहिणमेव प्रत्यावृत्त्य त निर्दहति । दुष्टमन प्रवृत्ते दुष्टफलानि तमेव बाधते इति भाव । "वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेति शिखा स्त्रियाम्" इत्यमर· । हिनोति हन्ति वा । "हि गतौ" । "ऊतियूनि......" इत्यादिना क्तिन्नन्तो निपातित ।

भग्नान्वयानि परस्पर सबधरहितानि । जिह्रेति लज्जया तिरोहिता भवतीति भाव । ह्री लज्जायाम् । मानेन स्वाभिमानेन समुन्नत उच्चै.स्थित अत एव दुर्विदग्ध दुष्टविचारै प्रक्षुब्ध मानस यस्य स । स्वाहकारेण सर्वदा आत्मानमेव सर्वोत्तम मन्यमानस्य इतरेषा वचर्ननिदनादिदुष्कर्मसु रतचित्तस्य मानवस्य । अन्तत साधुजनसमायोगे सति इति आशय । व्रीडा लज्जा पीडयति

स्वाहकार अवनमयति अल्पीकरोति । शिरोधर कण्ठ शोषयति भयलज्जानिमित्तं शुष्क करोतीति भाव ।

भस्त्रायमाणकुक्षि. । भस्त्र अग्निप्रज्वालकवायुप्रचोदक चर्मनिर्मितसामग्रि-विशेषः । तद्वत् ।

प ६०. "विवर्ण. पामरो नीच· प्राकृतश्च पृथग्जन. ।"

निहीनोऽपसदो जाल्म. क्षुल्लकश्चेतरश्च स. ।" इत्यमरः । अपकृष्टं अपकृष्टे वा सीदति । पदलृ विशरणगत्यवसादनेपु । मानवेपु अपसद. नीचः । मानवापसदः ।

मदशेमुपीणा मदबुद्धीना । नासायाः अग्रे स्थित मौक्तिक ईक्षितु असामर्थ्य नाम समीपे एव स्थितस्यापि समाननीयवस्तुनः महत्तायां विप्रतिपत्त्यभाव· । कीनाशमानवमनीषागतिविदूरे क्षुद्रस्य मानवमात्रस्य बुद्धेः अविपयीभूते महिम्नि इत्यन्वय । मानवस्य गधर्वदेवताद्युत्तमगणापेक्षया क्षुद्रजन्तुत्वात् अल्पसामर्थ्यादि-क्षुद्रलक्षणवत्वात् कीनाशमानवः इति प्रयोगः । "कीनाश कर्पकक्षुद्रोपांशुघातिपु वाच्यवत्" इति मेदिनी ।

प ६० कफोणिगुडायित-व्यर्थ सजात. । कफोणि भुजमध्यग्रथि. । तत्र गुडे स्थापिते सति मुखेन साक्षात् तस्य भक्षण अशक्यमेव । कफोणिस्थित-गुड साक्षात् मुखेन भक्षणार्थ व्यर्थमेव । तथैव विचिकित्साप्रयत्न संशयप्रवृत्ति· कफोणिस्थितगुडस्य मुखेन भक्षणप्रयास इव व्यर्थ. सजात· इति भावः । सौवि-दल्ल सेवक भक्त इत्येवार्थ । "सौविदल्ल कञ्चुकिन स्थापत्या. सौविदाश्च ते" इत्यमर । सुष्ठु विदन्त विद्वासमपि लान्ति वशवर्तिन कुर्वति इति सुवि-दल्ला. स्त्रियः तासामिमे रक्षका । तस्येदमिति अण् । इति शब्दव्युत्पत्तावपि सौविदल्ल. इत्यस्य सेवक. इति सामान्यार्थ. ।

समाचीर्णं च तत् सुकृत पुण्यकर्म । तस्य परिपाक. पक्वता एव । महत्स-मागमरूप· ।

प. ६०. श्लोक १५. दुष्कृते. परीक्षाकरणरूपदुष्टकृते. निष्कृति· परि-हार. । तस्य दुष्परिणामविलोपनं प्रायश्चित्त विना न शक्यम् । विमर्शन विमर्श. भावना । पश्चात्तापसूचकविचारै. कार्यैश्च गुरूणा उपसत्तिः सेवा कर्तव्या ।

श्लोक १६. श्रीमन्मध्वमतरूपरात्रिकमलस्य विलसज्जैवातृक प्रकाश-मानचन्द्र इव स्थित. । यथा चन्द्रकिरणै. रात्रिकमल विकसित भवति तथैव

श्रीमन्मध्वमत श्रीराघवेंद्रमुनिभि. सर्वत्र प्रकाशमान भवतीति भावः। धनधर्ममोहमदत. सिक्त. धनधर्मयोः मोह तस्य मद तस्मात्। सिक्त चिरम-भ्यक्षित । मदस्य जलसाम्यात् मदेन पूर्ण इत्यस्य मदेन सिक्त. इति प्रयोगः। क्षता-क्षम् सहने क्षता क्षमाकर्ता भविता इत्यर्थ । क्षतृ इत्यस्य प्रथमाविभक्ति रूपं वा। क्षमागुणशील. इति ताच्छील्ये तृन्नत ,

श्लोक १७ चन्दनकण. चन्दनकाष्ठ मर्दितमपि गध प्रसुनोति उत्पाद्य प्रसारयति । सु स्नपनपीडनस्नानसुरासधानेपु । स्वादिगण उभयपदी। शरीर शमयन् शरीरस्य शांति प्रयच्छन्। रुक्मस्य सुवर्णस्य शकल एकभाग । ज्वलने अग्नौ प्रतप्तः प्लुष्ठोऽपि अतिशयेन दग्धोऽपि । "चामीकर जातरूप महारजत-काचने। रुक्म कार्तस्वर जाम्बूनदमष्टापदोऽस्त्रियाम्" इत्यमर । रुच् दीप्तौ। "युषिरुचितिजा कुश्च "इति मक्। अगकेपु सुपमा काति तनुते संपादयति ।

पद ६१. श्लोक १८. दुर्विदग्धै. दुष्टजनैः। कृता निकृति दुष्कार्य। क्षात्या क्षमागुणेन सहते । तेपु दुर्विदग्धेपु मुधा अनुकपारस स्रवति सिञ्चति इत्यर्थ.। धूत वृजिन पाप यस्मात् स । वेकण्णनामकेन मम मंत्रिणा ससाधितेन योजितेन गुरुदर्शनेन धूतपापत्वात् धन्य. अस्मि ।

श्लोक २० वहुलखर्वटाना दाने निष्ठ। "यत्रैकतो भवेद्ग्रामो नगर चैकत. स्मृतम्। मिश्रं तु खर्वटं नाम नदीगिरिसमाश्रियम् ।" इति मेदिनी। नदीगिरिसहिताना ग्रामनगरमिश्राणा स्थानाना दाने निष्ठ वद्धादर खानेप्सित खानस्येष्टम्। गुरुराजसन्निधौ वेकण्ण न्यवेदयत्। इति उपरिनिदिष्ट वाचा आदृत. गुरुभरु गुरुश्रेष्ठ· गुरुराट् इत्यर्थ । तुगभद्रानदीनीरस्थित लघुग्राम मन्त्रसदनं अधुना मन्त्रालयनाम्ना प्रथित ग्राम ऐच्छत् । अनेकग्रामदनवा-ग्दानेऽपि एकमेव ग्राम मत्रालयाख्य ऐच्छत् इत्यनेन मन्त्रालयग्रामस्य अनेकग्रामे-भ्योऽपि अधिकमाहात्म्य सूच्यते।

श्लोक २१. वहु रत्नानि अनेकग्रामाश्च दातु इच्छन् अह उंपर क्षारमृ-द्विशिष्टं अतः धान्यरहित अल्पधन अर्थहीन इदं स्थान कथ दद्याम्। एवमुक्तोपि पुन खानप्रभु. तदेव स्थान प्रदातु अभ्यर्थित निर्दिष्ट । दश-रथात्मजस्य श्रीरामचद्रस्य पादयो सगात् पूत पावित स्थानं प्रार्थित । पुरा श्रीरामचंद्र. अत्रैव स्थाने अहल्याया शिलारूपात् उद्धृत्य एकस्मिन् प्रस्तरे कचित् काल विश्रम्य पुन. सचार प्रारभतेति कथाऽत्रानुसधेया।

प. ६१ श्लोक २२ प्रथमपङ्क्तिद्वयेन मन्त्रालयस्थानमाहात्म्य वर्ण्यते । अत्रैव श्रीप्रह्लादः महायागमेक अतनोत् । तथा च अर्जुनानुसाल्वयोर्युद्धमत्रैव प्रचलित । यत्र यावदनुसाल्व. प्रह्लादयागपावितस्थले स्थित्वा युद्धे रत. आसीत् तावत्काल अनेकमन्त्रसिद्धबाणप्रयोगेनापि अर्जुन त नैव पराभवितु शशाक । यदा श्रीकृष्णेन कतिपयपदानि पश्चादागतु प्रचोदितः पार्थः तथा चकार तदानी अनुसाल्व. पार्थस्य पश्चाद्गमनेन सतुष्ट इव तत् पवित्र स्थान विहाय पुरत. समागतः । तदानीमेव क्षणार्धे एव पार्थ त हत्वा विजयी अभवदिति कथाऽत्रानुसधेया ।

प्रह्लादयागहुतभुजा निचित पूरित व्याप्त अतः पवित्रीभूत इत्यर्थः । जिगीषुना जयेच्छुना पार्थेन अर्जुनेन नात्वाय भयकारक स्थान । अवधूत. श्री-राघवेन्द्रयति चकमे ऐच्छत् । कम् कान्तौ । प्रथमगणे आत्मनेपदम् । आत्मनि परमात्मनि रता रतचित्ताः सुखाय स्वसुखाय समृद्ध साम्राज्यमपि न इच्छ-न्त्येव यत् तपसे प्रतीप विरुद्धम् स्यात् । यत् तपस. नानुकूल तत् साम्राज्यमपि नेच्छति ।

प ६१ श्लोक २३. भूरिणी विशाले मानसे ययो. तौ । भूरिमानसौ । संविदल्लौ भक्तौ ।

श्लोक २४. बलिचक्रवर्तिन. अध्वरे दानयज्ञे । एष्यभूत्यै । भविष्यमाण-सकलसज्जनसपत्यै । वराहवपुषः । वराहाख्यरूप धृतात् परमात्मन । वराह-वपु अपि स्वस्यैवेति ध्वन्यते ।

प. ६२ म्लेच्छाचारविदूषित इद स्थान मांसखण्डादिभि. दूषितमपि श्रीगुरुराजाना मन्त्रसिद्ध्या यथा खानभूपस्य मासखण्डादिक पुष्पफलादि संजात तथैव इद स्थान समृद्धिमत् पवित्र भवतीत्याशय ।

विष्णुवैष्णवादीना समूहेन निबद्ध इद स्थान अत्यत सुषमा कांति पुपोष ।

गुरुप्रतिज्ञामन्यथयितु । गुरुप्रतिज्ञा उल्लघयितु । चुल्ली इति चूलाना-मक नित्यपाककर्मणि उपयुज्यमान अग्निप्रज्वलनस्थानम् । अस्मिन् ज्वलद्दह-नस्य अग्ने. ससर्गेण क्वथितजलस्य बिदूनिव ईषदूरक्तयो नेत्रयो. पुटपटलात् अश्रुबिदून् विमुञ्चन् । प्लुष्ट दग्ध । करुणावरुणालया कृपासागरा । उत्तमाग. शिरः ।

श्लोक २७. "स्यादालवालमावालमावाप." इत्यमर । वृक्षस्य मूले कृतस्य

मृन्निर्मितस्य जलाधारस्य आलवालमिति कथ्यते। आ समन्तात् जलस्य लव आलाति। ला आदाने। मूलविभुजादित्वात् क.।

करुणारसस्य आलवाल एकत्र क्रोढीकरणस्थान। करुणासागर त श्रीहरि इत्यर्थ। अस्मिन् मम सनिधानेन पवित्रीकृतवासे वृंदावने साक्षात् श्रीहरिरेव निवसन् भक्ताभीष्टानि पूरयतीति वेकण्ण आश्वासयति श्रीगुरुपादा।

प. ६३. श्लोक २९ तस्य श्रीपरमात्मन ज्योतिषा कांत्या। इद वृन्दावनाख्य गृह। देवर्षीणा चक्रिणा महाराजाधिराजाना गणा.। तेषां सन्निधिना पूत पवित्रीकृतं पार्श्व सनिहितप्रदेश यस्य गृहस्य तम्। वृन्दावनस्य समीपे सेवार्थं अनेके महर्षय महाराजादय समागच्छंतीति भाव। तस्य परमात्मन भावेन सकल्पेन भावित प्रेरित वपु अवतार यस्य सः। परमात्मसकल्पेन अवतारकार्ये रत तत्सकल्प अनुरुद्ध्यैव पुरुषार्थान् प्रददामीति भाव। भक्तवरद भक्ताना अभीष्टदानसमर्थः मुख्यवृत्या परमात्मा एव। तस्मिन् आश्रित चेतनं मन एषा ते। ये विष्णौ भक्त्या रतचित्ता तानह श्रीविष्णुसकल्पेनैव उद्धरामि इति स्वसकल्पं निवेदयति श्रीगुरव। विगतं आत्मात्मीयमोहकलिल एभ्य ते। तादृशान् कृत्वा इति भावः। इद मम इमे मम बाधवा. मदीयाः इत्यात्मकदोषभावात् दूरान् कृत्वा इत्यर्थ।

प. ६४. श्लोक ३०. सुष्ठु गेय गातु स्तोतु योग्य सत्व पुरुषार्थप्रदानमन्त्रसिद्ध्यादिमाहात्म्य यस्य स.।

श्लोक ३१. मनुजाना मतेः बुद्धे वैचित्र्येन विचित्रनिमित्तत्वात् विदल विच्छिन्नं पूर्णतया ज्ञातुमशक्य लीलाजाल। हरे लीलाजाल अपि विचित्रत्वात् अनेकविधत्वात् मनुजानां समग्रतया बुद्धिविषय न भवितुं शक्यते। सुरवराणा गुरो. श्रीप्रह्लादस्य। सुरवरश्चासौ गुरुश्च इति वा। तस्य वीर्य महिमासामर्थ्य न जानीम। हरे माहात्म्यमपि समग्रतया ज्ञातुं वय असमर्थाः। प्रकृष्टा. दोषरहिता समग्रा. गुणा. सुगुणा यस्मिन् स.। तादृशहरे कारुण्येन निचितं व्याप्त कारुण्यस्य पूर्णपात्र राघवेद्रगुरु न अज्ञासिष्म। नैवाजानीम। ज्ञा-अवबोधने लुङ्। यथा सुरा. नक्रादिजलधिं स्व सपद संपत्कर इति समुद्रमथनात् प्राक् न विदितवन्त तथैव। समुद्र नक्रादिजलचरवान् इत्येव सामान्यतः ज्ञायते। समुद्रमथने च साक्षाल्लक्ष्मी उद्भूता। नवरत्नानि ऐरावतसुधादयश्च प्राप्ता.। अनेन समुद्रस्य सपत्करत्व विदितमभूत्। श्रीगुरूणा अद्यापि सपूर्णमाहात्म्यं न जानीम इति तेषा अगम्यमहिमत्वमुपवर्ण्यते।

श्लोक ३३ अस्मत्क अस्मदीयं उदारभाव मनस औदार्य प्रथमं विष्णो.

इत्यमर.। दु खितं मन अस्य।

भस्त्रवत् स्थिते अस्थिमज्जामांसमेद.पञ्जरे। श्रीगुरुदर्शनाभावे स्वशरीरस्य निकृष्टत्वं निवेदितमनेन। अप्पणाचार्य. मार्गे एव श्रीगुरुस्तोत्रं "श्रीपूर्णबोधे" त्यात्मकं मुखादुद्गिरन्नेव श्रीवृन्दावनसन्निधिं यावत् धावन् समागतः।

प. ६५. श्लोक ३६ "साक्षी हयास्योऽत्रहि" इति वृन्दावनात. श्रीगुरुराण्मुखात् ध्वनि· नि सृता।

प. ६६. श्लोक ३७. द्रुहिणचरणसक्त· ब्रह्मण: सेवायां रतः।

श्लोक ३८ यन्मूर्तिग्रहणं। तप्तकाचनसंकाशस्य अक्षमालाकमण्डलुधारिणः कापायवसनस्य तुलसीदामवक्षस श्रीराघवेंद्रमूर्ते. चिंतन। गुणपूर्णहरे. मागल्यधाम्न वैकुण्ठलोकस्येति यावत् प्रदं प्रापक। सद्भि. मन्त्रवर्णै वेदैरपि आदृतम् मानत्वेन स्वीकृतं पुराणपटनम्।

श्लोक ३९ वियति-आकाशे। मगलस्य भूमा आधिक्य। परिपूर्णता। मांगल्यपूर्णे इति यावत्। विधौ विधातरि ब्रह्मणि हमति सति सतुष्टे सति दारिद्र्यस्य पीडा कथं वा भवेत्। नैव भवति इत्यर्थ.।

प. ६७. एवं गुरुभि. चपूग्रथने आज्ञप्ता. कविवर्या. गुरुसार्वभौमाणा अवतारत्रयकथामृतं पष्ठोल्लासं यावत् सरससुललितपदविन्यासैः गद्यपद्यात्मकै प्रबन्धै. ज्ञानपिपासातुरजनाय पाययित्वा अधुना श्रीचरणाना सन्निधौ पुनरागत्य तेपां अनुग्रहविशेपं सप्तरात्रोत्सववर्णनासामर्थ्यं प्रार्थयते "पूज्यपादाना तत्रभवतां••••••"इत्यादिना।

प. ६८. आनाभि नाभिपर्यंत आलम्बिभि । वृपस्कधाः। वृपभस्य स्कंध वत् विशालस्कधा ।

श्लोक ४२. श्रीसुयमीन्द्रपूज्यचरणा. शिष्ट अवतारत्रयवर्णनानंतरमवशिष्टं श्रीसप्तरात्रोत्सवं गुणै. पुष्टिकर सरसप्रबधलक्षणै. पुष्टं अथवा श्रीगुरुसार्वभौमस्य गुणै: गुणानुवर्णननिमित्तेन पुष्टिकरं तृप्तिकर श्रुतिमतस्य वेदनिर्णीतसत्सिद्धान्तस्य आलंबनं आश्रयभूत सत्सिद्धातप्रतिपादकमित्यर्थ। तादृश प्रबधं वाक्चयै. वाक्यसमूहै निर्मातु आज्ञा दत्ता।

इति चम्पूभावबोधिन्यां षष्ठ उल्लासः।

# सप्तम उल्लासः

सप्तमोल्लासादारभ्य त्रयोदशोल्लासपर्यंत सप्तसु उल्लासेषु प्रत्युल्लासं एकदिनोत्सववर्णन इति प्रकारेण सप्तरात्रोत्सवस्य वर्णनं क्रियते।

पचेलिमा—पक्वता। पूर्वजन्मसंचितपुण्यरूपफलस्य परिपक्वता नूनं सिद्धिं प्रददाति।

"समुद्रोऽब्धिरकूपार पारावार. सरित्पति." इत्यमर। पारमावृणोति इति पारावार.। वृञ् वरणे। कर्मण्यण्। निरपवादमधुरभावपदेन श्रीमुधर्मीन्द्राः स्वीयशिष्येषु सदाऽपि कालत देशतो वा अपवाद विनैव मधुरभाव स्नेहभाव प्रदर्शयति स्म इति सूच्यते।

"किञ्जल्क केसरोऽस्त्रियाम्" इत्यमर। किंचित् जलति। जल अपवारणे। बाहुलकात्क। अनुपासित गुरुपदपङ्कजयो. किञ्जल्कोऽपि येन स:। गुरुपादधूलिरपि न सेविता इति आत्मन असहायताभावं विशदयति कविवर्याः।

"अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुल." इत्यमर। कनिष्ठया सह विततेऽङ्गुष्ठे वितरयति इति वितरित। तसु उपक्षये। "वो तसे." इति ति।

त्रैविक्रम पराक्रम पादत्रयेण लोकत्रयव्यापनात्मक। विस्तारिचरित्रवर्णने इपदपि प्रगति न साधयितु प्रभवामीत्यर्थ।

श्लोक १. अक्षमा. अयोग्याश्चते निरक्षरकुक्षयश्च विद्याविहीनाश्च अत एव सारासारविवेकशून्याश्च। तै दैत्यैः। "क्षमा तितिक्षा पृथ्वी च, योग्ये शक्ते हिते क्षमम्।" इति धरणि.। क्ष्माकक्ष भूप्रदेश। अक्षीण नितरा-मित्यर्थ। वृजिनकर्मभिः पापकर्मभि. दैत्यै भूमण्डल परिपीडितमिति देवा स्वपक्षबलस्य संग्रह प्रार्थयते। "स्त्रिया तु महतिवृंदं निकुरम्ब कदम्बकम्" इत्यमर। श्रीमत्रालयक्षेत्रे दैत्या न पदमपि स्थातुमल भवेयु तत्र देवाना यूथ्यस्य समग्रतया सन्निहितत्वात् इति भाव.। "सभ्रमस्त्वरा" इत्यमर। त्वरया इत्यनेन ससंभ्रम सोत्साहमिति अविलम्ब इत्यनेन कालातिपात विना इति अर्थभेद.। अथवा त्वरया अविलबमिति द्विरुक्ति. उत्सवौत्कण्ठ्यद्योतनार्था।

संप्रदायागतपद्धति सर्वैरपि ज्ञेया इत्याशयेन स्वयात्राक्रमवर्णनव्याजेन पादसचलन स्नान कृत्वैव निर्गमन, मन शुद्धि, निराहारत्व इत्यादिक वर्णयंति कविवर्याः ।

कुसुमितः लोध्रवृक्ष. केवल पुष्पैरावृतो भवतीति पुलकितदेहस्य उपमा अत्यतं युक्ता एव ।

त्रिकूटमिति पापाणविशेपमात्रार्थे प्रयोगः । कृष्णवर्णपापाणस्य पट्टिकाभि निर्मिते ।

पुरटपुट सुवर्णपात्रम् । भक्तानाकुर्वंत भक्तान् अनुग्रह अभीष्टदान च स्वीकर्तुं आह्वयतमिव स्थितम् ।

श्लोक ६—मुकुंदभक्ति गुरुभक्तिजा इत्यर्थ सूचित । वाय्वाविष्ट-प्रह्लादावतारत्वात् श्रीगुरुसार्वभौमा स्वभक्तान् परमात्मान प्रति वायुद्वारा नेतु प्रभवति इत्यपि आशय ध्वन्यते ।

मध्वाध्वग मध्वस्य अध्वनि मार्गे श्रीमध्वाचार्योपदिष्टसिद्धातमार्गे गच्छन्नित्यर्थ । माध्वसिद्धात विदित्वा तमनुसृत्यैव आचरन् जन मोक्ष अवश्य प्राप्नुयादिति भाव सूचित ।

श्लोक ८. परधनस्य आहरणस्य ईहा इच्छा । जनसामान्यस्य ससारावस्था निर्दिष्टा अत्र । इया गच्छेयम् । इण् गतौ । विधिलिङ् ।

(९) "निधिर्ना शेवधि" इत्यमर । शे कल्याणे मोहे वा अवधिः । यद्वा शेते अनेनेति शेव सुख । शेव धीयते अस्मिन् । "इण्शीभ्या वन्" । धाञः । कर्मण्यधिकरणे च इति कि । भक्ताश्रय. परहितार्पितचित्तवृत्तिरसि इत्यन्वय. । नृहरे मसेवया नृहरे वरमाप्य इत्यन्वय । प्रह्लादावतारे इत्यर्थ । "मन्वन्तर-मेतदत्र दैत्येश्वराणामनुभुक्ष्व भोगान् । ...भवति पुरुषा लोके मद्भक्तास्त्वा—मनुव्रता । भवान्मे खलु भक्ताना सर्वेषा प्रतिरूपधृक्" इति श्रीनसिहदत्तवर-विशेषा भागवते सुष्ठु वर्णिता ।

श्लोक १० वरवायुधामन्—वाय्वाविष्ट. श्रीप्रह्लाद. एव श्रीराघवेंद्र-रूपेणावतीर्ण इति प्रसिद्ध विद्यते ।

सम्+इया । सम्यक् प्राप्नुयाम् । इण् गतौ विधिलिङ् । "मतल्लिका-मचर्चिका प्रकाण्डमुद्‌ग्रतल्लजौ । प्रशस्तवाचकान्यमूनि" इत्यमरः । म शभु चर्चति । चर्च-अध्ययने ण्वुल् । अर्चकश्रेष्ठा. इत्यर्थ. । आगताना परिचिताना

कुशलाभापण अर्चकाचार्यै नियमेन क्रियते इति अनुभवसिद्धम् । वाहा वाहुः । वाहाना वध परस्पर वधनम् ।

"अभ्र मेघो वारिवाह स्तनयित्नुर्बलाहक" इत्यमर । स्तनयति । स्तन गदि देवशब्दे । चुरदिगण । चुरादावदन्त । "स्तनिहृपि—" इतीत्नुच् । "अयामन्ता—" इति णेरय् । अकालेति अनिरीक्षितार्थे प्रयोग ।

"कुण्ठोऽकर्मण्यमूर्खयो" इति मेदिनी । कुण्ठि प्रतिघाते आलस्ये च । पचाद्यच् । अकुण्ठ मेधावीत्यर्थ । हृदयमेव सुम पुष्पम् ।

सप्तरात्रोत्सवस्य प्रप्रथमदिने एव सकलदेवा तत्र श्रीमत्रालयक्षेत्र विशेपाशै समागता ताश्च श्रीमुयमीद्रा तच्छ्याया नूा दृष्टवत इति सुन्दर वर्णित कविवर्यै ।

श्लोक १४. घटा च दर शख च तयोरर्चनम् ।

प. ७६. श्रीहरिगुरुध्याने रताना श्रीस्वामिना चित्तविक्षेपो माभूदिति शिष्यै दूतैश्च भूय पराक्पठनमिति भाव ।

श्लोक २४ धन्य धनाढ्यकुलज शीनप्पनायक इति प्रथित कदर्य आसीदिति श्लोकस्य पूर्वार्ध । जरठ —वृद्ध । परमात्मैव वृद्धब्राह्मणवेपधारी भूत्वा शीनप्पनायक प्रति आयाचनार्थ समागत इति कथा स्मार्यते । "कदर्ये कृपणक्षुद्रकिंपचानमितपचा ।" कृपण इत्यर्थ । कदर्य कुत्सित अर्य स्वामी । "कुगति······" इति समास । "को कत्तत्पुरुपेऽचि ।"

श्लोक २५ तुष्टहृत्—स शीनप्पनायक ।

श्लोक २६ निघ्नता—अस्वातन्त्र्यम् । "अधीनो निघ्न आयत्तोऽस्वच्छदो गृह्यकोऽप्यसौ ।।" इत्यमर । निहन्यते निगृह्यते इति निघ्न । हन्ते घञर्थे क । चिच्चेत्ययो —चेरथ चिता चेतनेन नियमित चेत्यम् । अचेतन जड इत्यर्थ । मणिमत्प्रोक्त नीरस मत वौद्धाद्वैतादिमत । समग्रमध्वसिद्धातसार श्लोकार्धे एव निरूपित । "ऊधस्तु क्लीवमापीनम्" इत्यमर । आपीनं स्तनमित्यर्थ । "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इत्यमर । रदा छाद्यन्ते अनेनेति रदच्छद । छद सवरणे । "पुसि" इति घ । "छादेर्घे—" इति ह्रस्व । ओष्ठयो निपीडनेन गवा रञ्जक ध्वनिविशेप उत्पाद्यते गोपालकै ।

ऋक्षाणा नक्षत्राणा ईश ऋक्षेश चन्द्र । तस्य सहोदरी धेनु । सुरभ्या अपत्य सौरभेयी । सुरभिनामकगोः अपत्यम् । "माहेयी सौरभेयि गौरुस्रा माता च शृङ्गिणी ।" इत्यमर. ।

श्लोक ३४. यदा क्षुत्क्षामदेहा प्रजा पृथुपराक्रमे पृथुमहाराजं अन्नदान-याचनया शरण ययु. तदा पृथु. क्रोधेन भूमिं हंतुमुद्यतो भूत्वा तामन्वपद्यत। भयार्ता भूमि· प्रवेपमाना धावंती सर्वत्रापि उद्यतायुध तमेवापश्यत्। अ ते त्रस्ता धरा पृथुना चोदिता अन्नदोहनकर्मणि स्वप्रवृत्तिं अङ्गीचकार।

"वत्सं कल्पय मे वीर येनाहं वत्सला तव।
धोक्ष्ये क्षीरमयान्कामाननुरूप च दोहनम्॥
दोग्धार च महाबाहो भूताना भूतभावन।
इति प्रिय हित वाक्यं भुव आदाय भूपति।
वत्स कृत्वा मनु पाणावदुहत्सकलौषधी·॥"

इति भागवते चतुर्थस्कन्धे निरूपिता कथाऽत्र स्मार्यते।

श्लोक ३५ "घनजीमूतमुदिर जलमुग्धूमयोनय" इत्यमर·। मोदन्ते-ऽनेन इति मुदिर। मुद् हर्षे। "इषिमदिमुदि............" इति किरच्। वीप्सया पुन पुन। असौ श्रीगुरुराघवेंद्र भक्ताना अभीष्टदानकर्मणि रविमपि जयतीत्यर्थ।

प. ८१. मृणालवत् कमलविसवत् मेदुर कोमलस्निग्ध गात्रं यस्या सा। "सान्द्रस्निग्धस्तु मेदुर" इत्यमर। मेदनशील। "ञिमिदा स्नेहने। भ्वादिगण आत्मनेपदी।" भञ्ज भास......" इति घुरच्। पुरोहितप-ञ्चानन: पुरोहितश्रेष्ठ। पञ्चोपचारा·—अर्घ्य पाद्य आचमनीय मधुपर्क पुनराचमनीयं इति पञ्चोपचारा।

श्लोक ३६ अन्नपूर्णहरिभामिनि अन्नपूर्णस्य हरे। सकलान्नस्य मुख्या-त्तृत्वात् अन्नपूर्णत्व हरेरेव। भामिनि प्रिये। हरिरेव अन्न अत्ति मुख्यतया भुनक्ति। हरिरेव अद्यते। कर्तृत्व कर्मत्व च उभावपि विशेषसामर्थ्यात् हरौ युज्येते। इति गीयते श्रुतिषु इत्यर्थ। अनेन हरे उपजीव्यता सर्वाश्रयता "ॐ अत्ता चराचरग्रहणात् ॐ" "ॐ कर्मकर्तृव्यपदेशात् ॐ" इति ब्रह्मसूत्रे अत्र ध्येये।

श्लोक ३७ विष्णुरेव अवनौ कृपिसपदा अतिपवित्रगोत्रजा अतिपावन रूपेणावतीर्णा अन्नदात्री अन्नपूर्णा इति भाति। अन्नपूर्णाया. सामान्यत: अभिमानिदेवतारूपत्वेन पूजितत्व लोके दृश्यते। पर मुख्यतया अन्नादातृत्वं परमात्मन एवेति विष्णुरेव अन्नपूर्णा इति प्रतिपाद्यते।

प. ८२ श्लोक ४१. सप्तरात्रोत्सवाख्ययज्ञाचरणे। यज्ञाचरणार्थम्। गुरु.

श्रीसुयमीन्द्रगुरु गुरुराण्मुखे गुरुराजाना श्रीराघवेन्द्रस्वामिना मुखे समुखं। आजुहोति। आभोगः दिग्वलयः।

अस्मिन् वेदनित्यत्वोपन्यासे प्रतिपादिता विषया. यथा-(१) वेदाना स्वरूप-चर्चा (२) नित्यत्व नाम सजातीयानुपूर्वीकत्वमिति प्रतिपादन (३) बौद्धार्हतादीना नित्यत्वाक्षेपकवादाना निरास (४) आधुनिकविमर्शकाना आक्षेपस्य निरास। ऋषिमुनिप्रदेशभेदनाम्ना अनादिकालसगतिप्रतिपादन च। (५) वेदनित्यत्वं समर्थ्य तत्र प्रतिपादित अर्थ विष्णुसर्वोत्तमप्रतिपादनपर जीव-ब्रह्मभेदपर एव न तु अद्वैतपर इति विवेचन। एव उपन्यासविषयसग्रह।

इति चम्पूभावबोधिन्यां सप्तम उल्लासः।

## अष्टम उल्लास:

प ९० प्रत्युपसि—प्रात काले "प्रत्यूपोऽहर्मुख कल्यमुप प्रत्युपसी अपि" इत्यमर ।

"शृङ्गारहास्यकरुणरौद्रवीरभयानका । बीभत्साद्भुतसञ्ज्ञौ चेत्यष्टौ नाट्ये रसा स्मृता ।" एतं. अष्टरसं साक शातरसोऽपि परिगण्यते । निर्वेद-स्थायिभावोऽस्ति शातोपि नवमो रस । एव नव रसा. । नवरसं. भासुरा नाडीरूपशलाका । सर्वे रसा हृदये एव पदमावहति । अधुना करुणशातर-सात्मक. भक्तिरस उत्पन्न. इति भाव ।

श्लोक १—वदारुभ्य वदनशीलजनेभ्य. कल्पकतरु कल्पतरुवत् सकला-भीष्टप्रद । आश्रितजनाना वरद अभीष्टद । तुगानद्या तरगैः परिषेवित सुन्दराग यस्य सः । नन्दात्मज नन्दपुत्र श्रीकृष्ण । भवसागरभयस्य भञ्जन नाशकारक आदिदेव वन्दे ।

श्लोक २—हे तमस. निहन्त. नाशकारक । यस्य सेवया कपि. हनुमान् वाय्ववतारत्वात् भाविब्रह्मपदवी प्राप्नोतीति कथाऽनुमधेया । विहत. विनष्ट. प्रतीप. शत्रु हिरण्यकशिप्वाख्य. यस्य स. । परापरपद राज्य मोक्ष च इति भाव ।

श्लोक ३ देवर्षि नारद । तस्य वाक्य करोति । तस्य भविष्यवाणि-मनुलक्ष्य । ध्रुव पर चिरस्थायि स्थानं ।

श्लोक ४. विप्रोपदिष्टमनुना विप्रेण नारदेन उपदिष्टमार्गेण ।

प. ९१. प्रत्यग्रानीतकुभोदकेन—तदानीमेव आनीतेन कुम्भोदकेन । "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः" इत्यमर. ।

प. ९२ पावनधुनीवनावगाहनाय । पवित्रनदीजलस्नानाय । धुनी—"तर-ङ्गिणी शैवलिनी तटिनी ह्लादिनी धुनी" इत्यमर. । धुनोति वेतसादीन् । क्विप् । पृषोदरादित्वात् नुक् । नान्तत्वान्ङीप् ।

वन—जल "पय. कीलालममृतं जीवन भुवन वनम् ।" इत्यमरः । वन्यते सभज्यते सेव्यते वा वनम् ।

असख्यस्त्रीपुरुषाणा सहत्या समूहेन नदीप्रवाहे तरगविशिष्टे भवति सति। अनेकजनाना सचलनकरास्फालननिमज्जनोत्थानादिभि नदीप्रवाहे विपुलतरगा उद्भवतीति अनुभवसिद्धम्।

नामधारण विना न सकल्पावकाश। अत जलेन नामधारण कृत्वा सकल्प कृत्वा पुन स्नान इति नियम। उपसीदता—समीपमागच्छता।

करधृत कलधौतकरक यै ते। करक कमण्डलु जलपात्रम्।

प १३ सूचीपातरवमसहमाना। सूचीपातेन य अल्परव. भवति तमपि असहमाना। अत्यत तूष्णीमिति भाव.।

प ६४ अढौकत—ढौकृ गतौ भुवादि गणे आत्मनेपदम्। लङ् कार्यनिर्वाहक भाविभाषणचमत्कृति अढौकत न्यवेदयत्। गत्यर्थधातूना ज्ञानार्थकत्वमिति न्यायेन निवेदनार्थ प्राप्यते।

सूचीकटाहन्यायेन—सूचीकटाहयोर्मध्ये सूचीनिर्माण कटाहनिर्माणापेक्षया सरलतर। अत अनयोर्मध्ये प्रथम सूचीनिर्माणमेव प्रारब्धव्यम्। एवमेव सरलकठिनकार्यद्वयस्य मध्ये सरलकार्यस्यैव प्रथम प्रारभ अनेन न्यायेन सूच्यते। अत्रापि सामान्यजटिलविषययोर्मध्ये सामान्यविषयस्य सरलगम्यत्वात् स एव प्रथम निरूप्यते इति भाव।

अस्मिन् चपूप्रबधे वेदान्तविषया अपि उपन्यासरूपेण जिज्ञासुजनाववोधाय निरूप्यते इति अय इतरप्रबधेभ्य विशिष्यते। अद्य द्वितीयदिनोत्सवागतया प्रमाणलक्षणमधिकृत्य उपन्यास प्रचलित। श्रीमन्मध्वाचार्यै विरचित प्रमाणलक्षणाख्य ग्रथ अनुसृत्यैव विषयविवेचन कृत वर्तते उपन्यासकारै। अत्रोपपादितविषयसग्रह एव कर्तुं शक्यते।

(१) सशयविपर्ययभिन्नत्वेसति यथावस्थितज्ञेयविषयीकारित्व प्रमाणसामान्यलक्षणम्। (२) यथार्थज्ञान तस्य करण साधन च प्रमाणशब्देन निरूप्येते। ज्ञानसाधनानि इद्रियानुमानशब्दा। (३) प्रमाण केवलप्रमाण अनुप्रमाण इति द्वेधा। ईशज्ञान लक्ष्मीज्ञान योगिज्ञान इति त्रिविध ज्ञान केवलप्रमाण। तत्साधनानि त्रीणि अनुप्रमाणानि। तत्र इद्रिय अज्ञातकरण अनुमानागमौ ज्ञातकरणौ। (४) प्राभाकरभास्करभाट्टनैयायिकादीना प्रमाणलक्षणोक्तीना निराकरणम्। (५) अनुप्रमाणाना विषयाणा च दोषकथनम्। इन्द्रियविषयभेदात् अर्थवचनभेदात् पौरुषेयापौरुषेयभेदेनच दोषचर्चा। (६) इतिहासपुराणपचरात्राद्यागमाना पचमवेदत्वेन पौरुषेयागमत्वचर्चा। ऋग्यजु सामाथर्वभेदेन चतुर्विधाना

गानभेदेन अर्गतानां वेदान्तमर्यादैवस्वप्रतिपादनम् । एवं उपन्यासे उपपादितः विषयाणां संग्रहः । प्रमाणलक्षणमनुपपाद्य प्रमाणानां बलाबलविवेकः अन्यस्मि-न्नुपन्यासे क्रियते इत्याश्चर्यस्य विरमतीति उपन्यासकाराः ।

प. १०२. नारात् । आरात् इत्यस्य दूरतः इत्यर्थेन नारात् इत्यस्य समी-पतः इत्यर्थः । "आराद्दूरसमीपयो"रित्यमरः ।

तृतीययामादौ । दिने अष्टभागेषु कृतेषु एकभागस्य षष्टात्रयस्य याम इति निर्देशः क्रियते । मध्याह्ने द्वादशवादनसमये दिनस्य द्वितीययामः समाप्तिं गच्छति । तृतीययामस्य आदौ प्रारम्भे एव । द्वादशवादनादर्वागेव इति भावः ।

समलमल्लकेन मलमल्लकाख्यविशिष्टतन्तुसमवायेन सहितेन । आवर्तयन्तः स्पष्टं पुनः पुनः पठन्तः ।

प १०३. भिन्नभिन्नभक्ष्यभोज्यादिषु भिन्नभिन्नदेवता अभिमानिरूपेणा-तिष्ठन्ते । जगन्नाथदासविरचिते श्रीहरिकथामृतसारे नैवेद्यप्रकरणाख्यसंधौ अयं विषयः विशदतया विवेचितः । अन्ने केशवः पायसे भारती नारायणश्च भक्ष्ये माधवः लक्ष्मीश्च घृते गोविन्दः क्षीरे सरस्वती विष्णुश्च नवनीते मारुतः दध्यां त्रिविक्रमः सूपे गरुडः पत्रशाकादिषु श्रीधरः सर्वाम्लभक्ष्येषु गौरी दामोदरश्च । शर्करागुडादिषु वृत्रारिः सर्वत्रापि वासुदेवः इति तत्तदभिमानि-व्यवस्था ।

प १०४ अस्मिन् चम्पूप्रबन्धे वाच्यनाटकानि विशिष्टशैल्यां निवेशितानि । श्रीमध्वचरित्रादिकथाविशेषान् विषयीकृत्य प्रवृत्तानि वाच्यनाटकानि अमुं इतरचम्पूग्रन्थेभ्यः विशिषन्ति । पुरा महाभारतादिग्रन्थाः ग्रन्थिकैः वाचयित्वा तत्स्थकथा सभिकेभ्यः निरूपिता भवति स्म । अधुना उत्तरभारते रामलीला-दिप्रसङ्गेषु दक्षिणभारते यक्षगानादिप्रसङ्गेषु च नटाः रङ्गे न भाषमाणाः नटन-मात्रं कुर्वन्ति । पूर्वरङ्गे च संगीतकाः नाट्यवाचनं कुर्वन्ति वाद्यमेलापकेन साकं । अन्तरान्तरा रङ्गे नटनमपि न प्रचलति । किन्तु वाचनकलानिष्णाताः वाचनिकाः नाटकवाचनादिना समुचितध्वनिविन्यासादिना वाद्यमेलापकेन च कथावस्तु निरूपयन्तः सभारञ्जनं कुर्वन्ति । अत्र प्रस्तूयमानं श्रीगुणकनिजश-नाटकं इतरोल्लासेषु प्रस्तुतानि नाटकानि च वाच्यनाटकशैल्यां विद्यते । नटनटीव्यवस्था प्रवेशनिर्गमनादिसूचना, नेपथ्यसंगीतकथनं च यावच्छक्यं तावत् नाटकाभिनयं कर्तुं शक्यते [illegible] यितुं कृतानि । वाचकादीनि

वाचनिकै कथावस्तु निरूप्यते अन्यदा च नाटकाभिनयेन साक वाचनिकध्वनिमेलापन क्रियते । अय नून मस्कृतवाङ्मयक्षेत्रे अतिनूतन रञ्जनप्रकार उपनिबद्ध एपु वाच्यनाटकेपु ।

श्रीसुमध्वविजयनाटके प्रथम नान्दी सूत्रधारेण कथावस्तुनिरूपण तत. पट्सु प्रवेशेपु श्रीमध्वाचार्याणा चरित्रे कतिपयमनिवेशा चित्रिता । प्रथमे शिशो वासुदेवस्य वाललीला । द्वितीये वासुदेवस्य उपनयनानतर अध्ययनं तृतीये अच्युतप्रेक्षात् सन्यासस्वीकार आनन्दतीर्थेति नामग्रहण तत्वप्रचारकार्य च । चतुर्थे तत्वप्रचारार्थ दिग्विजयार्थ च सचार । पचमे दिग्विजयवर्णन पष्ठे च समुद्रतीरे उडुपिश्रीकृष्णवलरामप्रतिमयो प्राप्ति स्थापनं च इति चरित्रविशेपा निरूपिता ।

प १०४ श्लोक १ श्री जाया यस्य स श्रीजानि । हरि वेदव्यासरूप परमात्मा तत्वविनिर्णयाय पराख्या विद्या परविद्या युक्तिपरिप्लुतै सूत्रै. श्रुतिप्रेरितै वेदार्थानुसारिभि पुराणाद्यैश्च तेने विस्तारयामास ।

श्लोक २ अहापयन् न त्याजयन् । हा धातो णिजते शत्रन्तप्रयोग । श्रुतिसम्मत सत्सिद्धान्त न त्यजन्नेव । तदनुसृत्यैव । व्यावर्णने प्रतिपादने पाराशरै. पराशरमुने पुत्रै वेदव्यासऋपिभिः । आदरार्थे वहुवचनम् । प्रेरितः योजितः । विधिवशैः । सत्सिद्धातः क्रमशः लुप्येदिति दैवसकल्प अनुसरद्भिः भ्रातैः सशयाज्ञानविपरीतज्ञानमोहितचित्तै । वितथीकृत मिथ्या इति प्रतिपादितम् । विज्ञाय तत्सर्व निराकृत्य सत्तत्वप्रचाराय प्रचोदित श्रीमध्वः । "अपिधाय सूत्रहृदय सता प्रिय प्रविधाय भाप्यमधुना निजेच्छया । अपरैः श्रुतिस्मृतिनिजार्थदूपकै सुतरा तिरोभवति सविदाहृता ॥ अपनेतुमेनमनय कृत खलै. प्रतिनेतुमात्मजनता शुभा गतिम् । कुरुसूत्रभाप्यमविलम्वित व्रजेः सुमतेन योजय कवे श्रुतिस्मृती " इति श्रीसुमध्वविजये श्रीवेदव्यासेन श्रीमध्वाय दत्तः आदेशः उपवर्णितः ।

श्लोक ५ ध्वस्त हरेः प्रतीपाना विरोधिना निकर समूह एन स । धर्माध्वरे धर्मयज्ञे योजित कृष्णेन नियोजित । वलहुतै वलमेव वलप्रयुक्तकार्याणि एव हुतानि । तै । कृष्ण सतर्प्य सप्रीत कृत्वा ।

हरे वीक्षणै कृपाकटाक्षै' पूता पाविता शक्तियुता। भक्ते शक्तिस्तु माहात्म्यज्ञानपूर्वत्व सुदृढत्व शाश्वतत्व स्नेहातिशयत्व इत्यादिसद्गुणै प्राप्यते। भक्ति अवितथ निश्चित फलति भगवत्प्रसादाख्य फल प्रापयति ।

मक्षु-झटिति । "स्त्राग्झटित्यञ्जसाह्नायद्राङ्मङ्क्षुसपदि द्रुते" इत्यमर ।

प १०५. समीरसिद्धातसागरस्य सवर्धनाय शीतगभस्ति चद्रमिव स्थित श्रीराघवेन्द्रगुरुश्रेष्ठ । निस्तुलप्रतिभा-असदृशप्रतिभा । निर्लिपाना देवाना कुले ललाम श्रेष्ठम् ।

प १०५ श्लोक ६ निर्गता गणा समूहा यथास्यात्तथा । निर्गणम् । उद्ग्रास्यन् विनाशयन्नित्यर्थ. । आतरे स्वहृदये बभार दृढ दधार । श्रीहनूमते सर्वदा स्वसान्निध्यप्रद सहभोगाख्यफल प्रददौ इति भाव ।

त्रस्तश्चासौ अखिलगोगणश्च । तं । श्रीकृष्ण भीत सकलगोवृन्द गोकुल-वृन्दावनादिस्थलेषु स्थिता. गा गोवर्धनगिर्युद्धरणदिना ररक्ष । कृष्ण वेदव्यास इति पक्षे । त्रस्त विपरीतार्थकल्पनादिहिंसाकृत्यै. पीडित विनश्यमान अखिल-गवा सकलवेदवाङ्याना गण विपुलधी अपारबुद्धिमान् वेदव्यास वेदाना चतुर्विभागकरणेन ब्रह्मसूत्रादिग्रन्थान् निर्माय च ररक्ष । विलोपनात् इति भाव । "गौ स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयी दृग्बाणदिग्वाग्भूप्वप्सु भूम्नि च" इति मेदिनी । "कृष्ण सत्यवतीपुत्रे वायसे केशवेऽर्जुने" इति मेदिनी । सत्यवतीपुत्र वेदव्यास । कृष्ण द्वापरयुगस्थोत्सवे अवतारोत्सवे भीमेन जरासधादिकान् राक्षसान् पातयित्वा भीम अराजयत् कीर्तिसपदा शोभमानमकरोत् ।

श्लोक ७ कलौ मध्वरूपेणावतीर्ण इति वायो हनुमद्भीममध्वरूपाव-तारत्रयवर्णन कृतम् ।

प १०५ स्तनयित्नु मेघ । "अभ्र मेघो वारिवाह स्तनयित्नुर्बलाहक." इत्यमर । स्तनयति । स्तनगदी देव शब्दे । "स्तनिहृषि······" इतीत्नुच् । "अयामन्ता······" इति णेरय् । निर्घोष कुर्वत मेघस्य सपत्न स्पर्धाकारी इव गभीर । तीक्ष्णनिर्घोष. । "स्वाननिर्घोषनिर्ह्रादिनादनिस्वाननिस्वना " इत्यमर ।

वासुदेवनामशिशुरूपेण श्रीमध्यगेहभट्टस्य गृहे वाय। अवतरति सति "सतुप्यता······" इत्यादि अमरवाणीघोष· आकाशान्निसृत इति श्रीसुम-ध्वविजये वर्णित वर्तते ।

अतिलापात-निबिडम् ।

दैत्यकुले अर्यमा सूर्य इव प्रकाशमान प्रह्लाद. । तस्य अरि हिरण्यकशिपु: तस्य शिरश्छेत्ता निहन्ता श्रीनृसिंह । विबुधजना. देवा. तेषा मनासि एव

चकोरपक्षिण । तेषा चद्रमा इव स्थितस्य प्रह्लादस्य। चकोर चन्द्रकिरणान् उपजीवतीति ख्याति । प्रह्लाद विबुधजनाना जीवातुभूत इति भाव ।

त्रिपादै मेय मातु परिमाण कर्तु योग्यम् ।

प १०६. "वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि" इत्यमर । वावदूकाना असबद्ध अतिप्रलपता वादिना ।

भूलेखा भूसुरा ब्राह्मणा ।

द्वात्रिंशल्लक्षणभासुर—श्रीमद्वाल्मीकिरामायणे सुन्दरकाण्डे सीतया पृष्ट हनुमान् श्रीरामचन्द्रस्य गुणगणान् शरीरलक्षणानि च उपवर्णयति येन सीतादेवी हनुमति विश्वसेत् । द्वात्रिंशल्लक्षणानि यथा—(१) विपुलास. । (२) महाभाहु । (३) कबुग्रीव । (४) गूढजत्र —अस्पष्टभुजसन्ध्यस्थि । (५) सुताम्राक्ष । (६) सम —अन्युनातिरिक्तदेहप्रमाण । (७) त्रिस्थिर —उरसि मणिबन्धे मुष्टौ च स्थिर । (८) त्रिप्रलब —त्रिपु भ्रूबाहुमुष्केपु प्रलब । (९) त्रिसम —त्रिपु केशाग्रे वृषणे जानुनि च सम । (१०) त्रिपुउन्नत —उन्नतकुक्षि. परिमण्डलोन्नतनाभि उन्नतहृदयम् । (११) त्रिपु ताम्र —श्लिष्टागुली रुचिरताम्रनखौ सुपार्ष्णी पादौ करावपि सुरक्तनखात्मरेखौ । "नेत्रातनखपाण्यघ्रितलै ताम्रैस्त्रिभि सुखी ।" (१२) त्रिपु स्निग्ध.—पादरेखा शिरोरुहा लिङ्गमणि एतेपु स्निग्धता । (१३) त्रिपु गम्भीर —स्वर सत्त्व नाभि एतेपु गम्भीर । अथवा स्वरे गतौ नाभौ च गम्भीर । (४) त्रिवलीवान्—उदरे वलित्रयवान् कण्ठे च वलित्रयवान् (१५) त्र्यवनत —त्रीणि अवनतानि निम्नानि यस्य स । स्तनचूचुकपदरेखा । (१६) चतुर्व्यङ्ग —चत्वारि व्यङ्गानि ह्रस्वानि यस्यस । ग्रीवा प्रजनन पृष्ठ जङ्घा ह्रस्वा भवेयु । यद्वा चत्वारो व्यङ्गा विकला यस्य स । शिराविकल पाद, रोमान्तरविकल रोमकूप, दैर्घ्यविकलो मेढ्र । मासविकलो वस्ति । (१७) त्रिशीर्षवान्—त्रिभि लक्षणैर्युक्त शीर्ष । आवर्तत्रयरुचिर। समवृत्त छत्राकार विशाल इति त्रिभिर्लक्षणैर्युक्त शिर । (१८) चतुष्कल । चतस्र कला रेखा यस्य स । ललाटे पादयो पाण्यो चतस्र रेखा यस्य स. चतुर्लेख । (१९) चतुष्किष्कु.—चतुर्विंशत्यङ्गुलात्मक हस्त किष्कु षण्णवत्यङ्गुलोत्सेध । (२०) चतु सम —चत्वार बाहुजानूरुगण्डा समा यस्य स । (२१) चतुर्दशसमद्वन्द्व —चतुर्दशसख्यानि समानि द्वन्द्वानि यस्य स । सामुद्रिके "भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुकौ । कूर्परौ मणिबधौ च जानुनी वृषणौ कटी करौ पादौ स्फिजौ यस्य समौ ज्ञेय स भूपति । (२२)

चतुर्दंष्ट्र । चत्वारो दंष्ट्राकारा दन्ता यस्य स । चतुर्णां सिंहशार्दूलगजवृषभाणां गतिरिव गति यस्य स । (२४) महोष्ठहनुनासश्च । ओष्ठस्य महत्व अरुणमांसलत्वम् । हनो महत्व परिपूर्णमामलत्वम् । नासिकाया दीर्घतुङ्गत्वम् । (२५) पञ्चस्निग्ध । पञ्च वाक्यवक्त्रनखलोमत्वच केशनेत्रदन्तत्वकपादतलानि स्निग्धा अवयवा यस्य स । पूर्व त्रिपु स्निग्ध इत्युक्ते अत्र पञ्चस्निग्धं इत्युक्ति मतभेदमाश्रित्योक्तम् (२६) अष्टवशवान् अष्टौ वशा आयता आयतावयवा पृष्ठवश शरीर हस्तपादागुली कर्ण नासिका चक्षुषी कर्णौ प्रजन यस्य चायत । (२७) दशपद्म दश पद्माकारावयवा । मुखनेत्रास्यजिह्वोष्ठतालुस्तननखा करौ पादौ च इति दश । (२८) दशबृहत्—दश अवयवा उर शिर ललाट ग्रीवा बाहू सनाभय । पार्श्वपृष्ठस्वरा बृहत अवयवा । (२९) त्रिभि व्याप्त तेजसा यशसा श्रिया च व्याप्त । (३०) द्विशुक्लवान्—द्वे दन्तनेत्रे शुक्ले यस्य स । (३१) षडुन्नत—कक्षः कुक्षि वक्ष घ्राण स्कन्ध ललाटिका उन्नता । (३२) नवतनु—नव अवयवाः तनव सूक्ष्मा यस्य स ।

प्रथमप्रवेशे वासुदेवस्य बाललीलाविनोदसगति वर्ण्यते ।

"नेदिष्ठमतिकतमम्" इत्यमर । अतिशयेनान्तिक नेदिस्ठम् । "अन्तिकबाढयोर्नेदसाधौ ।"

कुलित्थ इति प्राकृतभाषाया हुरुळी इति कथ्यते । मार्दघटात् मृन्निर्मितघटात् । मृद्घटे पानीय अतिशीतलीकर्तु स्थाप्यते किल ।

निदाघकाले यथा निर्झर अम्बुस्रोत स्यात क्षीण वर्तते तथा ।

प १०८ श्लोक ९ हालाहलात् विषात् । तीक्ष्णज्वलनाच्च । लाक्षागेहदहनात् हालाहलभक्षणाच्च कृष्ण एव स्वमायया भीम पाण्डवाश्च ररक्ष । इति भाव ।

श्लोक १० वरादेव भूदेव ब्राह्मण तस्मिन् या गुरुप्रसत्ति श्रेष्ठप्रसाद तया । गोब्राह्मणरक्षकः इति ख्यात विष्णु ब्राह्मणे प्रसाद कुर्वाण ररक्ष इति अन्वय । दिष्ट्या सुदैव किल ।

श्लोक ११ मुक्ता मोचनं प्रापिता समस्तसगा विषयवासनादिसगा येभ्य ते । यस्य पादकमलान्नि मृतै अरुणवर्णधूलिभि धूता पवित्रीकृता । यस्य पादसेवया पवित्रितमानसा इत्यर्थ । सिद्धि मोक्षाख्यफल ययु प्रापु ।

प. १० द्वितीयप्रवेशे वासुदेवस्य अध्ययनचरित्र वर्ण्यते । सर्वमधीत

इत्यनेन सकलवेदार्थसार इत पूर्वमेव विदित इत्यर्थो ध्वन्यते। सर्वमधीत अद्य यावदधीतमिति आपातत अर्थ ।

हरिरक्षाया अक्षयपात्र सर्वदा श्रीहरिणा रक्षित इत्यर्थ । मध्यगेहभट्टमुखेन चरित्रविशेषाणा कथनेन वाच्यनाटकर्शक्ति अत्रानुगम्यते। "लकुचो लिकुचो डहु" इत्यमर । लिकुचमिति कश्चित् वृक्षविशेष. तस्य खादनीयफल च ।

अत्र निर्दिष्टान् चरित्रविशेषान् विस्तारतया श्रीसुमध्वविजये द्वितीयतृतीयसर्गयो ज्ञातु शक्यते ।

प १०९ कुशलीकृत उपनयनोत्सवागतया मुण्डनेन भद्रीकृत शीर्षक शिर यस्य स ।

उपनयनानन्तर वेदविद्या ब्रह्मचारिणा उपास्या । लोकविडम्बनार्थ वासुदेवेन विद्योपासन कृतम्। पर सकलविद्याधिदेवताभ्योऽपि वायो प्रकृष्टत्वात् ता देवता एव वायु उपासन्ते। अत वाय्ववतारेण वासुदेवेन स्वोपास्त्यत्व अपराध इति मन्यमाना विद्याधिदेवता. एतदपराधनिवारणोपाय प्रार्थयामासु इति उत्प्रेक्षालकार ।

प ११० निर्वाणकारण मुक्तिकारणम् ।

तृतीयप्रवेशे सन्यासस्वीकारसनिवेशचित्रणम् । गोदोहनमात्रस्थितिगति । "नून भगवतो ब्रह्मन्गृहेषु गृहमेधिना। न लक्ष्यते ह्यवस्थानमपि गोदोहन क्वचित्" इति भागवते। श्रीजानकीविषये पैशुन्य तात्सार. निंदनप्रवृत्ति । तेन शून्य विनष्ट सत्व सत्वगुण एषा ते। सीतारामचन्द्रादीना निन्दनेन सत्वगुणरहितान् । रजस्तमोगुणप्रगल्भान् इति भाव ।

विप्रुदित विनष्ट तत उर्वरित अवशिष्ट । भीमेन सकलरक्षोगणसहार कृत इति प्रख्यातम्। परन्तु मणिमदादय दु शास्त्रप्रवर्तका असुरा. अवशिष्टा । तान्निहतुमिति भाव ।

प १११ तुरीयाश्रम सन्यासाश्रम । स्फीताकूत—बह्वर्थगर्भितम् । विसृमर प्रसरत् नायनतेज नयनाग्नि सृतकाति । तस्य शलाका रोचि । अगसात्कर्तु समर्पयितुम्। पचमहायज्ञै —अध्यापन ब्रह्मयज्ञ पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ब्रह्मयज्ञपितृयज्ञ देवयज्ञभूतयज्ञनृयज्ञाख्यपचयज्ञा नित्य ब्राह्मणै आचरितव्या. ।

प० ११२. नृशससकल्प. क्रूरनिर्धारः। निर्दयमन प्रवृत्ति । पितृप्रणय — मातापित्रोरनुमति तस्य बलेनाधिरुढ पोपितम्। पित्रनुमर्ति प्राप्य पुनरागतमिति भाव । माता च पिता च पितरौ ।

अनिर्दशस्य—न निर्गतं दशवर्पदेशीयस्त्वं यस्मात् स । दशवर्पेभ्योऽपि अल्पवयस्क इत्यर्थः ।

निस्तुल असदृश स्तवनिधान स्तोत्रविषयम्। अच्युतप्रेक्षाचार्या अपि लोकगुरोः श्रीमध्वाचार्यस्य गुरुत्व प्राप्नुवत. नून धन्या. अपरोक्षज्ञानिन एव। एते जानंत्येव यदय वायोरवतार भाविचतुर्मुखपदभाग् इति। मुकृते पुण्यसपादने सच्छास्त्रज्ञानार्जने मतयः एपा ते। कृतकशिष्य लोकविडम्बनाय शिष्य । परं मम गुरुरेव इति अच्यतप्रेक्षाचार्या मन्यन्ते।

प ११३ तत्ववादारयसूर्यम्। अज्ञानाधकारारया जवनिका अन्त पट । तस्य अपसरणेन निवारणेन ।

असाधुनिर्वध असमीचीनविचारसरणि । एतदान्यतमसा अवगुटितं आच्छादितं विलीन नयनपठलस्य पाटव एपा ते ।

अच्युतप्रेक्षाचार्या पूर्वस्मिन् जन्मनि पाण्डवाना आलये हस्तिनापुर्या मधुकरीवृत्ति कुर्वाणा द्रौपदीहस्तदत्तं शुद्ध अन्न भुञ्जाना नून पावितात्मानः ते कथाऽत्र स्मर्तव्या ।

"पुरैप कृष्णाकरसिद्धशुद्धिमद्वरान्नभुक्त्या किल पाण्डवालये।
विशोधितात्मा मधुकृत्प्रवृत्तिमांश्चचार काश्चित् परिवत्सरान् मुदा ॥"

इति श्रीसुमध्वविजये चतुर्थसर्गे उपश्लोकितम्। नून अच्युतप्रेक्षाचार्याः अपरोक्षज्ञानिन स्वपूर्वजन्मवृत्त समग्रतया जानन्ति। निरौपधा—निर्वचना। शुद्धमनसा कृता सेवा इत्यर्थ । कलिप्रभावेण विपरीता सत्यपथाद्विरुद्धा मतिः ज्ञानं । तस्या प्रचयाय प्रचाराय ।

प. ११३ श्लोक १२. इक्ष्वाकुवंशस्य द्युमणिरिव सूर्य इव स्थितः श्रीरामचन्द्र । तस्य प्रकाशात् प्रकाशरूपात् कपिवर्यत कपिश्रेष्ठात् हनुमत द्राक् शीघ्र विश्वं जगत् विभात प्रकाशितम्। चतुराननाश भाविब्रह्मत्वात् ब्रह्माशसमाविष्ट वायु । वेदव्यासानुग्रहेण विज्ञानप्रचारक भविता। भविष्यति। पूर्व श्रीरामचन्द्रानुग्रहेण हनुमान् सर्वान् रक्षोगणान् निहत्य विश्वं शातिसमृद्धिमतमकरोत्। एवमेव अधुना श्रीमध्वावतारे वेदव्यासानुग्रहेण सज्ज्ञान-

प्रसारकर्ता भूत्वा जगदुद्धार करिष्यसीति अच्युतप्रेक्षाचार्या. श्रीमन्त्वं आशीर्भि रनुगृह्णन्ति ।

श्लोक १३ त्व विज्ञानवार्धि विश्ववेत्ता सकलज्ञानी च असि । नुजन अज्ञानगर्तात् अज्ञानरूपकदरात् । मोचयितु न कोऽपि समर्थ । "अवट. कूपविलयोर्गर्ते कुहकजीविनि" इति हैम । "गर्तोऽवटे कुकुन्दरे त्रिगर्तांशे" इति च हैमः । गिरति गृ निगरणे ।" हसिमृग"'इति तन् । स्त्रिया टाप् । मचारे त्वदृते त्वत्त ऋते । त्वा विना इत्यर्थ । द इति शिथिल द्वित्व कार्य श्लोकवृत्तानुकूल्यार्थम् । यात्राया धृत स्वीकृत जैत्रकर्म वादिदिग्विजयार्थ वादचर्चाकर्म येन स । युष्यस्व यात्राया अस्मदनुग्रहेण नि शक सन्नद्धो भव इत्यर्थ ।

प ११३ अतिमपदितद्वय गद्य रूपेण पठितव्यम् । पट्शास्त्रपाठे-वेदातन्यायतर्कालकारज्योतिर्व्याकरणाख्य पण्णा प्रमुखशास्त्राणा अध्ययने । श्रीमध्वाचार्या सकलशास्त्रपारीणा आसन्निति किमु वक्तव्यम् ?

उप समीपे सपन्न। प्राप्ता । तदाज्ञया यात्राया सिद्धता अकुर्वन्नित्यर्थ ।

प. ११४. चतुर्थ प्रवेशे सचारक्रमवर्णनम् निरूप्यते । सचारकाले कस्मिश्चिद्देशे अध्यापनसमयस्य सनिवेश । वेदातादिशास्त्रे जिज्ञासव अनेके शिष्या आसन् । ते च गुरौ श्रीमध्वाचार्ये अत्यादरवत तदेकशरणा आसन् । तथा च एते हास्यपरिप्लुताभाषणादिभि प्रपुल्लमनसा स्वसहपाठिभि् साक सुख वर्तते स्म । इत्यादय विषया अस्मिन् प्रवेशे सक्षिप्तसनिवेश चित्रीक्रियते श्रोतृप्रेक्षकाणा मनसि ।

कश्चित् शिष्यः स्वसहपाठिन एव अध्ययनग्रथजात गृहीत्वा झटिति पाठस्थान धावन् प्रस्थित । अनेन शिष्याणा पाटसमयकुतूहलातिरेक तथा परस्परहास्यप्रवृत्तिश्च सूच्येते ।

आचार्या श्रीमध्वाचार्या शास्त्रपाठप्रवचनार्थ अध्ययनकक्ष प्रति प्रस्थिता । सामान्यार्थ हास्यरसप्रपूर्ण । अध्ययन विना भोजन न कर्तु शक्यते इति सामान्यत व्यग्यरस । अथवा भोजनमेव मम प्रयोजनम् । यदि अध्ययनार्थ गुरुसन्निधौ न गच्छामि तर्हि गुरव दण्डनरूपेण मम भोजनावकाशमेव विलोपयतीति हास्यम् । यथा अधुना मठेषु भोजनैकप्रयोजना तदुद्दिश्यैव सेवापाठादिपु वहिरगतया मन' कुर्वाणा शिष्या दृश्यते तथैव श्रीमध्वाचार्याणा कालेऽपि तादृङमात्रयोग्यतावत शिष्या आसन्निति आपातत अर्थ कर्तु शक्यते । पर अत्र निगूढार्थं शास्त्रसारपरिप्लुत एव विद्यते।

पुस्तकमात्रापहरणेन तन्निष्ठज्ञानमप्यपहर्तु न शक्यते । केवलप्रमाणत्वेन ज्ञान साक्षिगोचर सर्वदा यथार्थीभूत नैवापहर्तु शक्यते। तथा च पुस्तकमात्रस्थिता न सम्यगधीता विद्या न प्रयोजनकारिणीति भाव । पुस्तकस्थविद्यापेक्षया गुरुसन्निधि श्रेयान् । अस्माक भक्तिज्ञानपरमात्मप्रसादद्वारा मोक्षसुखपरीप्सूना अस्माक अस्मत्सदृशाना सर्वेपामपि । अस्मद् इत्यस्य सामान्यत जीव चेतन इत्यपि अर्थ भवति। अस्माक नाम सकलचेतनाना इत्यर्थ. । भोजनादिक स्वरूपानन्दाविर्भावतदनुभवरूप भोजन। आदिपदेन ससारचक्रान्मोचन परमात्मैकनिष्ठा इत्यादिफलानि सूच्यते। समुदायार्थे एकवचन। एतादृगभोजनादिफल विलुप्येत नैव प्राप्त भवेत् यदि वय जिज्ञासव भूत्वा गुरुसन्निधि प्राप्य तदुपदेशद्वारा परमात्मनि भक्ति परमात्मज्ञान तत्प्रसाद इ[illegible] साधनकलापेपु नैव सन्नद्धा योजितमतय भवाम। "मुकुन्दभक्त्यै गुरुभक्तिजायै" इति श्रीसुमध्वविजयोक्तरीत्या गुरुभक्ति मुकुन्दे भक्ति प्राप्तु आवश्यकीति सूच्यते ।

तत्रैव तिष्ठन्तु तानि (पुस्तकानि) इत्यनेन पुस्तकादिजडजात तदुपलक्षणया लौकिकविपयजात भौतिकसुखवस्तूनि च गुरुप्रसादपरमात्मज्ञानार्जनसदर्भे अवश्य हेयत्वेन त्याज्यानीति भाव ध्वन्यते । अत्र भक्तिज्ञानयो प्राधान्यं कथ्यते। "माहात्म्यज्ञानपूर्वस्तु सुदृढ सर्वतोऽधिक स्नेहो भक्तिरिति प्रोक्त तया मुक्तिर्नचान्यथा।" इति श्रीमदाचार्यै भक्तिस्वरूपस्य निरूपितत्वात् परमात्मन माहात्म्यं तु तस्य सकलशब्दप्रतिपाद्यत्व सकलगुणपरिपूर्णत्व सर्वदोपविदूरत्व निशक परस्परविरोधाभास विहाय शास्त्रैकवेद्यत्व च विना न सगम्यते। अत अत्र परमात्मन स्वरूपकथनमपि ध्वन्याऽवगम्यते। एव परमात्मन सर्वगुणपूर्णत्व दोपविदूरत्व इति ब्रह्मसूत्राणा प्रथमद्वितीयाध्याययो. सार भक्तिज्ञानैकगम्यत्व स्वरूपानन्दाविर्भावरूपभोजन इति कथनेन साधनफलाख्ययो तृतीयचतुर्थाध्याययो उपदेशश्च इति सकलब्रह्मसूत्रार्थसग्रह चमत्कृतिविशेपेण सपादित । श्रीमध्वाचार्या ब्रह्मसूत्राणि पाठयतीति पुरतः निर्दिश्यमान अत्रैव शिष्याणा सभापणमुखेन सूच्यते । श्रीमध्वशिष्या श्रीमध्वाचार्याणा सान्निध्यानुग्रहबलेन स्ववाक्यै सभापणालापैश्च लौकिकार्थान् विहाय सिद्धान्तविचारानेव निवेदयन्ति स्मेत्यपि विशेप: अत्र सूचित । पुरा पुस्तकानपेक्षया एव अध्ययनाध्यापनादिक प्रचलति स्म। पुस्तकापेक्षा न्यूनयोग्यतावता लक्षणमासीत्। श्रुतयस्तु श्रवणमात्रनिष्ठा किल । एव श्रीमध्वाचार्याणा शिष्यगणमध्ये केचन पुस्तकानपेक्षया एव अध्ययनसामर्थ्य-

वत । अन्ये केचन पुस्तकापेक्षयैव अध्ययने समर्था । इति जीवाना भिन्न-भिन्नयोग्यतावत्व अत जीवभेद अवश्यमभ्युपगन्तय इति श्रीमध्वसिद्धान्तोऽपि ध्वन्यते। अहो चम्पूकर्तृणा काव्यग्रथनकौशलम् !

श्लोक १४ गगाप्रवाहस्य वर्णन । मगलकरा भगा उर्मय । "भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये । कौटिल्ये भयविच्छित्त्यो" इति हैम । भज्यते भञ्ज आमर्दने । कर्मणि घञ् । तेषा सगेन सुभगा शोभना । तानालिङ्गन्तश्च समीपत मृदु सपर्क कुर्वत मरुत वाता तै कम्पिता चालिता । "मरुत स्पर्शन प्राण समीरो मारुतो मरुत्" इति विक्रमादित्य-कोश । म्रियन्तेऽनेन वृद्धेन विना वा । "मृग्रोरुति" वात । गगानद्या वीचीतरगस्पर्शेन सुशोभन भूत्वा गगाया पुन स्वस्पर्शेन वीची उत्पादयतीति अन्योन्यालकार. । रूप-धर्मयो परस्परनिबन्धनत्वमन्योन्यम् । "धनेन जायते प्रज्ञा प्रज्ञया जायते धनम्" इतिवत् । पर्वतपते हिमालयात् । मूर्ध्नी शिरसा पातरयेण पतनात् य वेग । तेन । पातरभसात् । 'रहस्तरसी तु रय. स्यद' इत्यमर । अथवा पर्वतपते इति षष्ठी । हिमालयस्य मूर्ध्नि शिखरे उत्तुगप्रदेशेषु य पात तस्मात् उद्भूत य वेग तेन । री गतिरेषणयो । "शतकोटि स्वरु शम्बो दम्भोलिरशनिर्द्वयो" इत्यमर । स्वरति इति । स्वृ शब्दोपतापयो । "शृस्वृस्निहि" इति उ । रभसा पतनात् शीघ्रगति भवति महान रव अपि उद्भूत । अनेन इद्रवज्रमपि वेगरवयो अधरीकरोतीति भाव । उद्धतवेगेन शिखरिषु पर्वत-प्रदेशेषु प्राप्ता तटीगह्वरे याती धीरगभीरसिहाना निर्घोषैरिव निनादै साकं पुर प्रवहती वा उत्कटा स्वनाथ समुद्र प्राप्तु अत्यत कुतूहलिता इव नितरा शोभते इति भाव । हिमालयप्रदेशे प्रवहती गगानदी साक्षात्कृतवता अय श्लोक स्वदृष्ट रमणीय दृश्य सुभग स्मारयति । "तत्रभगवत साक्षाद्यज्ञलिङ्गस्य विष्णोर्विक्रमत वामपादाङ्गुष्ठनखनिर्भिन्ना उर्ध्वाण्डकटाहविवरेण अत - प्रविष्टा या बाह्यजलधारा तच्चरणपकजावनेजनारुणकिञ्जल्कोपरञ्जिताखिलजगदधमलापहोपस्पर्शनामला········इत्यादिक श्रीमद्भागवतोक्त गगाप्रवाहवर्णनमत्र स्मार्यते।

प ११५. श्लोक १५ सुरा देवा गुरुवरा वेदव्यासादय तेषा गीतै भक्तिपरिप्लुतस्तोत्रपदै मुनीद्रै. वीरव्रतादियोगिभिश्च । शश्वत् नित्य पुन पुन इति वा। "मुहु पुन पुन शश्वदभीक्ष्णमसकृ.मता" इत्यमर । उद्रिक्तभक्त्या उद्यता नि सृतेन सरसेन विनयानुकम्पाभयभक्त्यादिरसविशिष्टेन अत एव मृदुना रवेण श्लाघिता स्तुता । नरहरे पुरुषोत्तमस्य नरसिहरूपेण अवतीर्णस्य

इति वा। श्रीविष्णो पदघातात् पादस्पर्शात् भिन्नगात्रा उद्भूतगात्रा। श्रीविष्णो वामपादाङ्गुष्ठनखनिर्भिन्ना इति खलु श्रूयते। मुनिजनानां वृजिनस्य पापस्य विहन्त्री नाशकर्त्री। "कलुष वृजिनैनोघमंहो दुरितदुष्कृतम्" इत्यमरः। प्रारब्धकर्मपापस्य उपभोगेनैव क्षय। प्रायश्चित्तेन परिहार्याणा पापाना क्षयः गङ्गास्नानेन भवतीति श्रुतिपुराणेषु गीतम्।

श्लोक १६ आरात् दूरत स्थिता विशालां बदरीविशालाख्यक्षेत्रं गतु। रवि. अस्तं यान् गच्छन् आस्ते इति भाव। अत तूर्ण याम गच्छाम। श्रुतीनां वेदाना पतिं मुनिप्रवेक मुनिश्रेष्ठ। "क्लीबे प्रधान प्रमुख प्रवेकानुत्तमोत्तमा." इत्यमरः। प्रविच्यते। विचिर् पृथग्भावे। घञ्। निर्मुक्त तामसमलीमस पापांधकार एषा ते।

श्लोक १७. यो जानकी इत्यादिभि श्लोकै. शिष्या वायोः हनुमद्भीममध्वरूपावतारत्रयस्य स्तुतिं कुर्वंति। भूरिमहसा महता उत्सवेन। ससभ्रम इति यावत्।

श्लोक १८. सीतां अवाप्य बन्धनान्मुक्ता प्राप्य। सीतापतिं राम यः जगौ। यश्च निस्तरिः निर्गता तरि तरणि. यस्यः स.। तरणि नावं विनैव पदतरिः पदा एव तरि यस्य स.। पादचारी एव भूत्वा समुद्रं न्यतारीत्। स कपिवर्य भवान् एव इति श्रीमध्वाचार्यं स्तुवति शिष्याः। सभृत संपादितः भूरिभाग प्रभूतपुण्य. येन स मानवः यथा सुलभ संसारसागरं ततुं प्रभवति तथैवेत्यर्थ.। "भागो रूपार्धके भाग्यैकदेशयो" इति हैमः।

श्लोक १९ यदुपतेः श्रीकृष्णस्य कृपया अनुग्रहेण। समंतात् साम्राज्य। समग्रं व्याप्त साम्राज्य। वरमध्यमपाण्डुपुत्र। वर श्रेष्ठ धर्मार्जुनयोः मध्ये जातः पाण्डुराजस्य पुत्र. मन्त्रशक्त्या वायुस्पर्शप्रभावेण कुन्त्यामुत्पन्न. भीमसेनः। तद्वत् भवान् श्रीमध्वाचार्य मोक्षराज्ये जितरिपुत्वात् निरातकं भक्तान् मोक्ष प्रापयतीति भाव.। मोक्षसाधने रिपव. विषयासक्ति इन्द्रियनिग्रहाभावः कामाद्यरिषड्वर्गवश्यता भक्तिज्ञानाभाव. इत्यादिक। विरक्ताग्रेसरस्य पूर्णप्रज्ञस्य श्रीमध्वस्य समीपे नैकोऽपि मोक्षरिपु उपसर्पितुं प्रभवति। मुख्यप्रतिपाद्यत्वेन नाथ श्रीनारायणं सुवाक्यै. स्तोत्रपदैः संस्तुवंत करिणे गजेन्द्राय वरदं अभयवरद गजेन्द्रमोचक। मगलानामपि मगल मगलकरम्।

प, ११५. विस्फूर्जता स्फुरता इति विशेषणद्वय स्फुरणातिशयस्य सूचकम्। उदग्रेण घोरेण अदभ्रेण अनल्पेन रभसा रेगेन। "स्तोकाल्पक्षुल्लका. श्लक्ष्ण

सूक्ष्म दभ्रं कृश तनु" इत्यमर.। "प्रपातमतटो भृगु." इत्यमर'। प्रपातं तटरहित उन्नतस्थानं उपसर्पती प्रवहती पाथस्तटी जलप्रवाह'। "कबंधमुदकं पाथः पुष्करं सर्वतोमुखम्" इत्यमर । तस्या. पुटे गाढातराले पदा पादेन प्रचलितु ततु मिति यावत्। नक्रक्रकचादिजलचरैः अंकिते युक्ते विशरणाना शरणविहीनाना न भवत एव शरण आश्रया । अस्माक अंगुली एव तरी तारकनौः तस्याः धुरि अग्रभागे। "स्त्रिया नौस्तरणिस्तरि" इत्यमर । तरि. एव तरी। तरति अनया। तृ प्लवनतारणयो । "कृदिकरात्" इति ङीप् वा। तरी इति पदम्। अस्माक हस्तपादयो अङ्गुलीः आश्रित्य अस्माभि. साक नदीपार गन्तु प्रभवथ। नून वाय्ववताराणा श्रीमध्वाचार्याणा एवं नदीतरणं तारणं सुलभसाध्यमेव।

गाढगभीरा. स्थूला कल्लोला तरगा । "महत्सूल्लोल कल्लोलौ" इत्यमर'। क जल तस्य लोल उन्माद । कल्लतेऽनेन नद्य.। कल्ल अव्यक्ते शब्दे। तै कवलित प्रक्षुब्ध कलेवर स्वरूप यस्य स'। तस्मिन्। जह्नुतनयाया. गगाया. जवेन उद्धे घोरे प्रवाहे। अपारस्य अकूपार इव समुद्र इव स्थितस्यं प्रवाहस्य पारं अन्यतीर।

प ११६. वारिवाहाना मेघाना सपर्कात् हिमा शीता. शीकरा' अंबुकणाः तैः परीत व्याप्त। मरुत्पुत्र मरुतः वायुदेवस्य पुत्र मंदवात। आत्मनि-वाय्ववतारभूते स्वस्मिन् आत्मान स्वमेव इव । हरितशाद्वलै वृक्षसस्यै प्रसृते परिसरे नदीपर्वतनिकटप्रदेशे। "पर्यन्तभू परिसर" इत्यमर । परित सरत्यत्र। आप्यायमानावलोकनै. सतोपकारकदृष्टिभिः।

मृगयाविहारपटवश्च निस्त्रिंशाश्च क्रूराश्च कटुतीक्ष्णशक्तितोमरकरदीकृत-वन्यमृगविहङ्गमाश्च इति द्वद्वसमास'। शक्तितोमरादय. किरातानामायुधा । एतै वशीकृता वन्यपशुपक्षिण यैं ते। लुब्धकवरान् व्याधश्रेष्ठान्। "व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि स" इत्यमर ।

गृहीत वेदातसिद्धान्त यैः ते। "कृतान्तो यमसिद्धान्त दैवाकुशलकर्मसु" इत्यमर । कृत अन्त. येन यस्य वा । वेदैर्निर्णीतं परमात्मविषयकतत्त्वं उपदिशन् श्रीमध्व । हिमसहत्या परिवृत शुभ्रशिखरवन्तं। नीलमेघश्याम अत एव अतिमनोहररूपम्। तरक्षुः व्याघ्रसदृशहिंस्रपशु.।

नानावृक्षाणां पक्षीणा काया तेषा निकाय समूह । तस्मिन् आत्त स्वीकृत. विग्रह स्वस्वरूप येषा ते। सुरवरा. वृक्षपक्षिविशेषरूपैः तत्र सन्निहिता

आसन्निव इति भाव.।
द्वात्रिंशल्लक्षणलक्षित-शरीरलक्षणानि पूर्वमेव चर्चितानि।
श्रीसुमध्वविजये वर्णितमत्र ध्येयम्।
"सनिरीक्ष्य पराशरात्मज प्रणय प्रेष्ठमशेषसद्गुणैः।
करयोर्युगलेन वल्गुना तमुदस्थापयदाशुपातिना ॥
तदानुरूपं ददुरासनं ते चतुर्मुखायेव मुकुन्ददासा ॥" इति।

अरविदूर दोषविदूर।

प. ११७. श्लोक २१. पाराशर वेदव्यास। अखिलगुरो। लक्ष्म्या निषेवितं इत्यनेन वेदव्यासरूपस्य विष्णोरवतारत्व सूच्यते।

श्लोक २४ सता अक्षीणा अनल्पा अमोघा रक्षा अकरोत्।

श्लोक २५ आव—ररक्ष। अव् रक्षणे लिट्। करजा नखा. ते एव हेतय आयुधानि। "हेति स्यादायुधज्वालासूर्यतेज स योषिति" इति मेदिनी। हरौ प्रवणत्वं नम्रत्व भक्तिपूर्णत्व कार्यम्। "प्रवण क्रमनिम्नोर्व्यां प्रह्वे ना चतुष्पथे" इत्यमर। न अस्मभ्य वरैः गुरुभि शिक्षितं भक्त्यैव हरिस्तुष्यति हरौ भक्ति अवश्यं कार्या इति शिक्षितम्।

श्लो० २८. वर्णाना योगै निजभावस्य यथार्थस्य सिद्ध्यर्थम्। श्रीसुमध्वविजये एवमुपनिबद्धम्—

"अपनेतुमेनमनय कृत खलैः प्रतिनेतुमात्मजनता शुभा गतिम्।
कुरुसूत्रभाष्यमविलम्बित व्रजेः सुमतेन योजय कवे श्रुतिस्मृतिः॥
... ... ...भुवि सन्ति सौम्य पुरुषा गुणोचिता।
विमलान्मणीनिव गुणोज्झितानिमान् दयया विशोधय विशुद्धगोगणैः॥
(अष्टम सर्ग)

प ११७. शिखरिशेखर पर्वतश्रेष्ठ' हिमालयः।

काश्यप्या. गगाया तलं स्वरूप भुवि दृष्ट प्रवाहरूपं। तस्य तटे तीरे। "तलं स्वरूपेऽनूर्ध्वेऽस्त्री क्लीवं ज्या घातवारणे" इति मेदिनी। "कूलं रोधश्च तीर च प्रतीर च तट त्रिपु" इत्यमर.।

प. ११८. पचमप्रवेशे मागधाना घोषणमुखेन श्रीमध्वाचार्याणां विजययात्राया. वर्णन क्रियते। अयं प्रवेश. नाट्यवाचकैः वाचितव्य.।

माध्वसिद्धन्तस्य आध्वनीना. मार्गस्थिता.। माध्वानुयायिन. इति सबोधनम्। माधवाध्वनीना. इति पाठे माधव. श्री विष्णुः तस्य मार्ग अनुसरंतः। हे

विष्णुभक्ता । शृणुध्वम् । "अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक" इत्यपि । कदध्वः कुत्सितः अध्वा-मार्गः । कुत्सितमार्गानुयायिनः इति बहुव्रीहिर्वा । "व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः" इत्यमरः । कुगति•••" इति समासः । "का. पथ्यक्षयोः इति" दुष्टमार्गस्य विध्वंसने निष्णातः नदीष्णः ।

श्रीमध्वाचार्या नारायणवेदव्यासाश्रमभूतोत्तरबदरिकाश्रमात् दक्षिणबदरिकाश्रमं प्राप्य तत्रैव ब्रह्मसूत्रभाष्यं अरचयन् ।

बादरायणस्य भणिते वचनस्य रीतिं ।

अन्वर्थनामा—आनन्दप्रद तीर्थं शास्त्रं यस्य सः । येन कृतस्य शास्त्रस्य अध्ययनेन स्वरूपानन्दाविर्भावरूपमोक्ष एव लभ्यते इति सार्थकमेव आनन्दतीर्थेतिनाम । श्रीमुमध्वविजये वर्णितम् ।

"आनन्दरूपस्य परस्य पात्रधीरानन्दमन्दायिसुशास्त्रकृत्त्व यत् ।
आनन्दतीर्थेति पद गुरूदितं बभूव तस्यात्यनुरूपरूपकम् ।" इति धिषणंमन्यान् पण्डितमन्यान् ।

लीलया अनायासेन व्यालोलयिता पातयता पराभूतान् कुर्वता इत्यर्थः । अनेन श्रीमध्वाचार्येण आत्मसात्कृता वशीकृता जिता । जयपत्रिकासु तार्किकादीनां पराभवः उद्घोषितः वर्तते इति भावः ।

वादाध्वर वादयज्ञ । अद्धा अञ्जसा । "तत्त्वेत्वद्धाञ्जसा द्वयम्" इत्यमरः । विधिदुर्विलासेन दुर्दैवपरिणामेन । न सधार्यः । अनेन सत्वेन साकं वाद एव न कार्यः । वादे कृते अस्माकं पराभवः ध्रुवः इति भयभीताः आसन् । इति भावः । कान्दिशीका—भयद्रुताः "कान्दिशीको भयद्रुतः" इत्यमरः । कां दिशं यामि इत्याह । "तदाहेति मा शब्दादिभ्यः" इति ठक् । पृषोदरादि । अथवा "कवि वैक्लव्ये" भावे घञन्तात् मत्वर्थइनि । शीकृ सेचने । भावे घञ् । वैक्लव्ययुक्तोऽश्रुपातः । तद्योगाज् ज्योत्स्नादण् । विगलिता अहममतागलग्राहाः अभिमानवधग्राहाः एषां ते ।

दूरीकृतः बुद्धिबलस्य अहं मम इति अहंकारस्य अवलेपः प्रभावः येभ्यः ते विनम्राः इत्यर्थः । जाम्बूनदवत् सुवर्णवत् कमनीये सुंदरे पदे यस्य स निटिलतटे फालकस्य तटे संघट्टिता सुरूपादपीठपट्टिका यैः ते । दण्डवत् प्रणिपातयतः इत्यर्थः ।

प्रावरणेन उत्तरीयवस्त्रेण निवद्धो कटिवध. यै ते। गुर्वाज्ञापरिपालने वद्धदीक्षा इति भाव ।

प्राप्ताभिपगभगा—प्राप्त अभिपगरूपभग. यै. ते।

पराभूता। इत्यर्थ "शापे त्वभिपङ्ग. पराभवे" इत्यमर। परीभाव तिरस्कार.। स एव शोचिष्केश अग्नि। आढौक :—अविचारयन्। ढौकृ-गतौ। निरपत्रपम्-निर्लज्जम्। जैह्य—कुटिलता।

प. ११९. आखणाश्मनि भद्रप्रस्तरे पातितः मृत्पिण्ड. यथा स्वयमेव चूर्णी भवति तद्वदेव एतेपा दशाभूदित्यर्थ:। तीक्ष्णकिरणै. विस्रसिता द्रवीकृत्य गलिता हिमानीसहति हिमसमूह इव। आसन्न. समीपमागतः जगदण्ड-भाण्डभंग ब्रह्माण्डस्य भग। वेतण्डताण्डव गजस्य रभसाटोपं इव। ब्रह्माण्ड-विनाशकाल उपासन्न. महाननर्थ: उदपादि इति भावनया महान्तं व्यर्थाटोप कृ वानिति भाव.।

श्लोक २९ स कुयोगी श्लोकै. स्वयूथ्यान् स्वानुयायिन. वदति।

श्लोक ३०. सचारस्य लुण्ठन पीडां।

श्लोक ३१ वलेन वलवता युक्तिरूपप्रवातेन।

श्लो ३२ पूर्वं अद्वैतत्वानुयायिन त्रिविक्रमाचार्या श्रीमध्वाचार्यै. सार्कं पञ्चदशदिनपर्यतं वाद कृत्वा तत्र पराभूता. सत श्रीमध्वशिष्या अभवन्निति कथाऽत्रानुसधया। श्रीमुमध्वविजये उक्तम्।

सप्ताष्टानि दिनान्येव वादं कृत्वा सहामुना।
निरुत्तर त निश्चोद्य चक्रे चक्रायुधप्रिय.॥
प्रणम्याचष्ट विप्रोऽसौ क्षम्यता नाथ चापलम्।
पदपद्मरजोदास्य ध्रुव मे दीयतामिति॥ (सर्ग १५)

त्रिविक्रमाचार्याणा पुत्रा नारायणपण्डिताचार्या एव श्रीसुमध्वविजयाख्य महाकाव्यं व्यरचयन्नित्यपि अत्र ध्येयम्। धृतिवधस्य धैर्यस्य मूलविभवाः मुख्यसंपद्- भूता पड्गास्त्रेषु वेदान्तन्यायव्याकरणादिषु प्रचरती सुलभं निर्णानि प्राप्तवती विचित्रमति विलक्षणप्रज्ञा एषां ते। त्रैविक्रमार्या.। अन्यश्च गोदातीरे निवसन् शोभननामकपण्डितः कलिगदेशीय. विद्वान्। मध्वाध्वे पादमाश्रिता।

प १२०. अनन्वितगतया असवद्धामाधुकार्याचरणै।

आदितेया अदितिपुत्राः सुरा। तेपा परिपथी शत्रु। कात्करणानि कुत्सित

साधनानि । तै. कठोरा मति. यस्य स । विपिनविरावेण—व्यर्थ रोदनेन ।

व्रीडाक्रीडानीड लज्जाया आवासस्थान प्राप्नुवन् । व्रीडया नितरा अवनमितकधरा आसन् । निष्टप्ता चामीकरस्य सुवर्णस्य घट्टिका ।

सज्जनवृदस्य समादरस्य पात्रस्य । काश्यपीदिविषद भूसुरा. । "धराधरित्री धरणी क्षोणी ज्या काश्यपी क्षिति." इत्यमर ।

ब्रह्माण्डस्य खर्पर छत्र । अन्तराल आकाशसीमानमतिक्रम्येति यावत् ।

स जगद्गुरु श्रीमध्व जेगीयते । भावे प्रयोगा । पुन पुन स्तुत्यते इति भाव ।

श्लोक ३६ यादववशस्य दीप्र नितरा प्रकाशमान मणि श्रीकृष्ण तम् । विष्णौ दौत्यं विष्णोर्गुणनामसकीर्तनार्थ सत्तत्वप्रचाराय च दूतप्रवृत्ति तदादेशेन भुवि मध्वरूपेणावतीर्णः असौ मारुति बाभाति य पूर्व भीमेति प्रथया चकास इत्यन्वय ।

श्लोक ३७ विधूत आसुरभाव येन स मध्व आर्तान् दिव्यौपधिपोषणेन अलौकिकतत्वोपायवर्धनेन पुष्णाति पोपयति ।

प १२१ पष्ठप्रवेशे उडुपी श्रीकृष्ण प्रतिमाप्राप्ते कथा उपवर्ण्यते ।

श्लोक ३८ यादश्चारैः जलचरै । दृष्टिक्षेप यावत् । दृष्टिक्षेपपर्यत । आभोगवर्ती वैशाल्यवान् । सार्थवाहा—वणिज । "वैदेहक सार्थवाहो नैगमो वणिजो वणिक्" इत्यमर ।

श्लोक ४०-४१ अपरोक्षज्ञानिन श्रीमदाचार्या नौकानिमज्जनवार्तया नैव प्रक्षुब्धा. । अस्या नौकाया गोपालकृष्ण समायाति इति आश्वासयति शिष्यान् ।

एषा नौका गौणवृत्ति ससृति. । यथा अस्या नौकाया गोपालकृष्णः आस्ते । तथैव ससारेऽपि विष्णु सर्वत्र व्याप्त. आस्ते एव । यदि आरात् समीपतः सम्यक् भक्त्या विविच्य विश्लेपणबुद्धया परीक्ष्य दृष्ट चेत् स व्यक्तो भवति । यदि स न भक्त्या दृष्ट. तर्हि तत्रैव स्थितोऽपि न व्यक्तो भवतीत्यर्थः । पूर्णे सच्चिदानन्दादिभि पूर्णे तत्स्वरूपत्वात् परिपूर्णे तस्मिन् विष्णौ जाग्रति सति सदा रक्षकत्वेन वर्तमाने सति का भीति. तदनन्यशरणाना भक्ताना इति भाव. ।

प १२२. नाथमान—प्रार्थयतं । नाथ् याञ्चोपतापैश्वर्याशी.पु । भुवादिगण उभयपदी ।

पृथग्जन इव अपण्डित इव । मूर्ख इव इत्यर्थः । क्षीरोदतनया क्षीर-सागरात् समुद्रमथनेनोद्भूता श्रीः लक्ष्मी तया परिवृढ आलिङ्गित । यथा श्वशुर स्वजामा.र समानयितुं वाद्यवैभवादिभि सन्नद्धो भवति एवमेव समुद्र स्वतनयाया त लक्ष्म्या. पतिं श्रीकृष्ण सभाजयितु निर्घोष कुर्वन्नास्ते इति भाव. । मगलोदर्के मगलफलसूचके । उदर्क. फलमुत्तरम् ।

प १२३ समुद्रमध्यात् वराहरूपी हरिः भूमिं यथा उद्धृतवान् तथा । भाव-त्कप्रसादप्रभावात्—भवदीयानुग्रहप्रभावेण ।

प. १२५ श्लो ४२-४३ शुकार्यात् शुकाचार्यात् ।

ससारार्णवघोरभगेन सिता पर वद्धा धी यस्य स । ससारसागरे निबद्ध-वृत्तिः इति भाव । सदासमाधिसुखं अनवरतध्यानानदम् ।

प. १२६. श्लोक ४६. भूरि अनतसुखदिकं ददातीति भूरिद ।

श्लोक ५० निबद्धवास कारागारे निबद्ध वसुदेव तस्मात् । औग्रसेने· उग्रसेनस्य सुत औग्रसेनि कस । तस्य भगिनी देवकी । तस्या माथुरपत्तने मथुरापट्टणे । द्वारका नाम मोक्षद्वारवन्नगरं इति ख्यात विद्यते ।

श्लोक ५१. मागध मगधदेशस्य राजानं जरासंधं ।

प. १२७ विश्वस्य समस्तप्रपचस्य विश्वः व्याप्य स्थितः अंतर्यामी चेष्टक ।

श्लोक ६३. स्व पद स्वस्वयोग्यतानुसारि स्वरूपानदाविर्भावरूपं मोक्षं पदं गच्छेत् ।

इति चम्पूभावबोधिन्यामष्टम उल्लासः ।

## नवम उल्लास:

प. १२८ श्लोक १. ब्रह्मण अकात् सभव' जन्म यस्य स'। श्रीनारद-मुनि'। तस्य वच सुधया वागमृतेन। उन्निद्रय निद्राया उत्थितो भव।

श्लोक २. नृपते. कृष्णदेवरायस्य घातस्य मृत्यो निवृत्तिः परिहार' तस्य हेतो.। अपमृत्युपरिहारमुद्दिश्य। अद्यत्वे आत्तहरिदर्शन इति संधिः। अद्यत्वे अद्यतनीये काले। अधुना साम्प्रत इति यावन्। आत्त प्राप्त हरिदर्शन येन स। अपरोक्षीकृतश्रीश इति सबुद्धि.। मुक्तकल्प मुक्तप्राय। "ईषदसमाप्तौ कल्पप्देश्यदेशीयरौ"।

श्लोक ४ निर्जिता कलि येन स। अज्ञानविस्मृतिभ्रांतिमशयापस्मृतिक्षय तद्राकंपवच कौदठ्यादय. कलिस्वरूपा. श्रीराघवेंद्रप्रसादेन दूरीभवति इत्याशयः। नृसिंहस्य प्रियतम वत्स इति प्रह्लादावतारध्यानम्। त्वत्सेवारतान् इति समस्त-पदम्।

अर्चकमर्चचिका अर्चकश्रेष्ठा। "मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ। प्रशस्तवाचकान्यमूनि" इत्यमर.।

प १२९ निर्णेजितानि स्वच्छीकृतानि पापप्रक्षालनेन च शुद्धीकृतानि अगानि एषा ते। विगते ममता अहता च मम अह इति भावने येभ्य ते। अहभावस्य अहता इति प्रयोग। स्वामिन' इत्यारभ्य इति पर्यंत अर्चका. श्रीगु-रुराजवृन्दावनसन्निधौ श्रीगुरुराजान् प्रार्थयति।

धीरमन्द्रस्वरेण धीरगभीरस्वरेण। "मन्द्रस्तु गम्भीरे" इत्यमर। "अणा-मुरसि मध्यस्थो द्वाविंशतिविधो ध्वनि। स मन्द्र. कण्ठमध्यस्थस्तार शिरसि गीयते" इत्यमर। यान्त्रिकभक्ता केचित् किन्नु स्वप्नोऽय'''इत्यादं। वितर्का-लकार। सम्भावितसम्भाव्यमानापोहो वितर्क। पिपीलिकाना कुल तेन आकुल वल्मीक। तद्वत्।

"पटच्चर जीर्णवस्त्र" मित्यमर। अनेकविधवस्त्राणि शोषयद्भिः स्त्री-पुसै आकीर्ण नदीतीर पिपीलिकाव्याप्तवल्मीकवत् दृश्यते इति भाव। आऽक्षि तृप्ति अक्ष्णो. तृप्ति आ यावत्। नेत्रयोः समाधानप्राप्तिपर्यंतमिति यावत्। कपोलतटघट्टितकराघातै.। पापपरिहारार्थ कपोलतटयो. द्वाभ्यामपि कराभ्या

पुन. पुन. सघट्टन नेत्रे अनुन्मील्य याचन इत्यादिक भक्त्यतिरेकस्य लक्षणानि।

मतुततुसतति पापपरपरायाः समूहं।

प १३०. केचिद्विवाहरसिकाः इत्यादिभि गुरुराजानां सर्वाभीष्टप्रदत्व तद्भक्ताना अनेकविधत्व च अतिमनोज्ञ वर्ण्यते।

श्लोक ६ उत्क उत्कठित कदा वा श्रीगुरुराजा अस्माननुगृह्य प्रगुण प्रकृष्टगुणवंत पति प्रापयतीति कुतूहलित वदन यासा ता।

श्लोक ७. "डिम्बे डमरविप्लवौं" इत्यमर। विविधपीडनदण्डैं भीता। अन्ये पुन सशातिसौख्यसपद आप्तु इच्छत। श्रुतविप्राणा श्रेष्ठब्राह्मणाना पादा यस्मिन् तत्। श्रोत्रियब्राह्मणाना पादैं स्पृष्टे रजसि इत्यर्थ। निर्मुक्ता लज्जा यथा स्यात्तथा। अय मम देह अगाना सौष्ठव न वहि. प्रदर्शयितव्यम् इति लज्जा विहाय। स्वय अगकानि देहमिति यावत्। व्यावर्तयति। मदिरस्य प्राकारे परित प्रदक्षिणावर्त्या अनेके गुरुराजभक्ता भूमौ आत्मान दण्डवत्पातयित्वा देह व्यावर्तयत स्वीयसकल्पितसेवामातन्वते। इय दिण्डुल्की सेवा इति प्राकृतभाषाया कथ्यते। भक्त्यतिशयेन गाढ विस्मृतस्वपरभावा गुरुराजभक्ता इत्याशय।

श्लोक ८ काणा. नेत्रहीना। खञ्जा पादहीनाः। कुब्जका वक्रदेहा। एडमूका जन्मन आरभ्य वाक्शक्तिविहीना। निरगा. अगविहीना.। व्यगा विगलितागा इति अगसत्वेऽपि सामर्थ्यहीनत्व सूच्यते। वृद्धै. परपरापद्धत्यादि ज्ञातृभि शिष्टा अनुशासिता। कथ सेवा कार्या इति शिक्षिता भूत्वा सेवामाचरति। अथवा वृद्धाश्च शिष्टाश्च सर्वेऽपि सेवा कुर्वतीति भाव.।

श्लोक ९. विशरणा अन्याश्रयविहीना.। भिषग्भि. वैद्यैं नास्माभि रोगपरिहार कर्तु शक्यते रोगस्य बहुजटिलत्वात्। इति परित्यक्ता। अनेके भिषग्वरा नास्माभि परिहारोपाय. प्रकल्पितु शक्यते इति निराशया परित्यक्ताना जनानामपि सर्वमपि रोग अमोघमन्त्रशक्त्या उत्कील्य परिहरति इति ख्यातचरित्रा किल श्रीराघवेंद्रतीर्था.। गुरु श्रीराघवेंद्रतीर्थ अद्धा अञ्जसा सेवन्ते।

प. १३० मस्करिषु सन्यासिषु मस्तकायमाना श्रेष्ठा। "भिक्षु. परिव्राट् कर्मन्दी पाराशर्योऽपि मस्करी" इत्यमर। आम्रेडितकौतूहलेन—पुनः पुनः प्रत्यावृत्तेन प्रवृद्धकौतूहलेन। ग्रहग्रस्त इव—यथा ग्रहेण पिशाचादिना ग्रस्त. गृहीत. पुरुष विस्मृतस्वपरभाव. मुग्ध. मौनेन तिष्ठति तद्वत् भक्त्युद्रेकवशगा.

श्रीमुयमीन्द्रा. तत्र वृन्दावनसन्निधौ स्थिता इत्यर्थ ।

गुरुराजै कृत रचित प्रात सकल्पात्मक गद्यम्—"ॐ लौकिकवैदिकभेद-भिन्नवर्णात्मक······प्रणवोपासकाना-|-त्वदुपासकेन श्रीमुख्यप्राणेन प्रेरित सन् त्वत्मस्मृतिपूर्वक शयनात् समुत्थायाद्यतन स्ववर्णाश्रमोचित देशकालावस्थोचितं नित्यनैमित्तिककाम्यभेदेन त्रिविध त्वत्पूजात्मक कर्म यथाशक्ति यथाज्ञप्ति यथावैभव करिष्ये ।···" इति प्रात सकल्पः ।

दौवारिकाः—द्वारपालका सेवका. क्रोडदष्टासमुत्था—वराहरूपिपर-मात्मन दष्ट्रा दन्त । तत्रत समुत्थाम् । क्रोडदष्ट्राया समग्रभूमिः स्थापिता किल हिरण्याक्षात् भूम्युद्धारकाले । तुगाह्लादीनी तुगानदी प्रति अभिप्रवृत्ताः गता ।

प १३१ उत्कवदनाच उदग्र मानसी च भक्तजनमहति । आजुषत आसे-वत । जुष् प्रीतिसेवनयो. तुदादिगण आत्मनेपदी । लङ् ।

अवीवरन्—वृ वरणे स्वादिगण उभयपदी । लुङ । अर्थविशेषाणा विव-रण चक्रुरिति यावत् । समस्ति—सम् सम्यक् अस्ति चकास्ते इति भावः । हृषीकाणा इन्द्रियाणा पोषणे एके केवले पोषणमात्रे निषक्तचेतस. आसक्त-चित्तस्य । केवल इन्द्रियसुखनिमग्नचित्तस्य इत्यर्थ ।

प १३२ प्राणात्ययोर्कं स्वप्राणविनाशरूपपुर'फलस्य कारणीभूत अघ पाप । एतत्पापनिमित्तेनैव स. नृसिंहेन हत इति भाव. । न लोमाप्यहीयत न केशोऽपि नष्टोऽभवत् । हि गतौ वृद्धौ च स्वादिगण परस्मैपदी । हिनोति । कर्मणि हीयते कर्मणिप्रयोगे लङ् । गत' अभवत् इत्यर्थ. । मर्कट. स्वभावतः एव सारासारविवेकहीन कूदनपाटनादिविकर्मसु रतः वर्तते । तदुपरि मद्यपाने दत्ते सति मर्कटः इतोऽप्यधिक अविवेककर्मसु रतो भवेत् । तद्वत् । प्रस्फुरंत. स्फुरण कुर्वत' अधरा रदछदा ओष्ठा यस्य स. । क्रोधावेशेन अधरोष्ठा. तीक्ष्ण प्रस्फुरति स्म इति भाव. । "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इत्यमर । रदा छाद्यन्तेऽनेन इति रदच्छद । छद सवरणे । चुरादि । "पुसि —" इति घ । छादेर्घे इति ह्रस्व. । अविता-रक्षकः ।

कठोरात् अयस्थूणागर्भात् अयोनिर्मितस्तम्भस्य आतरात् । गृहस्य अव-ग्रहण्या देहल्याम् । गृहद्वारस्य अधोभागे स्थापिता शिलापट्टिका देहली अवग्रहणी वा कथ्यते ।

प. १३३. श्व एव मध्याराधनादिने । तद्दिने रजतरथोत्सव. उत्तराराधना-

दिने च महारथोत्सव इति वेद्यम् । दिव्यकार्तस्वरमयानि दिव्यसुवर्णनिर्मितानि चित्राणि । तैः भूयिष्ठे । तत्तद्ग्रंथेषु श्रीवेदव्यास पूर्वाचार्यांश्च आवाह्य इत्यर्थ । सुषमा-परमा शोभा । "सुषमा परमा शोभा शोभा कान्तिर्द्युतिश्छविः" इत्यमर । प्रसृमर सर्वत्र प्रसरत् परिमल । तद्युक्त प्रसून पुष्प ।

प. १३४. श्रीपद्मनाभतीर्थेभ्य आरभ्य रघूत्तमवेदेशतीर्थयादवार्यादीना मध्वसिद्धान्तसागररत्नाना सर्वेषा नामग्रहणेन श्रीसुयमीन्द्रतीर्थाना ज्ञानकार्योत्साह चित्तवैशाल्य सर्वज्ञानिषु पूज्यभावना च द्योतते । श्रीसुयमीन्द्रा श्रीसमीरसमयसवर्धिनीसभाया उद्घाटनभाषण कुर्वाणा प्रथम सभाया ऐतिहासिकविषयान् निरूप्य "ॐ अथाऽतो ब्रह्मजिज्ञासा ॐ" इति प्रथमसूत्रस्य विवरण कुर्वन्त श्रीमध्वसिद्धान्तसार उपदिशति ।

प. १३५ प्रचाययेयु. । चायृ पूजानिशामनयो । भ्वादिगण चायति-ते । णिचि चाययति । विध्यर्थप्रयोग प्रकर्षेण प्रचार कुर्यु इत्यर्थ । "उपन्यासस्तु वाङ्मुखम्" इत्यमर. । वाचो मुखमिव मुख उपक्रम ।

सिञ्जिनीमञ्जीरसिञ्जतानि । आभरणाना कलकलध्वनि कुर्वन्त मञ्जीरा. नूपुरा तै. तैः सिञ्जितमिव सिञ्जित मधुरध्वनि एषा मञ्जुपदाना मनोज्ञशब्दाना तानि । तादृशाना मञ्जुपदाना पुञ्जै. समूहै. । अतिमधुरपदविन्यासै वाक्चर्यैरित्यर्थ । विबुधाना सदस सभाया रङ्ग स्थान अञ्जसा सम्यक् अञ्जयामासु भूषयामासु ।

प. १३८ घटिका चतुर्विंशतिनिमिषपरिमाणकाल. ।

प. १३९ आविपालगोपालम्—आवि मेषादिक पालयति इति आविपालः कृष्ण । आदौ देवधर्मात् विमुखान् जनान् उपदेशेन परमधार्मिकहरिभक्तान् सपाद्य कृत्वा इत्यर्थ । हरिदाससाहित्यप्रपचे हरिदासै अनेकविधवृत्तभूषितानि स्तोत्रपद्यानि रचितानि । एतेषा विभागा प्राय निम्नलिखितप्रकारा । (१) पदं (२) सुलादि (३) उगाभोग (४) वृत्तनाम-वृत्तप्रबध (५) रगले (६) षट्पदी (७) त्रिपदी (८) सागत्य (९) सुव्वालि (१०) गुण्डक्रिया (११) दण्डक (१२) शोभाने, सुव्वी, कोलुपद, जो जो पदं इत्यादय ।

"पद्य चतुष्पदी तच्च वृत्त जातिरिति द्विधा ।" इति छन्दोमञ्जर्याम् । पद वैदिकपरम्परागतं स्तोत्रम् । सुलादी इति वृत्त वाद्यनर्तनादीनामुपयुक्तम् । इदं लयप्रधानगीत । उगाभोग.—उद्ग्राहाभोग. । इदं स्वरप्रधानगीत ।

उद्ग्राह. प्रथमो भाग ततो मेलापक' स्मृत ॥
ध्रुवत्वाच्च ध्रुव' पश्चात् । आभोगस्त्वन्तिमो मत. ॥
ध्रुवाभोगान्तरे जातो धातुरन्योन्तराभिध' ॥

इति उद्ग्राहादिपञ्चविधरागगीतै. सम्बद्धगीतम् । वृत्तप्रबंधः श्रीमध्वाचार्याणा द्वादशस्तोत्रे सप्तमाध्यायादारभ्य स्तोत्रे निबद्धः । अत्र उपरिनिर्दिष्टविषया अधिकचर्चा च चम्पूप्रबन्धरचयितृभि. कविवर्यैरेव रचिते "कर्णाटकस्य हरिदाससाहित्य" मिति ग्रंथे (पत्रमस्या २२९-२३२) विस्तरश प्राप्यते ।

प १३९ "चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनि" (ब्रह्मसूत्रे ३, १, १०) । गतागत न यज्ञादेर्भवति किं तु चरणात् यज्ञाङ्गभूताचारादेव । चरणाचार इति श्रुतेरिति चेन्न । कुत यत श्रुतिस्तदुपलक्षणार्थाजहत्स्वार्थलक्षणया यज्ञाचारोभयप्रतिपादिका इति कार्ष्णाजिनिराचार्यो मन्यतेऽत. इत्यर्थ' । "ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॐ" (३, १. १०), उपलक्षणार्थत्वे चरणशब्दस्यानर्थक्यम् स्यादिति चेन्न । "तदपेक्षत्वात्" तस्य साध्वसाधुयज्ञादिमत्त्वस्य तदपेक्षत्वात् आचारादिसापेक्षत्वात् । तथा च तद्बोधार्थं तत्पदसार्थक्यं सम्भवतात्यर्थ. ।

"ॐ सुकृतदुष्कृते एवेतु बादरि ॐ" सुकृतदुष्कृते साध्वसाधुकर्मणी एव श्रुतिस्थचरणशब्दवाच्ये न तु तदङ्गाचरणमिति बादरिराचार्यो मन्यते इयर्थ' । एतं सूत्रै सदाचारविशिष्ट कर्म एव विशिष्टफलप्रापकमिति सिद्धान्तितम् ।

प १४० अकुब्ज अकुटिल हृदय एषा ते । विद्वज्जनस्य जीवातव जीवनौषधमिव स्थिता । विदुषा ज्ञानसामग्रीवर्धका. । अत एव जीवातव ।

गृहचटकरववर्ज—गृहचटकस्यापि रवस्य वर्जन यथा स्यात्तथा । नि.शब्दमित्यर्थ. । आलेख्ये चित्रे अर्पिता चेष्टा इव चेष्टा एषा ते । जनाना कुतूहलप्रवृत्ति अत्र चित्रिता । रघुवंशे "चित्रार्पितारम्भ इवावतस्थे" इति प्रयोग. अत्र स्मार्यते । "करकस्तु पुमान्पक्षिविशेषे दाडिमेऽपि च । द्वयोर्वर्षोपले न स्त्री करङ्के च कमण्डलौ ।" इति मेदिनी । कलधौतकरका. रजतनिर्मितपात्राणि । रसित-घोष ध्वनि ।

प. १४१ तारतर-अत्यत प्रकाशमान' । तीर्णकर्माणवा सपादितकर्माण. इत्यर्थ ।

प १४२ श्लोक १०. प्रकृते. चिदचिदात्मकप्रपचस्य रस. । सार तस्य नियन्ता । प्रपचस्य चेष्टक श्रीविष्णुरेव । तस्य रसाभोग सारभक्षण एतदात्मक तत्व देवगम्यमेव । न मानुषमतिगोचरम् इति भाव. । विष्णो रससृष्टिकर्तृ रं

तद्भोक्तृत्व च नून अमोघतत्व दे ीरेवाधिगन्तु शक्यम् ।

श्लोक ११. अथो-अथ । अनलस न विद्यते अलस यस्य स । सोत्साहमिति भाव । अशनवाक् सर्वाणि भूतानि अश्नाति इति वाक् श्रुतिवाक्यम् । कथम-युक्ता अर्थहीना भवेत् । विष्णुना यशोदास्तन्य स्यापि पान कृत इत्यनेन तस्य "अत्ता चराचरग्रहणात्" इत्यादिभि प्रमाणवाक्यै प्रतिपादित सर्वात्तृत्व नून दृढीभवतीति भाव ।

श्लोक १२ सुदत्या सुन्दराया द्रौपद्या वस्त्राणा अपहारे । दु शासनेन द्रौपदीवस्त्रापहरणे कृत आचरित कौरवस्य दु शासनस्य कृष्ण पापकारि कर्म । धिक्कृत्य तिर स्कृत्यअद्भुतशक्ति उद्धविभव उन्नतविभव कृष्ण वास.शत सृष्टवान् इत्यन्वय । "कृष्ण. काके पिके वर्णे विष्णौ व्यामेऽर्जुने कलौ" इति हैम ।

श्लोक १३ ' पत्र पुष्प फल तोय यो मे भक्त्या प्रयच्छति । तदह भक्त्युप-हृत अश्नामि प्रियमात्मन " इति भगवद्वचन गीतायाम् । आत्मान स्व आत्मने परमात्मने दास्यति समर्पयति । यथा मम प्रभु इति श्रीसुयमीद्रवचनम् । नृहरे प्रिय. प्रह्लाद स्व परमात्मने समर्पयत् । परमात्मनि सर्वसमर्पणबुद्ध्या अर्चनं कार्यमिति नियम ।

प १४३ .अंगुल्यासाद्य—अंगुल्या आसाद्य प्राप्तु शक्यम् अतिसमीपं-सरलसाध्यमित्यर्थ. ।

परिधानवासोदशा परिधानवस्त्रस्य दशा अत भाग अगुलीभि. सकोचयन्त आवर्त्य धरत । इत्यनेन भक्तिभयविनम्रताभावा द्योत्यते । "दशावस्था दीप-वर्त्योर्वस्त्रान्ते भूम्नि योपिति" इति मेदिनी ।

मव्वमताब्धे. वर्धनाय जैवातृक इव चन्द्र इव स्थित । क्षीरसागर चन्द्रात् प्रवर्धते किल । "अब्जो जैवातृक. सोमो ग्लौर्मृगाङ्क कलानिधि." इत्यमर । जीवयति अन्तर्भावितण्यर्थ. । "जीवे "इत्यनुवृत्तौ आतुकन् वृद्धिश्च" इति साधु. । चन्द्र. सस्यान् जीवयतीति प्रसिद्धम् ।

प १४४ विदित तेषा श्रीगुरुसार्वभौमाणा आकूतसर्वस्वम् अखिलाभिप्राय यै ते । गुरुव: श्रीसुयमीन्द्रा. ।

कार्तस्वरमय-सुवर्णनिर्मित पौरुपाकारकवचम् । दर ईपत् निमीलिते नेत्रे यस्य स तं श्रीराघवेन्द्रगुरुसार्वभौमम् । "दरोऽव्ययं मनागर्थे" इति मेदिनी । मानवभौमदेव: मानवब्राह्मण: । भौमदेव -भूसुर: इत्यर्थ: ।

प. १४७. जनूंपि जन्मानि । "जनुर्जननजन्मानि" इत्यमर: । सत्यक्तप्राव-

रणपरिच्छदा —सत्यक्ता प्रावरणपरिच्छदाः अगे प्रावरणाय वस्त्राणि यैः ते। भक्तिपरवशत्वात् अंगे धृतानि वस्त्राणि इतस्तत. पतितानि गाननर्तनावेगेन इति भाव.। अटाटन्त भक्तिभ्राता इतस्तत चरन्त ।

प. १४६ श्लोक १५ आत्मनीनमहसा-स्वकान्त्या। "मतल्लिकामचर्चिका-प्रकाण्डमुद्घतल्लजौ" इत्यमर। उद्घ-प्रशस्त. विभव सम्पत् यस्याः सा। चिच्चेत्यकम्—चिदचिदात्मक प्रपञ्च व्याप्नोति। सज्जनचोदने। सज्जनानां सन्मार्गप्रेरणाय। धृतवपुर्व्यापारभारा—धृतः स्वीकृत वपुष अवतारस्य व्यापारभार कार्यभारः यैः ते। देवा। भुवि निर्दिष्टावतारकार्याणि साधयितुमवतीर्णा इत्यर्थ। समुत्सवेषु लोकविडम्बन कुर्वत भासते इत्यर्थ। सम्मिलितभक्तजनसम्मर्दे अनेके देवागसम्भूता भवेयुरिति उत्प्रेक्षा।

श्लोक १६ निवृत्ता निर्गता तृष्णा विषयेषु इच्छा यस्य स। नारद एव प्रह्लादस्य साम्राज सम्पद दृष्ट्वा अभिनन्दितु "धन्योऽसि प्रह्लाद" इति अभिनन्दन कर्तु स्वयमागत कि ? वितर्कालङ्कार। "सम्भावितसन्भाव्यमानापोहो वितर्क" इति अलकाररत्नाकरे।

श्लोक १७ ग्रस्त इव ग्रहग्रस्त यथा भ्रात भ्रमति तथैव भक्तिभावभाविता भ्रमन्तीत्यर्थ।

श्लोक १८ भक्ता अग्रे श्रेष्ठे उच्छिष्टपात्रे उच्छिष्टपत्रेषु काय देहं व्यालोल्य परिभ्रमण कृत्वा सेवा चक्रुरित्यर्थ। उच्छिष्टपत्रेषु देहस्य आवर्तनेन साक मन्दिरप्राकारस्य प्रदक्षिणीकरण "दिण्डुरुकीसेवा" इति प्राकृतभाषाया वर्ण्यते। सज्जनाना सपश्यता सता इति सत षष्ठी।

प १४७ जनसमर्दात् भुवि पातिता भक्ता. पतन दण्डपात एव इति मत्वा गुरुनामाम्रेडनेन आत्मान तर्पयत प्रीणयन्त। आकारयत -आह्वयन्त। निरपह्नवम् — अपह्नव प्रच्छादन विना। कविवर्या स्वय तत्र उत्सवे स्थिता स्वसुकृतपरिपाकेनैव अय सदवकाश प्राप्त इति स्तुवन्ति अहो धन्योऽयमित्यादिना।

तस्य प्रह्लादस्य कृपाकटाक्षक्षेप एव मन्दाकिनी गगानदी। तस्या लहर्य तरगा तासा सगस्य सपर्कस्य सुख। निश्चप्रच निश्चितमेव।

श्लोक १९ दैत्यप्रासादस्य हिरण्यकशिपो राजगृहस्य। स्थूणा एव तूणाशब्देन निर्दिष्टा। तूण् पूरणे तूणयते। राजगृहस्य पूरका स्तम्भा। तेषा तटस्य प्रान्तभागस्य हति प्रहार तेन कुपित क्रुद्ध भूत्वा उद्भूत। सप्लुत प्रक्षुब्ध। श्रीनृसिंह। अदलत्। दल् विशरणे। भ्वादिगणे परस्मैपदी। तत्कृत्यं

दैत्यसंहारचरितं वक्तुकाम' प्रदर्शयितुमिच्छन् । भक्तं प्रह्लादरूप प्रह्लादावतारं नरवरं पुरुषश्रेष्ठ श्रीगुरुराजं मृगरिपो. सिंहस्य वपुप रूपस्य पृष्ठ भागे न्यधात् अस्थापयत् किमिति उत्प्रेक्षा । सिंहवाहनोत्सवे सिंहरूपस्य पृष्ठेभागे गुरुराघवेंद्रस्य उत्सवमूर्ति विराजते किल । कविवर्या इममुत्सव दृष्ट्वा उत्प्रेक्षन्ते यत् नरसिंह पुरा स्वेनाचरित दैत्यवधचरित प्रह्लादानुग्रहं च प्रह्लादावताराय श्रीगुरुसार्वभौमाय निवेदयितुमेव त पृष्ठे अधारयदिति । नरवर श्रीगुरुराज सिंहस्य उपरि तिष्ठन् नरसिंहावतारं तच्चरित च स्मारयति इति भाव. । अत एव स्वात्मरूप नृसिंहरूप साधयन् इत्युक्तम् ।

प.१४४ श्लोक २० पुन सिंहवाहनोत्सवस्य निमित्तं वितर्कयति कविवर्या । दैत्यः हिरण्यकशिपु. प्रह्लादं । प्राक् पुरा । असून् प्राणान् हरति इति असुहर । स चासौ मृगराजश्च सिंह । तस्य आस्यमूले मुखसन्निधौ आरात् समीपे हतु अक्षिपत् । सिंहस्य प्रह्लादहननकार्ये प्रचोदना कृता दैत्येन इत्येतन्मात्रेण सिंहस्य पापाधिष्ठानत्व प्राप्तम् । तन्मतुहन्ता तादृशमन्तो. पापस्य हन्ता निवारणं वर्तुकाम. प्रथितपृथुबल वन्यसत्वैकसार वन्याना वन्यपशूना सत्वस्य बलस्य एकसार' मुख्यसार सिंहः । अथवा वन्यसत्वानां वन्यप्राणिनां एकसारः मुख्याधिपति. राजा इत्यर्थः । कलियुगे विभवं संपत्सारभूतं सकलाभीष्टदं इति यावत् । राघवेंद्रात्मकप्रह्लादस्य स्वरूपं अवतार पृष्ठेऽवस्थाप्य याति किमिति वितर्कः । सिंह प्रह्लादवधकार्ये दैत्येन हिरण्यकशिपुना पुरा प्रचोदित इत्येतन्मात्रेण कृतापराधः स. स्वापराधस्य क्षमापण इच्छन्निव प्रह्लादावतारं श्रीगुरुराघवेंद्र पृष्ठे निरोप्य गच्छति किं । इति वितर्कालंकार ।

श्लोक २१. सिंहवाहनोत्सवागतया वाद्यमेलापकेषु दुन्दुभिध्वानोऽपि आसीत् । म ध्वान एवमाहेति वर्णयन्ति । यद्यश.स्पर्धया येन श्रीराघवेंद्रे यशसि स्पर्धा । तया धवलिम्नि कः ज्यायानिति स्पर्धाया प्रवृत्तायां इत्यर्थ । हरगिरिसुरशैल. हरगिरिश्चासौ सुरशैलश्च ईश्वरस्य पर्वत तथा च देवतात्मा शैल. हिमालय. । अल जित पराभूतः । हिमालयस्य धवलिम्न अपि श्रीराघवेन्द्रस्य कीर्तिधवलिमा नितरा ज्यायान् इति भावः । स निष्कलक. दोषलेशविदूर. । सुजनाख्यकुमुदस्य रात्रिकमलस्य चन्द्र इवस्थित । "कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च" इति मेदिनी । यथा चन्द्रेण कुमुदानि विकचन्ति तथैव सुजना' श्रीराघवेंद्रगुरुणा ज्ञानोपदेश स्वाभीष्टसिद्धि च प्राप्य प्रमुदिता भवन्तीति यावत् । श्रीराघवेंद्र स्वधाम्ना स्वीयकीर्ते. धवलकान्त्या अब्जं चन्द्रमेव अद्धा सम्यक् व्रीडयति अधरीकरोति इति दुन्दुभिध्वान. ।

प १४८ उच्छ्रित उन्नत दक्षिणबाहुदण्ड. येन स.। दण्डकं—एतत् विशिष्टगद्यकाव्य काव्यचमत्कृतिनिष्णातकविभिरेव साध्यम्। वृत्तरत्नाकरे दण्डकस्य लक्षण एवमुपन्यस्तम्।

"प्रतिचरणविवृद्धरेफा. स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दाममङ्ख्यादय'। प्रचितकुसममिधो धीरधीभि स्मृतो दण्डको नद्वयादुत्तरै' सप्तभिर्यै ।" इति

दण्डके अनेकविभागा अपि कल्पिता । (क) चण्डवृष्टिप्रपात: (ख) सिंह-विक्रान्त (ग) मत्तमातङ्गलीलाकर. (घ) अनगशेखर (ङ) कुसुमस्तवक इत्यादय'।

सुजनावनं—सुजनरक्षकम्।

प. १४६ श्रीप्रह्लादवरदनृसिंहप्रादुर्भावनाटक इति वाच्यनाटकम्। जय-विजयशाप हिरण्यकशिपोस्तप नारदवचन प्रह्लादोपदेश नृसिंहावतार दैत्य-वध प्रह्लादवरप्रदान इति कथामनिवेशा अत्र निरूप्यते।

श्लोक २२ उद्यद्रविबिम्बस्य वपुरा मनोज्ञा घृणय रश्मय तासा श्रेणी पक्ति मृणालायिता मृणालवत् कोमला सजाता इत्यर्थ'। नारायणस्य कान्तिः उद्यद्रविरश्मीनपि अधरयतीत्यर्थ । पूर्णाब्जरय पूर्णचन्द्रस्य द्युत्या कान्त्या सारं यस्य तत्। सारस कमल। पूर्णचन्द्ररश्मिभि विकचनादिसौदर्यं प्राप्नुवत् उत्पलमपि नित्यदा म्लानायित कान्तिस्पर्धया म्लानमिव सजातम्। नारायणस्य कान्ति विकसितोत्पलकान्तिमपि अतिशेते इति भाव । शुद्धाः दोषाकलुषिताः। उरव सर्वोत्कृष्टा । वीर्य सृष्टिस्थितिसहारकर्तृत्वादिसामर्थ्य सार सकलचराचराणा अन्तर्नियामकत्वेन तेषा सार मुख्यशक्ति महिमा अचिन्त्यविलक्षण-शक्तिमत्वाख्यमहिमा। शुद्धोरव वीर्यसारमहिमान यस्य स । पूर्णभा. पूर्ण-कान्तिमान् अद्भुतदन्दशूक. शेष एव शयन यस्य स । शेषशायी नारायण भाति। तत्र इति वैकुण्ठलोकनिर्देश पुरत प्रस्तूयमानकथासंदर्भानुकूल्यार्थं कृत ।

प. १४७ भानुसहस्रैरपि अकुण्ठ अकुण्ठितं न अधरीकृत तेज. यस्य स.। अविपल्लव विपदा लवोऽपि यथा न विद्यते तथा।

निर्गुणे प्राकृतगुणतद्विकाररहिते।

श्लोक २३ नियोग —आज्ञा। निघ्नै'-अधीनैः "अधीनो निघ्न आयत्त.।" इत्यमर'।

प. १४९ इतराया. तनय महिदास नारायणम्। कातरतया—भयभक्त्या

विनम्रभावेनेति भाव. । मा प्रयोगे ल्यब्प्रत्यान्तपदप्रयोगः- साधुः । ससारिपुरुषाणां दोषाः विषयवासनादिदोषा. । तेषा काषायेन कलिम्ना रूषित लेपितं रूपं येषा ते ।

दौवारिकाभ्या द्वारपालकाभ्या कृत प्रवेशनिरोध । अमर्षमाणाः असहमानाः ।

प. १५० शापसन्तमसं शापरूपतमः । निजनाथ नारायणः यस्य अनाथनं अपोषण पोषणाभाव. । नारायणाश्रयाभाव इत्यर्थः । तेन तान्ती पीडितौ । नाथ याञ्चोपतापैश्वर्याशी षु । हरिभक्तिरसस्य कूपवत् आधारस्थानवत् स्थितम् । ऋषिरोष एव शोचिष्केश अग्नि. तेन सप्लुष्टम् दग्धम् । "बर्हि शुष्मा कृष्णवर्त्मा शोचिष्केश उपर्बुध:" इत्यमर. । शोचीषि ज्वाला. केशा इवास्य । "नित्य समासेऽनुत्तरपदस्थस्येति षत्वम् ।" शापरूप स्वधिति खड्ग. ।

कश्यपात् दित्या दैत्या अदित्या आदित्या. सुराश्च जज्ञिरे इति पुराणकथा । कश्यपात् इतरभार्यासु नागनरपश्वादय. जाताः इति कश्यपस्य प्रजापतित्वमपि आख्यायते । "वराह सूकरो घृष्टि. कोल पोत्री किर. किटिः । दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि" इत्यमरः । कुक्ष्यां क्षिप्त कौक्षेयक खड्गं यस्य स । सदा हननसन्नद्धः । इति यावत् । "खड्गे निस्त्रिंश चन्द्रहासासि रिष्टय । "कौक्षेयको मण्डलाग्रः करपालः कृपाणवत्" इत्यमर. । कुक्षौ भवः । "कुलकुक्षिग्रीवाभ्य."—इति ढकञ् ।

प्रणिधिवर्गा. गुप्तचारसमूहाः । "यथार्हवर्ण प्रणिधि. अपसर्पश्चरः स्पश. । चारश्च गूढपुरुषश्च" इत्यमरः । प्रकर्षेण निधीयते ज्ञेयमत्र । "उपसर्गे घोः कि." इति कि. । निरपत्रपः निर्लज्जः ।

प. १५१. दृष्टिपात—इत्यव्यय. । दृष्टे. पतन यावत् । सर्वत्रेत्यर्थः ।

यागीयपशवः यथा मार्यते तथा । यागीयपशुमारमित्यव्यय. । सज्ञपनीयाः सहर्तव्या । ज्ञा मारणतोषणनिशामनेषु । भ्वादि गणे परस्मैपदी । "प्रवासन परासन निषूदनं निर्हिंसन । निर्वासनं सज्ञपन निर्मन्थनमपासन"मित्यमर ।

प १५१. मदरद्रोण्या । तन्नामकस्थले ।

"स तेपे मन्दरद्रोण्या तप परमदारुणम् ।
ऊर्ध्ववाहुर्नभोदृष्टिः पादाङ्गुष्ठाश्रितावनि. ॥
जटादीधितिभीरेजे संवर्तक इवांशुभिः । "इति भागवते सप्तमस्कन्धे ।

इतः पूर्वं इन्द्रस्य राज्य दैत्यै. जितमासीत् । अधुना हिरण्यकशिपो असन्निधाने दैत्यान् हत्वा तद्राज्य इन्द्राय पुनः प्रापयितव्यं इति सकल्प. । तपसा

तुष्टात् तपस्तुष्टात्। "भूतेभ्यस्त्वद्विसृष्टेभ्यः—" इत्यादिश्लोका भागवता-दुद्धृताः। विगताः असवः प्राणाः येभ्य. ते। भूतपिशाचादिभिः अवधीरित. अधः कृत. तिरस्कृत. परेपा पराक्रमः येन सः।

सान्द्रं निविडं तम अन्धकार·। तेन अवलीढेपु महीकुहरेपु कन्दरेषु। इत्यर्थ·। "अथ कुहर शुपिर विवरं विलम्" इत्यमर·।

प. १५२ श्लोक २४ सता मुदे रक्षो हत्वा अखिल जगत् अनुदिन सर्वदा आवीत् रक्षेत्। इत्यात्मकै उदारै तद्वाक्यैः। तस्य हरे वाक्यै धृति धैर्यं प्रापु.। अव रक्षणे। आवीदिति लुङ्। आवेदिति पाठान्तरम्। आ समन्तात् सम्यगित्यर्थः। अवेत् रक्षेत्। विधिलिङ्।

श्लोक २५ अत्र भूलोके दैत्यकुल हन्तास्मि। हन् हन्ति अदादिगण परस्मैपदी। लुट्। अचिरादेव हनिष्यामीत्यर्थ। सगण दैत्यगणसहितः। हरिणा मयैव इत्यनेन नरसिंह रूपेण इत्यर्थ. ध्वन्यते। मयैव इत्यनेन पुरुपोत्तमेन इति हरिणा इत्यनेन सिंहरूपेण इत्यर्थो सूचिता.।

"हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिपु। कपौ सिंहे हरेऽजेऽशौ शक्रे लोकान्तरे पुमान्। वाच्यवत् पिङ्गहरितो·" इति मेदिनी।

द्वितीयप्रवेशे नारदमुखेन प्रह्लादवतार पूर्वकथा सक्षेपेण निवेद्यते।

प १५२ यच्छासनानतिगति.—यस्य शासनस्य अतिक्रमणाभाववान्। यस्य शासनमनुरुध्यैव वर्तमाना सूर्यतारकादय· स्वस्वव्यापार कर्तु प्रभवन्ति इति यावत्। इद्धं प्रदीप्तं तेज· यस्य स.। इद्धं इन्धधातो· कर्मणि क्तप्रत्ययान्तरूपम्।

कश्यपसूनो· कश्यपात् दित्या जातस्य दैत्यस्य हिरण्यकशिपो।

प. १५३. जगतः अण्डमण्डल यस्मिन् तत् जगदण्डमण्डलं पुण्डरीकं कमल। तस्य प्ररोहस्य वर्धनस्य निदानम् मूलकारणम्। विष्णो. नाभिप्रदेशात् कमलमुद्भिन्न यत्रैव चतुर्मुखब्रह्मा उद्भूत।

सृष्टिस्थितिलयनियमनज्ञानाज्ञानबंधमोक्षरूपस्य अष्टकस्य। घृणार्णोधे· कृपासागरस्य गुणप्रपचनेन गुणवर्णनेन साक विनोदजाल विवृण्वता मया (नारदेन) समाश्वासिता इत्यन्वयः।

मातृगर्भाख्यकिष्किधे अतिनिविडलघुप्रदेशे स्थिते पिहितकवाटपुटपञ्जरे।

प्रसृमर. प्रसरन् मुरारिद्वेप। दन्दशूक —सर्पः।

महीतलमात्रे स्पृष्ट. अ गुष्ठ·। तन्मात्रं क्षिप्त गात्रभरः एषा ते। अतीवकठिणतमतपस्यासु रतैरपि इत्यर्थः।

हर्षाश्रुधारासारैः अभिवृष्टाः भ. भूमिः भूधरा. पर्वताश्च येन सः। देव-र्षिनारदः आकाशे संचरन् स्वीयहर्षाश्रुधाराभि. समानभूमिं पर्वतप्रदेशान्श्च असिञ्चदिति भाव । पुन पुन. अनृत्यदिति भाव ।

प. १५४. तृतीयप्रवेशे प्रह्लादशिक्षणं दैत्यबालकेभ्यः प्रह्लादकृतोपदेशः इति कथाः निरूप्यंते ।

आन्वीक्षकी—दण्डनीति· तर्कशास्त्रादिविद्या । "आन्वीक्षकी दण्डनीतिस्त-र्कविद्यार्थशास्त्रयो." इत्यमरः। अनु श्रवणोत्तरमीक्षणं परीक्षणं अन्वीक्षा । सा प्रयोजन अस्याः आन्वीक्षकी । "प्रयोजनम्—" इति ठक् । अभिपोषितं प्रव-र्धितं शक्तित्रयं एन स. । प्रभुशक्तिः—मन्त्रशक्तिः—उत्साहशक्तिः इति शक्तित्रयम् । राज्यं नाम शक्तित्रयायत्तम् इति दशकुमारचरिते ।

"राजा भट्टारको देव." इत्यमर. । भट् परिभाषणे । भट्‌चासौ तारकश्च यद्वा-टलसि टल् विप्लवे । ण्वुल् । रलयोरेकत्वस्मरणम् । भट्‌चासौ टारकश्च । भट्टं स्वामित्वमृच्छति वा । उररीकुरु—समर्पय ।

त्रिवर्गोपपादन—धर्मार्थकामाख्यस्य पुरुषार्थत्रयमात्रस्य उपपादन प्रति-पादनं । अथवा क्षय. स्थान च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् । मोक्षं विहाय अन्यपुरुषार्थचिंतन अथवा भौतिकविषयकत्रिवर्गे रति· न रोचते इति प्रह्लादा-भिप्राय । "धर्मार्थकाम इति योऽभिहितस्त्रिवर्गः" इति भागवते (सप्तमस्क-न्धी) ।

द्वद्वे सुखदुःखात्मकसंसारे आराम. आनन्दः एषा ते । गृहमेधीयकर्माणि । गृहसंबद्धकर्माणि । गृहमेधिन्—गृहैर्दारैर्मेधते संगच्छंते इति ।

प. १५७. अनर्थोदर्कं अनर्थसूचकम् ।

बिलेशयस्य सर्पस्य फणस्य च्छाया । कुशेशय कमल मृदुपुष्प वा । तैः निर्मित शयन । तत्र सवासस्य सुखम् । तरक्षु· मृगादन क्रूरपशु । तस्य कुक्षौ समीपे निक्षिप्त. । स्थापित ।

निविडवारिवाहा सान्द्रमेघा तेषा कालिमा । तेन अवलीढा व्याप्ता तमिस्रा रात्रि. । शेमुषीमता—विवेकबुद्धिमता । प्राभव —प्रभावातिशय ।

कृष्णवर्त्मा अग्नि यथा हविषा वर्धते । तथैव विषयलालसा विषयभोगेन पुन पुन वर्धते एव इत्यर्थ· । हेति —आयुधम् । "हेति. स्यादायुधज्वाला-सूर्यतेज.सु योषिति" इति मेदिनी ।

दैव संपत्याः विपदश्च पदं स्थानम् । दैवलीलया संपद विपदश्च प्रवर्तते ।

सतीर्थाः—सहपाठिनः । "सतीर्थ्यास्त्वेकगुरव." इत्यमर. । समाने तीर्थे वसन्ति इति ।

ललाट तापयतीति ललाटंतपा । अतिप्रखर तपनः सूर्य· । तस्य तापेन औष्ण्येन । शुष्का तालव. एपां ते । गीर्वाणतरङ्गिणी सुरनदी गङ्गा । पीयूप-सदृक्षम् अमृतसदृशम् ।

प. १५६ श्लोक २६ नन्दस्य नन्दनं—नन्दकुमार । कृष्णमिति शेप· । गोकुलोद्धारे निष्ठित आसञ्जित. भाव. यस्य स । कुदपुष्पवत् सुंदरा दलाः यस्य स । अधरीकृत सौन्दर्ये तिरस्कृत मार येन म । हृदयमेव मन्दिर वा-सस्थान यस्य म । ईडे स्तौमि । निभालयन्—पश्यन् ।

कोपच्छटया कोपदीप्त्या च्छुरिते व्याप्ते अत एव कपायिते रक्तवर्णिते लोचने यस्य स. । प्रस्फुरन् प्रकम्पमान अधररदच्छद. अधरोष्ठ यस्य स ।

ककुभा दिशा अतराल अवकाश । सर्वे दिक्षु प्रतिध्वनिना मुखरयन्नि-त्यर्थं ।

वन्यकुलटाट —वन्यव्यभिचारस्त्रिय । गोपिका निर्दिश्य कथनम् । तासु अटति भ्रात भ्रमतीति वन्यकुलटाट. । तम् ।

कटाक्षक्षेपमात्रेण कवलितान् आत्मसात्कृतान् । असीमान् सीमारहितान् । अतिविस्तृतानिति यावत् । लोम अपि केशोऽपि । हीयते नष्टो भवति । पाट-च्चरा चोरा । क्रूरमल्ला इति यावत् । न्यवकार धिक्कार ।

भौतान्न अत्तार· भक्षयितार ।

कीनाशसधर्माण· क्षुद्रजन्तुसदृशा. । "कृतान्ते पुंसि कीनाश क्षुद्रकर्षकयो-स्त्रिषु" इत्यमर ।

अधोक्षस्य विष्णो पक्षे दक्ष· । तत्पक्षपाती । ज्योतिप काते पोप रक्षक । ज्योतिप भविष्यत सर्वस्यापि नियतारमिति वा ।

प १५७. अविपाल । अविं मेप पालयतीति । मेपादिपशुपालक इति तिर-स्कारेण कथन । सभाया चत्वरे स्तम्भे ।

शतधृति चतुर्मुखब्रह्मा । तेन विश्राणित वर तस्य वचोऽटी शब्दरीतिं अवितथा कुर्वन् । वर शब्दश सत्यं कुर्वन् । विशाललोचने चपकं इव मद्यपान-पात्रमिव स्थित । यथा मद्यपानातुर मद्यपानपात्रेण मद्य पिवति तथा लोच-नाभ्यां आतुरतयाऽपश्यदिति भाव ।

भक्तानां पूग समूह । तस्य संख्याया. पूरणदशापरिगणनसमये । भक्ताना क्रियमाणे सति भक्ताग्रेसरत्व ममैव प्रापयितुमिव मा प्रथम तव स्तुतिकार्ये मा

पुर प्रेरयतीति भाव.। कीनाशसमस्य—क्षुद्रजन्तुसदृशस्येति आत्मन विगर्हणम्।

अर्पितसत्वसन्दोह —अर्पित आत्मसात्कृत सत्व बल तस्य सन्दोह· संग्रह.। "समूहनिवहव्यूहसदोह विसरव्रजा." इत्यमर·। मंतु—अपराधम्।

लोकसग्रहस्य लोककल्याणकार्यस्य रिरक्षया रक्षितु इच्छया।

अते नारदमुखेन फलश्रुति· सपाद्यते। नाटक दृष्ट्वा श्रुत्वा च मुदिता. यात्रिका स्वस्वावसथ प्रतिनिवृत्ता इति अवगन्तव्यम्।

इति चम्पूभावबोधिन्यां नवम उल्लासः।

## दशम उल्लासः

प. १६१ सिषेविषणा—सेवितुमिच्छूना सेवमानानामित्यर्थ । देवांशत्वात् विनिद्रा अनिमिषाश्चा श्रीराघवेंद्रतीर्था । तथापि लोकविडम्बनाय निद्रा-मुद्रया नेत्रनिमीलनात्मकया मुद्रया सहिते नेत्रे येषा ते । वदीकुर्महे—वशी-कुर्महे । सदा जागरिता अपि सुप्तोत्थिता इव इत्यन्वय. ।

श्लोक १ वरिवस्यया—सेवया "वरिवस्या तु शुश्रूषा परिचर्याप्युपासना" इत्यमर । वरिवस करण वरिवस्या । आरात् सप्रत्येव निजजनस्य भक्त-जनस्य वर दास्यति । क्षिप्रप्रसन्नत्वात् गुरुराजानाम् । रेचयति—निष्कासयति । रिच् विरेचने । णिच् । प्रवीणभिषज निष्णातवैद्यस्यापि रोग नाशयति । निष्णा-तवैद्येनापि निवारणासाध्यं रोग स्वमन्त्रशल्या निवारयतीति भाव ।

श्लोक २ ऋषिच्छदसी । ध्यायन् ऋषि-छदोध्यानपूर्वकमेव श्रुतिपठन कार्यम् । स्वय ब्रह्माध्वरे ब्रह्मयज्ञे वेदपठनपाठनरूपयज्ञे । निर्वृत आसक्त सन् यान् देवान् आह्वयति तानपि ध्यायन् इत्यन्वय । तानपि इति शेष । यस्य वसति वृन्दावन गार्हस्थ्येऽपि भूतादिनिर्वासिनी गृहस्थाश्रमिणामपि भूतपिशा-चादि पीडापरिहारकर्त्री इति भाव । अद्भुतनृसिहस्य विलक्षणशक्तिमत पुरु-षश्रेष्ठस्य श्रीराघवेंद्रमुने । उपसन्न प्राप्त ज्ञानद्वारा प्राप्त आत्मा परमात्मा एन स । तस्य । अद्भुतनृसिहस्य विशेषणम् । शुभकल्य—शोभनसुप्रभातम् ।

प. १६२ श्लोक ३ यत्काष्ठाविजये—यस्य दिग्विजये । उरुधा-बहुधा । प्रत्यर्थिप्रभव—प्रत्यार्थिषु प्रतिवादिषु प्रभव श्रेष्ठा । श्रेष्ठप्रतिवादिन. इत्यर्थ । तुष्टुवु—स्तुतिं चक्रु । य. राजन्यै. सादर अभ्यर्चित. तस्य शुभ कल्य स्यात् इत्यन्वय ।

श्लोक ४. जल्पकलना—जल्पस्य वाच कलना विपर्यासादिदोष । यद्वा जल्पाख्यवादविशेषस्य कलना ग्रहण । मुधा व्यर्थ वैतन्डरीति वितन्डाख्य वाद-विशेषरीतिम् । यस्य वाच शैलि जल्पवितण्डादिदुष्टवादरीतिमि न कलु-षिता आसीत् इत्यर्थ ।

श्लोक ५ यस्य राघवेंद्रमुने मन्त्राक्षतस्थापनेन पिशाच्च गृहे पद निधातु न अशक्नोत् । अत तद्गृहे तदानीम एव जात. शिशु पिशाचेन न गृहीत. इति कथा अत्र स्मर्तव्या । व्यरहयत्—न्यवारयत् इत्यर्थः ।

श्लोक ६ आरात् दूरत. अप्रत्यक्षेण स्मृतिमात्रत । वाक्यार्थेन रौद्रे भयंकरे। एकस्मिन् वादे पाचकेन अपण्डितेनापि जटिलवादचर्चा कृता जयप्राप्तिश्च समभूद्राघवेंद्रगुरुस्मरणमात्रेणेति कथा स्मर्तव्या। अध्वरे वादरूपयज्ञे। जैत्रपत्रं विजयपत्र। यस्य स्मृतिमात्रतः विद्वान् अपि कठिनविषयनिरूपणे अचल प्रसार निश्चित प्राशस्त्य प्राप इत्यर्थ ।

श्लोक ७ समयप्रविष्टं-समये शास्त्रे प्रविष्ट । य. श्रीराघवेंद्रमुनि· सकलशास्त्रगतपदानि तदर्थं च धिया एव स्वबुद्धचा एव । अन्यापेक्षा विना इत्यर्थ. । जानाति । मूलग्रन्थस्य पूर्णतया बुद्धिस्थत्वात् मूलग्रन्थस्य अपेक्षा एव न आसीत् ।

श्लोक ८. "मद् भक्तास्त्वामनुव्रता." इति भागवतोक्ति· अत्र स्मार्यते ।

श्लोक ९. समधिया-समान बुद्धचा। विगत. आत्ममोह. अहं मम इति अहंकारात्मकाज्ञानहीन. । त विरक्त· श्रीराघवेंद्र नमामः ।

श्लोक १० यदूनां पति श्रीकृष्ण. । यस्य वृन्दावन· आवसति तस्मै श्री गुरुराघवेंद्रयतये कल्य आनदद स्यात् इत्यन्वय । देवगणै. समस्तमुनिभिश्च साक वृन्दावने आवसन्ति ।

श्लोक ११. श्रीगुरुराजाना वृदावनस्थले प्रल्हाद. यज्ञमकरोत् । तथा च वृन्दावन श्रीरामचन्द्रस्पर्शपूतपाषाणेन निर्मितमिति कथाऽत्रानुसधेया । उर्जितस्य अत्युन्तनस्य यगस धाम्न वासस्थानस्य । अत्युन्नतकीर्तिभाजः इत्यर्थः । सुशोभन दाम कान्ति· यस्य स. । तस्य ।

प १६३. "तत वीणादिकं वाद्यमानद्ध मुरजादिकम् । वशादिक तु शुपिर कास्यतालादिक घनम् ।" इत्यमर. । ततानद्धशुपिरघनादय महोत्सवप्रसङ्गसूचकाः वाद्यविशेषा· । "आकाशस्य तु विज्ञेय. शब्दो वैशेषिको गुण" इति न्यायसिद्धान्तमुक्तावल्याम् । तुङगाया तरङ्गाना निनदः ढक्कामृदङ्गरवस्य सवादी सदृश. आसीत् । तादृशध्वनिना साकं प्रभातसगीतं सर्वत्र प्रसृतमिति भाव. । निर्लिपा देवाः तेषा नगरस्यः अधिपः इन्द्र. । तस्य सभाया । विबुधा· देवा । तेषा भारत्या. वाच शुभप्रभा शुभकान्ति· तया विभाताया प्रकाशिताया सभाया इत्यन्वय. । धिषणगुरु. बृहस्पत्याचार्य. तस्य धिषणागोचरं बुद्धिविषयमभूत् । प्रभातसगीतध्वनि. श्रीमन्त्रालयक्षेत्रात् आकाशे निर्गत्य देवलोक प्राप्य तत्र देवसभाया स्थितस्य देववर्गस्य विशेषतः देवगुरोः बृहस्पत्याचार्यस्य श्रवणविषया अभूदिति भाव. । भूलोकगुरोः राघवेंद्रमुनेः

कीर्तिस्तुतिध्वनि सुरलोके सुरगुरुमपि प्रापेत्यनेन कीर्ते सर्वव्याप्तत्व सूच्यते ।

सभास्थूणाखण्ड—सभास्थितस्य स्तम्भस्यैकभागे । नैस्त्रिश्यात् क्रूरात् दैत्यकोपात् ।

तस्य राघवेद्रस्य वशरूपसागरस्य राकाचन्द्र इव पूर्णचन्द्र इव स्थितेन सुयमीन्द्रमुनिश्रेष्ठेन । "राका नद्यन्तरे कच्छ्वा नवजातरज स्त्रियाम् । सम्पूर्णेन्दुतिथौ" इति मेदिनी । राति शुभमिति राका ।

प १६४ पक्षपातिना पक्षाभ्या पतति चलतीति पक्षपाती पक्षी । तेन गुरुडेन । सनक्षत्र च तत् उषश्च । तस्मिन् स्नानार्थ । उष काले नक्षत्रेषु सत्सु एव नदीस्नान विहित शास्त्रे । प्रात स्नान । "उत्तम तु सनक्षत्र लुप्ततार तु मध्यमम् ।

सवितर्युदिते भूप ततो हीन प्रकीर्तितम् ॥" इति कृत्यशिरोमणौ । निम्नगाया नद्या निम्नभूमि गभीरप्रदेशम् । "निम्न गभीर गम्भीरम्" इत्यमर । वैहायसावकाशात् आकाशावकाशात् ।

लक्ष्मीपति सदेवगण रूपान्तरेण वृन्दावने सन्निहितोऽपि मध्याराधनानिमित्त तेज प्रसररूपेण विशेषसान्निध्यर्थ तत्र समागत इति कविवर्याणा वर्णनाचमत्कृति नून प्रशसनीया ।

माध्वसप्रदायानुसारिण स्नानानतर आत्मन देह गोपीचन्दनेन द्वादशस्थानेषु विशेपाकृतिभिरलङ्कुर्वन्ति पचमुद्राभिश्च आत्मानमकयतीति ध्येयम् । ललाटे एक उदरे त्रीणि हृदये एक कण्ठस्य चतुर्पु भागेषु चत्वारि, भुजयो द्वे पृष्ठे एक इति द्वादशनामानि । चक्रशखपद्मगदानारायणाख्या पंचमुद्रा ।

प. १६७ न्यक्कृतेषु हीनवस्तुषु मति यस्य स । हृदि हृदये एव छिद्रवत् सूक्ष्म रध्रवत् सत वर्तमानस्य । "ॐ दहर उत्तरेभ्य ॐ" "ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेव व्योमवच्च ॐ" इत्यादिब्रह्मसूत्राणि अत्र ध्येयानि ।

प १६६, एकया केवलया भक्त्या । "माहात्म्यज्ञानपूर्वस्तु सुदृढ सर्वतोऽधिक स्नेहो भक्तिरिति प्रोक्त तया मुक्ति र्नचान्यथा" इति श्रीमध्वाचार्यै भक्तिस्वरूप सुरुचिर निरूपितम् ।

वल्गुना—मनोहरेण ऐदपर्य—इदपरस्य भाव एदंपर्यम् । तथ्याश सारार्थमित्यर्थ ।

प. १६७. शातकुम्भेन सुवर्णेन निर्मिता शतसख्याका: कुम्भा पात्राणि ।

"स्वर्ण सुवर्ण कनक हिरण्य हेम हाटकम् । तपनीय शातकुम्भ गाङ्गेय भर्म कर्बुरम्" इत्यमर । शतकुम्भे पर्वते भव शातकुम्भम् । "तत्र भव ..." इत्यण् । प्रत्यग्र नूतनमेव आतचित पयस दधिभावार्थं दधिमिश्रीकृत पय क्षीर तस्मात् उत्पन्न दधि । तेन सहिता रौक्मकलशा रजतपात्राणि ।

शराव प्राकृतभाषाया कडावि इति कथ्यमान पात्रविशेष । नारिकेलसीधु नारिकेलजलम् । अमुखरयत् प्रतिध्वनिसनाथमकरोत् ।

प. १६८ श्लोक १४. अद्यत्वे अद्येति भाव । अद्यत्वे श्रीराघवेंद्रो दयाल. इति पाठ ।

श्लोक १८ गुरुराघवेंद्र नृसिंहकृष्णाच्युतरामादिभगवद्रूपाणा तत्र वृन्दावने सन्निहितत्वात् तद्विशिष्टत्वाख्यलिंगेन नृसिंहकृष्णादिनाम्ना एव बोद्धु शक्यते । अत वृन्दावनभिषेकेण विष्णो तत्परिवारस्य चाभिषेक कृत इति भाव. ।

प १६९ विचित्रकलाकृतिखचिता दशा वस्त्रप्रान्तभाग । तद्वत् श्वेतकौशेयवास ।

प १७०. शोधयित्वा वस्त्रेण समार्ज्य इत्यर्थ । पृथिव्यादितत्वाभिमानिन्य देवता. स्वस्वस्थानेषु स्थित्वा परमात्मन. प्रेरणामन्वैव कार्येषु रता: भवन्तीति अनुसन्धानेन भगवदर्चन तत्वन्यास इति कथ्यते । सकलमातृकासु अकाराद्यक्षरेषु अभिमानितया स्थितानि विभिन्नानि भगवद्रूपाणि वर्णाना अर्थबोधकत्वादिशक्ति जनयन्तीत्यनुसन्धानेन भगवद्ध्यान मातृकान्यास. इति विदित वर्तते ।

प १७१ षड्सोपेतपक्वान्नानि । "तुवरस्तुकषायोऽस्त्री मधुरो लवण. कटु । तिक्तोऽम्लश्च रसा पुंसि" इत्यमर । कषायमधुरलवणकटुतिक्ताम्लाख्या: षट् रसा. ।

प १७२ रजनीमुखे—सायकाले । "प्रदोषो रजनीमुख" मित्यमर. ।

प १७३ मोक्षसाधनविचारोपन्यासे ब्रह्ममीमासाशास्त्रस्य तृतीयाध्यायस्यार्थं क्रोडीकृत । अत्र (१) साधनस्य सिद्धसाध्यभेदेन द्विधात्व (२) विरक्तिभक्ति-उपासना-ज्ञानमिति साधनजातस्य वर्णन (३) मोक्षस्वरूपचर्चा (४) वेदप्रामाण्यसमर्थन (५) चार्वाकतार्किकजैनबौद्धादिमतनिरास मोक्षस्वरूपतत्साधन चर्चाया (६) भगवत्सिद्धान्तसमर्थनं इति विषयविवेक नितर जागर्ति ।

प १८६ श्लोक १६ निर्वृत सतुष्ट. सन् ।

श्लोक २०. गुरु विवेकशून्य शुण्डालमारुह्य ससारकर्दमोद्विग्न कामाद्यरि-

ईषणात्रयातीत —वित्तेषणा दारेषणा पुत्रेषणा इति ईषणात्रयं संसार-बंधनद्योतकं। तस्मादतीत । ससारबधनरहित इतियावत् ।

निर्णेषीरन् कवय. निर्णयं कुर्यु इत्यर्थ । निस् उपसर्गपूर्वक नी प्रापणे भुवादिगणोभयपदी । आशीर्लिङ् । नेषीष्ट नेषीयस्ताम् नेषीरन् ।

भाविपद्मभू भाविब्रह्मा वायु. । शरीररथस्य वायुरेव सारथिः ।

प. १८. श्लोक २५. रुक्म चक्री । रजतचक्रे स्थितः ।

श्लोक २६. तथा २७. चद्र. सूर्य मणीना दीपसमूह ज्वलति सर्पफणासु प्रकाशमानानि रत्नानि । तेषां लसंत्य प्रभा. । अहेः शेषस्य ब्रह्माण्डभारं वहत. मूर्ध्न निर्यत्स्फुरज्जोति. तथा च रसाया भूमौ मेरुपर्वतस्य कान्ति । एते सर्वे स्पर्धया मिलित्वाऽपि रथमध्ये स्थित कर्मदिषु सन्यासिषु धौरेय अग्रेसरं । प्रभूत-कातिमत श्रीराघवेन्द्रं स्वभासा जेतु न समर्था अभूवन्नित्यर्थ ।

श्लोक २८. जैवातृक चन्द्र कलकी स्वस्मिन् शशचिह्नवान् किंतु गुरुराज निर्दोषं सदा प्रपूर्णमालक्ष्य तथा च आत्मानं दिवा हतार्चि किन्तु गुरुराज सतत प्रफुल्लं प्रद्योतमानं आलक्ष्य म्लानमुख सजात इव ।

श्लोक २९-३०. श्रीगुरुराज. आतर मौढ्यं तम. नक्त दिव विद्रावयति । अत सूर्यं चन्द्रं चातिशेते इति भाव । अस्य राघवेन्द्रस्य एतत् चरित अद्भुत खलु। इति उदारवाच सर्वोपकारिमहदुपदेशप्रदातार गुरुं जना अस्तुवन् । एतदद्भुत-चरितस्य श्रीवेदव्यासप्रसाद गुरुमध्वसेवा च कारणीभूते। अत एव सर्वत्र जयशील श्रीराघवेन्द्र. इति भावः ।

श्लोक ३१. नभस्त आकाशत । मितपच वाक्य अल्प वाक्यम् ।

श्रीमध्वाचार्यकृतेषु सप्तत्रिंशत्सख्याकेषु मूलसिद्धान्तग्रन्थेषु अधोनिर्दिष्टा ग्रन्था दशप्रकरणाख्यया प्रसिद्धा । (१) मायावादखण्डनम् (२) मिथ्यात्वानु-मानखण्डनम् (४) प्रमाणलक्षणम् (५) कथालक्षणम् (६) तत्वोद्योत (७) तत्व-विवेक (८) तत्वसख्यानम् (९) कर्मनिर्णयम् (१०) श्रीविष्णुतत्वनिर्णयम् ।

एतेषा टीका निर्मिताः टीकाकृद्भि श्रीजयतीर्थै. । टीकाना टिप्पण्य रचिता टिप्पण्याचार्यैः श्रीराघवेन्द्रतीर्थैः ।

प. १९० श्लोक ३५ कयाधूपुत्र प्रह्लाद श्रीकण्ठे शोभनकण्ठे सिहं सिहरूपिण नृसिह सम्यक् सेवया अतर्पयत् सतोषयामास । व्यासयोगी टीकाचार्याणा भावस्य अभिप्रेतार्थस्य दीपै प्रकाशकै. । त्रिरत्नै न्यायामृततर्क-ताण्डवतात्पर्यचन्द्रिकाख्यै ग्रथरत्नै श्रीनृसिह सिषेवे इति भाव. ।

श्लोक ३६ सभार्यं गीर्वाणाग्र्यं. श्रेष्ठसुरैः पुष्पवर्षैः पुष्पासारेण साकं पूज्यमानः राघवेन्द्रः रजतरथे भाति इत्यन्वयः ।

प १९१. श्रीव्यासविजयनाटके सप्तप्रवेशाः निवेशिताः । तत्र प्रथमप्रवेशे कृष्णदेवरायस्य व्यासराजगुरुमुखात् नीतिसारपठनं द्वितीये व्यासमुनिभिः पुरन्दरदासादीनां धर्मप्रचारादेशः तृतीये कृष्णदेवरायस्य कुहूयोगविषयकभविष्यवाणी चतुर्थे पञ्चमे च व्यासयोगिभिः स्वमन्त्रशक्त्या कुहूयोगनिवारणसंनिवेशः तेभ्यः कृष्णदेवरायेन राज्यसमर्पणम् षष्ठे व्यासयोगिभिः तिरुमलवेंकटेश्वरसन्निधियात्रा तत्र द्वादशवत्सराणि श्रीवेंकटेश्वरपूजा च सप्तमे च श्रीवेंकटेश्वरपूजाधिकारस्य तत्रत्यार्चकवशीयकुमाराय पुनर्वितरणं इति श्रीव्यासयोगिनां चरित्रविशेषाः वाच्यनाटकशैल्या सुमधुरं क्रोडीकृताः. दर्शकश्रोतृजनमनोरंजनाय ज्ञानवर्धनाय च ।

प. १९१ श्लोक ३७ य. सृजत्यवति इति पाठः. अनन्तचिद्घन—अनन्तज्ञानपरिपूर्ण । ज्ञानानन्दादिस्वरूपमित्याशयः । नु स्तुतौ अदादिगण परस्मैपदी । स्तौमि ।

श्लोक ३८ अहार्षीत्—हृ हरणे भ्वादिगणोभयपदीधातोः । लुङ्रूपम् । दैत्यरिपुः रिपुः इति विग्रहः न साधुः । अनेन परमात्मनि रिपुत्वमित्रत्वाख्यविषमतादोषः आरोपितः स्यात् । "ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ" इति ब्रह्मसूत्रेण परमात्मनः वैषम्यनैर्घृण्यादिदोषाणां निराकृतत्वात् । "पुण्येन पुण्यं लोकं नयति पापेन पापं"मिति सुखदुःखादिफलदाने जीवकृतकर्मसापेक्षत्वं सिद्धान्तितम् । अतः दैत्याः रिपवः स्वकर्मफलरूपतया परमात्मद्वेषाख्यपापकर्तारः यस्य सः दैत्यरिपुः हरिः । अरक्षीत् रक्ष् धातोर्लुङ् । अस्मान्निति चराचरात्मकप्रपञ्चमित्यभिप्रायः । तं हरिं नुमः ।

श्लोक ३९ शङ्कुकर्णः एव प्रह्लादः अभूत् ततः व्यासतीर्थरूपेण चावतीर्णः इति प्रथितमेव ।

श्लोक ४० व्यासयोगिनां चरितं रत्नाकरतीर्थानां काव्यं सोमनाथकविविरचितं श्रीव्यासयोगिचरिताख्यचम्पूग्रन्थं च आश्रित्य निबद्धुं शक्यते । श्रीव्यासयोगिचरितग्रन्थानुसारेण इयं कथा ज्ञायते । बन्नूरुग्रामे बल्लणसुमतिः सभार्यः आसीत् । अपत्याभावात् दम्पती तीव्रदुःखपीडितौ तथापि परमात्मैकरतचित्तौ आस्ताम् । एकदा बल्लणसुमतेः भार्या स्वप्ने श्रीवेदव्यासः आगत्य श्रीब्रह्मण्यतीर्थाख्ययतेः सेवां कृत्वा जगद्विख्यातपुत्रं प्राप्नुहीति इत्यादिशत् दृष्ट्वा सुसंतुष्टा

स्वप्नादुत्थिता भर्त्रे न्यवेदयत् । उभावपि श्रीवेदव्यासाज्ञा सगौरवमादृत्य तथा आचरतौ श्रीब्रह्मण्यतीर्थानामनुग्रहविशेषेण काले व्यासराययतिभाविनं पुत्रं प्रापतुः । इति । श्रीरत्नाकरतीर्थानां काव्यरीत्या अवतारपूर्वकथाप्रसङ्गः ईषद्भिन्न ज्ञायते । रामाचार्य स्वभार्यया सीताबाय्याख्यया सहित यात्रार्थी संचरन् कावेरीनद्यास्तटे बन्नूरुग्राम समागतः । तावत्कालेन बह्वायासपीडित स विप्र भूमौ पपात मृतसात्भूतः । अतिविषण्णा सीतावाई निकटे एव स्थित श्री ब्रह्मण्यतीर्थाश्रमं धावन्ती गत्वा श्रीब्रह्मण्यतीर्थाय स्वदुरन्तं निवेदितवती किंकर्तव्यताविमूढा । भविष्यज्ञानप्रवीणाः ब्रह्मण्यतीर्थाः सीतावाई सौमंगल्याशीर्भिरनुगृह्य स्वयं बन्नूरुग्राममागत्य मन्त्रपूतजलैः सेचन कृत्वा रामाचार्य पुनरुदजीवयन् । ततश्च स्वामिन दम्पत्यो पुत्रप्राप्तिवर च प्रदाय भाविनं पुत्र आत्मने समर्पयतादिति आदिश्य च स्वाश्रम प्रतिनिवृत्ता । यथानिर्दिष्टं काले व्यासयोगिना जन्म अभूत् सुवर्णकरकान्तर्भागे भूस्पर्श विना । इति । उभयचारित्रिकविषयाणा समागम अत्र श्लोके उपनिबद्धः दृश्यते । वल्लणसुमतिः इति नामधेय सोमनाथग्रथाद् गृहीतं भाति ।

उज्जीवन् पुनर्जीवं प्राप्नुवन् धृतः पोषित ।

तस्मात् वल्लणात् । वल्लणमातृत । वल्लणात् माति गर्भः अस्यामिति वल्लणमाता । पञ्चम्यर्थे तसिल् । माङ् माने । वल्लणात् प्राप्तगर्भा तस्य पत्नी इत्यर्थे वल्लणमातृपदप्रयोगः । ब्रह्मण्ययतेः वरात् वरबलेन वल्लणात् प्राप्तगर्भाया वल्लणपत्न्या भूस्पर्श विना जज्ञे इति भावः ।

श्लोक ४१ व्यासयति बाल्ये एव मुलबागिलस्थ श्रीपादराजाश्रम प्राप्त श्रीब्रह्मण्यतीर्थाना आज्ञया । श्रीपादराजमठे सम्पुटद्वयमासीत् । एकस्मिन् रङ्गविट्ठलविग्रह चकास्ति स्म । द्वितीयसम्पुटस्योद्घाटने असमर्था तथैव पिहितसम्पुटस्यैव पूजा कुर्वंति स्म श्रीपादाराजा । एकदा श्रीपादराजा बालयोगिनं व्यासयतिं पूजाकार्ये नियोज्य स्वय तैलाभ्यंगाय गता । यावत् व्यासयतिः सम्पुटद्वयमपि लीलयोद्घाट्य पूजामारेभे तावदेव द्वितीयसम्पुटात् वेणुगोपालकृष्ण साक्षान्निर्गत्य महोत्सवभङ्ग्या नर्तितुमारेभे । भक्तिभाव परवशा बालयतयः तत्रैवस्थिता शालग्रावशिला धृत्वा तालकुट्टनं कुर्वाणा हरिध्यानैकलक्ष्या अभूवन् । इमं विलक्षणोत्सवोदन्त जानंत एव श्रीपादराजा धावत समागताः । नृत्यत कृष्णं निमीलितनेत्र तालकुट्टने रतं बालयतिं च क्षणमात्रं दृष्ट्वा प्रमोदाश्रुभरितनेत्रा आत्मान धन्यममन्यत । तदानीमेव कृष्ण नर्तनभङ्ग्यामेव विग्र-

हता गत.। अधुनाऽपि नर्तनगोपालकृष्णविग्रहः व्यासरायमठे सुशोभते इति मनोज्ञचारित्रिककथा अत्रानुसधेया। बालयति यत्याश्रमस्वीकारसमये सप्तहायनः आसीदिति रत्नाकरतीर्थाना ग्रथाज्ज्ञायते।

अनीनृतत—नृती गात्रविक्षेपे । दिवादिगणे परस्मैपद धातो.। णिजन्ते लुङ्।

प. १९२ काचन आख्यायिका कथा।

रसभावेन मेदुराया स्निग्धाया। "सान्द्र स्निग्धस्तु मेदुर" इत्यमर.। भिमिदा स्नेहने भ्वादिगणधातो "भञ्जभास...." इति घुरच्।

शैलूषै नटवर्गै। "शैलालिनस्तु शैलूषा जायाजीवा कृशाश्विन। भरता इत्यपि नटा" इत्यमर।

प १९२. श्लोक ४२ वरयोगिराजगुरुणा—व्यासराजयतिगुरुवरेण्येन।

इय विद्यापुरी विद्यानगरी विजयनगरराजधानी।

षट्शास्त्राध्ययने नृपं ईड्ये स्तुत्ये विभवे सकलविधैश्वर्यविषये च भूतले भूलोके शीर्षायिता। देहे शीर्षवत् सर्वोच्चस्थाने स्थापि[illegible]। व्यासयोगिना अनुग्रहप्रभाव श्रीकृष्णदेवरायस्य व्यासयोगिषु महत् गौरव च अनेन सूच्येते।

श्लोक ४४. तद्वच सुधया तस्य अमृतसमानवाक्येन आश्वस्त. धृतधैर्य।

प १९३ गृहीणा गृहस्थाश्रमिणा जनाना इति सामान्यार्थ। परिवृढ प्रभु। तस्य उचित प्रौढवेष। "अधिभूर्नायको नेता प्रभु परिवृढोऽधिप" इत्यमर। परि वर्हति वृहति वा। वृह वृहि वृद्धौ भ्वादिगणधातु.।

जुषाण —जुष् प्रीतिसेवनयो। तुदादिगण आत्मनेपदी। दधान इप्यर्थ।

चामीकररसे सुवर्णरसे निचितै खचितै फलकै घट्टिता चतुर्दिक्षु स्थिता. स्तम्भा। तेषा निचयैः समूहे। "चामीकर जातरूपं महारजतकाञ्चने" इत्यमर। चमीकरे आकरे भव। "तत्र भव—" इत्यण्।

प. १९३ समतात् स्तम्भेषु व्यासतीर्था गुरूणां विग्रहा खचिता आसन्निति भाव। वासवीसूनु वेदव्यासम्। सिहविष्टरे सिहासने। "विष्टर कुशमुष्टौ स्यादासने च महीरुहे" इति मेदिनी।

अक्षिपूत अक्ष्णा पूत पवित्र यथा स्यात्तथा। निषेव्य भक्तियुतनेत्राभ्या विनम्र गुरुदर्शन अपि गुरुसेवा एवेत्यर्थ निकटे समीपे विशङ्कटे विशाले भूतले "विशंकट पृथु वृहत् विशाल पृथुलं महत्। वड्रोरुविपुलम्" इत्यमर। विसृतार्थवृत्तेविशब्दात् "वे शालच् शङ्कटचौ।"

प. १९४ नारायणद्विपः तदनुबधिन नारायणद्विषा अनुकूले वर्तमाना,

तदनुबंधिन.। तेषा विग्रह एव। असंख्यै. अधर्मसंख्यै: अधर्मयुद्धै.।

शक्तित्रयसपन्न: प्रभुशक्तिमन्त्रशक्तिउत्साहशक्तिरूपं राजशक्तित्रयम्। राज्य नाम शक्तित्रयायत्तसिति कथ्यते।

प. १६५. सोमनाथकविविरचिते श्रीव्यासयोगिचरिते एवमुपश्लोकितम्।

"अन्येद्युरेव नृपतिप्रहित. पुरोधास्साकं प्रधानपुरुषै. सचिवैरुपेत्य तं व्यासयोगिनममु तपसां निधान व्यज्ञा:यद्विनयभावविनम्रमौलि।

स्वामिन् भवतं स्वयमद्यरत्नैराकाक्षते भूरमणोऽभिषेक्तुम्।
कूटाग्रभागं कुशभूधरस्य प्रसूनजातैरिव पारिजात।" इति

श्लोक ४७ शिखीना मयूराणां कुलम्। गवां तति. समूह क्षीरिणी क्षीरप्रदा भवतु। व्यासे गुरौ शासति इत्यनेन श्रीकृष्णदेवरायेन श्रीव्यासयोगीश्वरे सर्वराज्यसमर्पण कृत इति सूच्यते।

द्वितीयप्रवेशे व्यासयोगिना आश्रमसनिवेश: उपवर्णित:।

प. १६६ मलीमसयन्—मलिनानि कुर्वन्। तौलववादिराज—तुलुदेशस्य वादिराजयते।

गुरुवरेण्य: मरुद्वंश मध्वाचार्य:।

स्यातजलनिर्भरी—स्यानजलस्य अल्पजलस्य नदी अनायासेन पारं गन्तुं प्रभवति तथा इति भाव.।

प. १६७. पद्यसुलादिप्रभेदानां चर्चा अष्टमोल्लासटिप्पण्यां द्रष्टव्या। ग्रामैकरात्रं एकरात्रं एकग्रामं इति नियमेन।

प. १६८. उपायचतुष्टयप्रयोगेण—सामदानदण्डभेदाख्योपायै.।

प. १६६ अवग्रह. अनुग्रहाभाव.।

दण्डनवर्ज्यं स्वातन्त्र्यमिति भाव.। शकाशूकं—शकाया. लेशं।

सोमनाथकविविरजिते व्यासयोगिचरिते उपवर्णितं यथा—

"तदनु सकलदिङ्मुखमुखरीकरणनिपुणमाधुर्येषु मगलतूर्येषु...स किल कृष्णमहीपाल. स्वयमेव करकमलेनादाय कनककुभमिम भगवत व्यासतापसं आदरान्मणिभिरभिषेक्तुमारभत।

त व्यासभिक्षुं सकलैस्सरत्नैर्भूपोभिषिंचन्पुरतो बुधाना।
वाराशिपुत्रीमकुटाग्रभागमाशावशानाथ इवावभासे॥
.........

तेभिषेकमणयो महीभुजा तत्र तत्र ससृपुर्निपातिता:।

दीपिताखिलदिगंतभित्तिना धिक्कृता इव मुनीद्रतेजसा ॥"

.........

अहो वैभव व्यासयोगिना रत्नाभिषेकमहोत्सवस्य ।

प १९५ श्लोक ४५ यस्य व्यासयोगिन' विद्यासम्पदा वादिन. नष्टहृदया. व्रीडया लज्जया अवलीढ । व्याप्तानि आननानि येषा ते । तथाभूता जिह्वया तृण भक्षयत. वादे शिखण्डखण्डनिचयं त्यजन्त इत्यनेन वादिना सर्वांगीणपराजय' सूच्यते । कादिशीकरव का वा दिशा इति दिङ्मूढत्वध्वनि आतिष्टत । अकुर्वन् । स व्यासमुनि विजयते इत्यन्वय ।

श्लोक ४६ हार्दं हृदयात् परमप्रीत्या नि सृतं । यस्य व्यासयोगीश्वरस्य अनर्घ्यवाक्यनिचयं आमौल्यं उपदेशात्मकवाक्यसमूहे । शास्त्रे नीतिविदा विधौ विधाने परिणतिं प्रावीण्य अह कृष्णदेवराय प्रापित । येन अत एव अस्मद्भुवि अस्मद्राज्ये चार्वाकानुयायिन रिपव नो सन्ति न हि सन्ति । प्रत्युत सर्वे भागवतधर्मनिष्ठा अन्योन्यसग्राहका अन्योन्य कुशल साधयत सति इति व्यासराजमहिमा श्लाघ्यते ।

प २००. दर ईषत् विमीलितनेत्रा । रदनच्छदमपावृत्य—ओष्ठमपसार्य । कथ मुखेन कथयाम इति चिंता । आजनेयाशानां मध्वाचार्याणां बलेन उपोद्बलिता अधिकतया बलवत्कृता ।

प २०१. श्लोक ४८ दु खेन धर्तु शक्या. दुर्धरा वृत्तिचेष्टा येषा ते । प्राणा कथ न यान्ति इति दु खोद्वेगसूचनम् । ग्रहाणा कुकथा कुत्सिता कथा कुहूयोगरूप- परिणाम जिह्वाग्र मुखेन कथयत मम । भविष्य दैव अनुसूचयता ज्योति शास्त्रविदा वरिष्ठा श्रेष्ठा गणका' ज्योतिर्विद दुर्विदग्धमतय. भूत्वा कथ विनष्टा न भवेम । राज्ञ कुहूयोगनिवेदनकार्यापेक्षया अस्माक नाश एव गरीयानित्याशय ।

श्लोक ४९ अलघ्या अतिक्रान्तुमशक्या वृत्ति यस्य तत् ।

प २०१ लोकोत्तरप्रज्ञा असामान्यमति एव खलीन लोकवशीकरणसाधन अश्वस्य कविका इव यस्य स तम् । विरक्तौ क्रीडित अधरीकृत' वैयासकि. वेदव्यास येन स । दाशरथिदूतायित हनूमानिव स्थित ।

प. २०२ अभिमन्योरपत्य पुमान् आभिमन्यव ।

प २०३ श्लोक ५० विगत दर भय एषा ते । "दरोऽस्त्रिया भये श्वभ्रे" इत्यमर. ।

श्लोक ५१ अहिमूषक मृगसिहसत्वं इति समाहारद्वन्द्वम्। गतशत्रुभावं मत्र्या स्नेहभावेन विरुध्धम्। आत्मविश्वासेन शात स्थितम्।

प. २०४. सपादयितुमिच्छा-संपिपादयिषा। व्यधिकरणशक्तिमती विरोध-शक्तिमती।

श्लोक ५३ दध्यङ्मुनि दधीचिऋषिः।

प. २०५. आविं मेषं पालयंतीति आविपाला। आविपालगोपालकजनं आ पर्यंत। सर्वेजना वालका. वृद्धाश्च समागच्छन्तु इति घोषणा। श्रीजगदम्बया श्रीलक्ष्म्या आरूढ नितम्बं कटिप्रदेश. यस्य स। तं पट्टाभिराम।

प. २०६. अर्चनानिशुनै अर्चनासूचकै। अंतेवासिनां शिष्यजनाना स्वांतं मन। निर्णयद्भिः निर्णयं कुर्वद्भि.। गानेन अपरोक्षीकृत साक्षात्कृतः नन्दनन्दनः श्रीकृष्ण. यै. तै.।

व्याप्तोपासका—अन्तर्व्याप्तत्वबहिष्ठत्वभेदेन अधिकारिभेदेन त्रिविधो-पासना। "ॐ जीव मुख्यप्राणलिगान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ" इतिब्रह्मसूत्रे।

अचिनपदैः भूपितपदै. पंथानं मार्गं अंचत भूषयतः।

श्लोक ५५ यस्य व्यासदेवस्य गुरु ब्रह्मण्यतीर्थ उद्यदीधितियश स्फूर्त्या जगद्भासक। मृतविप्रस्य वल्लणसुमतिनाम्न. व्यासराजाना पूर्वाश्रमजनकस्य जीवनसुधाया सूति. मूलकारण अभूत्। इयं कथा विस्तरश इत. पूर्वमेव निर्दि-ष्टाऽवगतव्या। स. व्यासगुरु मे (कृष्णराजाय) आयुर्बल ददाति इति अन्वय।

प. २०७ यथा वटु. वामन. मघोने इन्द्राय ददौ तथा इत्यर्थ विक्रमः एव एकं मुख्य धन एपा ते।

श्लोक ५६. तिरुपतिक्षेत्रस्य गंगाप्रवाहादपि पावनतरत्व वर्ण्यते। तुगतरंग-सगेन मनोज्ञा पापौघविध्वसिनी स्वयं पुण्याम्बुवाहा गंगा अपि सूपररूक्षदेशस्य निकटे याता इव भाति। लक्ष्मीपतेर्निवासस्थानं महीमण्डनं भुव भूषणं सत् अहो लीढ वैकुण्ठात् अत्र भुवि एव प्राप्तमित्यर्थः। लक्ष्मीपतिनिवासस्थानस्य अमोघसौंदर्यस्य वैभवस्य च आस्वादनं अत्रैव भुवि संपाद्यते इत्यर्थ। हरि. उदधे. क्षीरसागरात् अत्र भूत्यै भूलोकसम्पदभिवृद्ध्यै यात. स्वय आगतः तिष्ठति। अहो आश्चर्यम्।

रत्नानि नवचतुर्दशेत्यादिभेदेन परिगण्यते। "मुक्तामाणिक्यवैडूर्यगोमेदान् वज्रविद्रुमौ। पद्मराग मरकत नीलं चेति यथाक्रमम्" इति नवरत्नानि।

प. २०९. निस्व निर्धन। सहस्रणी प्रभूतसपदभिवृद्धिमान्।

प. २०९. कार्षापणकोश रूप्यकाणा निधि । "कार्षापण. कार्षिक स्यात्" इत्यमर । अनुपक्षयं इत्यव्यय । विना न्यूनता विलोप वा इत्यर्थ· । उपवर्षयन् जलधारेव प्रभूतीकुर्वन् । उपजोप मुहुर्मु हु । नवनिधय —"महापद्मश्च पद्मश्च शंखो मकर कच्छपौ । मुकुन्द कुन्दनीलाश्च खर्वश्च निधयो नव" । नवनिधि-समुच्चयमेव समरे जितसर्वस्वमित्याशय ।

प २१० ना—पुरुप न स्पृष्टु प्रभवति इत्यन्वय· । उपधाचतुष्टयशुद्धि-शून्य —स्वामिनिष्ठा-अनासक्ति·-दम —मनोधैर्य— इति उपधाचतुष्टयशुद्धय । तै रहित पुरुप ।

वैयासकि शुक इव औत्तानपादि· ध्रुव इव । ऊर्ध्वरेतसा—योगिना ।

काष्ठाविरक्ति· प्रकृष्टविरक्ति सद्गुणगणविभूषितविरक्तिः तया विभूषित चेत एपा ते । तेपा । तपोभूमिरिव ।

प २११ वेदण्ड —गज. ।

श्लोक ५८ मम राज्यमूर्ति राज्ये भव ।

त्र्यन्तेपु वेदान्तेपु भास्करै प्रकाशमानै वच प्रसरै । अमल श्रुतिसारतत्व संसाधयन्त वैष्णवगुरु हरि सिंहवत् गम्भीर पुरुषश्रेष्ठ व्यासमुनि वन्दे । करि-वर हरि वन्दे इति विरोधाभासालकार· ।

प. २१२ श्लोक ६० श्लक्ष्ण पूजकपूज्यभाव ध्रुवं लसति शोभते ।

श्लोक ६१ प्रपत्त्या विहितकर्मकृत. कल्याणकृत् । सच्छास्त्रोक्तसत्क—र्मानुष्ठानवता तत्तत्कर्मानुसार शुभफलप्रदाता । चिंतामणि. चिंतिताभीष्टप्रद अमोघरत्नम् ॥

व्यासार्यस्य स्वस्यैव हृदयाख्यकमलस्य कोरकाय अविकसितपुष्पाय तिग्म-भानु प्रकृष्टरश्मिमान् सूर्य इव स्थित. । देव वेंकटेश मम हृदयारविन्दं स्व-प्रसादेन विकसयति इत्याशय ।

श्लोक ६२ कारकाणि कर्तृकर्मकरणसम्प्रदानापादानाधिकरणभेदेन पट्-सख्याकानि विद्यन्ते । वाक्यान्वयार्थसिद्ध्यर्थं कारकाना आवश्यकता विद्यते वाक्येपु । "वाक्य स्याद्योग्यताकाङ्क्षासत्तियुक्त पदोच्चय " इति विश्वनाथ-कविराज साहित्यदर्पणे । येन पदेन विना यत्पदस्यान्वयाननुभावकत्व तेन पदेन सह तस्याकाक्षेत्यर्थ । क्रियापद विना कारकपद नान्वयबोध जनयतीति तेन तस्याकाक्षा । कारकाणा क्रियापदेन सम्बध तथा च तेपा अन्वयार्थबोधकत्व-शक्ति. शब्दानां वाच्यवाचकभावसामर्थ्य अशेपनियामकस्य परमात्मन एव

नियत्या प्राप्यते न स्वातन्त्र्येण। षट्कारकनियमनोपपादनेन उपलक्षणतया सकलशब्दप्रवृत्तिनिमित्तत्व नित्यानित्यवस्तुजातस्य जीवजडात्मकसकलप्रपञ्चस्य नियन्तृत्वंसूच्यते।

प. २१४. श्लोक ७०. वल्यध्वरे वलिन वलिचक्रवर्तिन अध्वरे दानयज्ञे। आविरासीत्—आविर्बभूव। सक्रंदने इंद्रार्थे तादर्थे सप्तमी।

श्लोक ७२ शिर कन्दुकै शिरास्येव कन्दुका तै। यथा नृसिह. पुरुषेषु श्रेष्ठ राम मार्गणै शत्रूच्छित्तिकर. रराज तथा इति भाव।

श्लोक ७३. श्लोकत्रये एव समग्ररामायणकथा क्रोडीकृता। मुनिवाक्यतः विश्वामित्रऋषे प्रेरणया इत्यर्थ।

श्लोक ७४ राम पैत्री वाचमवेक्ष्य पितु वरप्रदानविषयमनुलक्ष्य वल्कलधर भूत्वा सुराज्यं हित्वा दयितानुजानुगत. सन् कातार ययौ इति एत विचित्र उदन्त श्रुत्वा उरुव्यथया आकुलहृदया जना भरतशत्रुघ्नाभ्या सहिता मंत. राम सत्पथात् पितृवाक्य रिपालनरूपमार्गात् चालयितु न अशक्नुवन्। धीमता हृदय जातु न दोलायते। इति अन्वयभावार्थ।

श्लोक ५५ प्रतीप विरोध।

प. २१५. व्याहृतिसारभूत. ॐकारपदवाच्यः।

प. २१३ श्लोक ६५ लयवारिणि प्रलयजले विगीर्ण निगूहित धाम वासस्थानं यस्य स.। प्रलयकाले तज्जले अवतीर्णाय इति भाव।

श्लोक ६७ वरा काश्यपी पृथ्वीं। ता हरति इति वरकाश्यपीहृत्। स चासौ दैत्यश्च। हिरण्याक्ष। "धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षिति।" इत्यमर। हिरण्याक्ष भूतिं वेदततिं च हृत्वा समुद्रं न्यमज्जत्। विष्णु वराहरूपेणावतीर्ण हिरण्याक्षं हत्वा भूमिं वेदाश्च ररक्षेति कथाऽत्रानुसधेया।

श्लोक ६८ हिरण्यकश्यपात्मना हिरण्यकशिपुरूपेण। य आत्मन हिरण्यकशिपो। तनय विष्णुभक्त प्रह्लाद आतुतोद स नृहरिणा व्यापादित इत्यन्वय।

श्लोक ६९ विधे चतुर्मुखब्रह्मण वाक्य वरप्रदानरूप वाक्यम्। सत्यं विधाय आविरभूत्। नृसिहरूपेण आविर्भूय नखाग्रै. हिरण्यकशिपु अहनदित्यनेन विधिवाक्य प्रह्लादस्य वचश्च सत्यीभूते इति भाव।

प २१६-२१७ वैशाखशुद्धपञ्चम्या विजयदशम्या दिने इतिशुभमुहूर्तसूचनाय निर्देश. कृत.।

प. २१८. श्लोक ८२. बाल्ये नर्तननाट्यनीतिनिपुण. कृष्ण साक्षात्कृत'। सम्पुटात् बहिरागत्य कृष्णः नर्तनमारभत इति कथाऽत्रानुसन्धेया। अग्रगुरुभ्य. श्रीमदक्षोभ्यतीर्थेभ्य श्रीपादराजगुरुभ्यश्च आप्य। मम आर्तरव निशम्य दयित वत्सं मा त्रायस्व इति प्रार्थना।

प. २१९. पूजायाः स्थगन विरामः विलोपन तेन संभाव्या। विनष्टि. निवारिता।

प. २२०. पार्षदा.—सभिकाः।

इति चम्पूभावबोधिन्यां दशम उल्लासः।

# एकादश उल्लासः

प. २२१. श्लोक ३ वायोर्वर्त्मनि । वाय्ववतारस्य श्रीमदाचार्यस्य सिद्धातमार्गे यस्य परमात्मन. भर्म भरण पोषण शीघ्रेण सम्प्राप्य । श्रीमदाचार्यमतमनुसृत्य श्रीपरमात्मज्ञानस्य प्रसारण शीघ्र सम्पाद्य इत्यर्थ । वैदिकम ।भिवर्धन कुर्वाणा इत्यभिप्राय । वरयोगिवर्या. व्यासतीर्था । गुरुराजा श्रीराघवेंद्रतीर्था । मुक्तिसम्पादनपथे मुक्तिसम्पादनाय मुख्यकारणीभूतस्य भगवज्ज्ञानस्य सम्पादनाय मुख्योपायत्वेन आदृतान् स्वीकृतान् । सद्भिरिति भाव. ।

श्लोक ४. तत्वप्रकाशिकाया भावदीपाख्यटिप्पणी ब्रह्मसूत्राणा अर्थस्य अल्पवाक्यैरेव प्रकाशयन् तत्रदीपिकाख्य स्वतत्रग्रथश्च लक्षीकृतेऽत्र । श्रीराघवेंद्रतीर्थै विरचिता मन्त्रार्थमञ्जरी, पुरुषसूक्तादीना टिप्पण्य उपनिषत्खण्डार्था, ऋग्वेदयजुर्वेदसामवेदानां व्याख्या, इत्यादय ग्रन्था अत्र निर्दिष्टाः ।

प. २२२ श्लोक ६. यथा खड्ग नानारण्येषु स्थितान् कुवृक्षान् निकृत्य सच्चंदनाख्यतरु । क्ष्माधर भूधर वृक्ष इत्यर्थः । भूधर इति पर्वतार्थे सामान्यतः प्रयोगे सत्यपि वृक्षोऽपि भूप्रदेशं धरतीति भूधरवाच्यत्वं वृक्षस्यापि युज्यते । वैज्ञानिकमतमनुसृत्य वृक्षा भुव. मृद्विलोपन प्रतिरुद्धय मृच्चय क्रोडीकृत्य दृढीकुर्वंतीति विश्रुतमेव । चदनतरुं भगवदर्चनकर्मणि नियोज्य श्लाघ्यता प्राप्नोति खड्गोऽपि । दुष्टनिग्रहशिष्टपोषणाख्यकर्मण. प्रशसा सूच्यते अनयोपमया । श्रीश रक्षोगणसहारेण सता संरक्षणेन च विद्वद्भि भृशं स्तूयते । तथैव अयं श्रीराघवेंद्रो गुरु. दुर्मतनिरासपूर्वक सन्मत स्थापयन् नूनं श्लाघ्य एवेति तात्पर्यार्थ ।

प. २२३ आयु वित्तेशस्य भगवत ध्यानेन विना वित्तं चित्त च व्यर्थ आनयति । मोक्षकारणीभूत भगवद्ध्यान न क्रियते चेत् आयु सपादितधन चित्त च निष्फलान्येव इति तात्पर्यार्थ. । स्नुहिरिति तरुविशेष यस्य शाखाविच्छेदनेन क्षीरमिव धवल स्निग्धरस प्रसरति । पय सदृश. रस. सपर्कमात्रेण त्वग्ज्वलनादिपीडाकारक इति विदितम् । भगवज्ज्ञानरहितं जीवनम् आपाततः सुखसमृद्धिपरिपूर्णत्वेन द्योतमानमपि क्षीरसदृशस्नुहिरसमिव निष्प्रयोजकमेवेति भाव. ।

स्नुहिक्षीरोपमा कवीना अतिनूतनोपमा इत्येतत् गमनार्हम् ।

"तेजसावर्तनी मूपा भस्त्रा चर्मप्रसेविका" इत्यमर । भस्यते अनया इति। भस्र दीप्तौ । "हुयामाश्रुभसिभ्यस्त्रन्" इति त्रन् । "तितुत्र......" इति नेट् । चर्मप्रसेविका यथा पुरुषप्रचालनमात्रेण सजीवा श्वासोच्छ्वास कुर्वतीव भाति चालनाभा वे जडवस्तुत्वमाप्नोति तथैव अय देहोऽपि हरिगुरुकृपावलेनैव उपादेय भवितुमर्हति नो चेत् अनुपादेय इत्यर्थ ।

प्राज्ञ मन्यते (आत्मान) इति प्राज्ञमन्या शास्त्रविद इत्यर्थ । तेभ्योऽपि विज्ञानस्य विशेषावगमस्य दात्री श्रीगुर्वाज्ञा । उपरि कथित गुर्वाज्ञासदेश: पडितेभ्योऽपि विशेषज्ञानदीपक इत्यर्थ ।

पच ज्ञानेंद्रियाणि वा बुद्धीद्रियाणि । "श्रोत्र त्वक्चक्षुषी जिह्वा नासिका चैव पचमी ।" पच कर्मेद्रियाणि "पायूपस्थ हस्तपाद वाक चैव दशमी स्थिता ।" (मनुस्मृति ) । "अथमौनमभाषणम्" इत्यमर । मौनमिति भाषण विनेति तूष्णीमिति हस्तपादादिसचालनशब्दमपि विहायेत्यर्थ । मौनेन तूष्णीमिति द्विरुक्त्या शब्दाभावस्य दार्ढ्यापेक्षया भक्तजनाना उपन्यासश्रवणकौतूहल निदर्शयति। "तुष तुष्टौ" इति तुष् धातो "बाहुकान्नीम्" "उपधाया उत् ।" तूष्णीं ।

मस्तके न्यस्ता शस्ता शुभगौरवसूचकमुद्रानिर्मित्या स्वयमेव शुभा हस्ता. एषा ते । अजलिवधेन मस्तके निहितकरा भक्ता इत्यर्थ । आलोक जयजय-शब्द "आलोकस्तु पुमान् द्योते दर्शने वन्दिभाषणे ।" इति मेदिनी । निशिता शास्त्राख्या असिधारा । तस्या वलि. आहुति क्रियते । शास्त्रसमतयुक्तिभि. निरस्यत इत्यर्थ. ।

प. २३४ वायु प्रतीकालवनान् ब्रह्माण नयति अप्रतीकालवनान् परमा-त्मान नयति इति नियम ।

प. २३५ श्लक्ष्णमासलशिलाकलाकृतय: सजीवा इव आभाति । तथैव रथोपरि स्थिता दारुमयप्रतिमा अपि जीवंत इव भाति । "सुत्रामा गोत्रभि-द्वज्री वासवो वृत्रहा वृषा" इत्यमर सुत्रामसुत तेन सहित समीरण वायु । "यत्रैकतो भवेद् ग्रामो नगर चैकत. स्मृतम् । मिश्र तु खर्वट नाम नदी-गिरिसमाश्रयम्" इति मेदिनी । श्रीमन्नालयक्षेत्रस्य परिसरत नदीगिरि-मिश्रिता. प्रदेशा एव विद्यते इति साधुरेव खर्वटपदप्रयोग । खर्व-गर्वे खर्वेति । "शक्यादिभ्योऽटन्" इत्यटन् प्रत्यय क्षेत्रस्था यात्रिकभक्ता स्ववधुबाधवमित्रा-दिजनसम्मेलनेन प्रमुदितमानसा कदाकदापि मिथ. सभाषणादिना समय

अपयतीति अनुभवसिद्ध । उत्सवारंभसूचक वाद्यघोपं श्रुत्वा एते ससंभ्रमाः भवतीति हास्यरसेन वर्णयति चपूग्रन्थनिर्मातार ।अस्मिन् ग्रथे सकला. महाकाव्यरसा प्राप्यते इति ध्येयम् ।

"अत्रातरे" इत्यादिना प्रात कालादारभ्यैव प्रचलितः यात्रिकभक्तानां समागतिक्रम वर्ण्यते । तत्रत्यप्रदेशेपु प्रातः नववादनसमयत एव सूर्यप्रताप. तीक्ष्ण वर्तते इति अनुभवविदितम् । आगतु आरेभिरे इत्यत्रैव वाहयतः आरोहत. इत्यादीना गत्रंताना अन्वय । मार्गे यात्रिकाना प्रचलनक्रम भित्तिचित्रायित कविवर्यै ।

प. २३६ "पिष्टात. पटवासक." इत्यमर । पटो वास्यतेऽनेन इति पटवास । अथवा पट वासयतीति कर्मण्यण् सुगधितसूक्ष्मपिष्टविशेप बुक्किट्टु नाम्ना विदित. । आगामिमहोत्सवस्य सूचकः उत्प्रेक्षालकार । महोत्सवे सर्वत्र सुगधद्रव्यप्रसरण क्रियते किल । मार्गेऽपि सर्वासु दिक्षु सुगधिद्रव्यप्रसरणमभूदिव धूलीव्याजेन ।

पर्जन्यवन—पर्जन्यस्य जल । "आपः स्त्री भूम्नि वार्वारि सलिल कमल जल । पय कीललाममृत जीवन भुवन वनम्" इत्यमर. । वन्यते सभज्यते सेव्यते वा । वन-सभक्तौ इत्यतः वनु-याचने इत्यतो वा कर्मणि घञ् । सज्ञापूर्वकत्वाद्वृद्ध्यभाव ।

महीतल गतु य पथा तस्य सबाध विघ्न. धूलीपटलनिर्मितः । तस्य शिथिलीकरण पर्जन्यनिमित्तेन । तेन अधुना महीतलगमनमार्ग. निरतरायोऽभूदिति समाहितमनस्का देवता । तेपा महोत्सवदर्शनकौतूहल सूच्यते । "स्फूर्जथुर्वज्रनिर्घोपे मेघज्योतिरिरमद." इत्यमर अन्योन्यस्य सघट्टनेन मेघाग्नि मृत्य वृक्षादौ यत् ज्योतिः पतति स इरमदः । इरया जलेन माद्यति दीप्यते इति ।अविधनत्वात् । इरमदेन माद्यते प्रकाश्यते इति इरमदमदः । मेघ इत्यत्र विशेषणम् । इरमद एव यस्य मद गर्वभूतः इति वा । मेघः इरमदेन गर्वी वर्तते इरमदद्वारा स्वगर्व एव प्रकटयतीति वाऽऽशय. । सकलदेवतागणस्य पुरोवर्तीप्रह्लादः इति स्वयूथ्यपदेन निर्देश ।

प. २३७ "आम्रेडितं द्विस्त्रिरुक्तम्" इत्यमर. । म्रेड-उन्मादे । आम्रेड्यते आधिक्येनोच्यते । भक्त्युन्मादेन पुन पुनः महिमान निरूपयत इत्यर्थ. । अदभ्रा अनल्पा पूर्णा घृणि. रश्मिः यस्य स । अदभ्रघृणि. सूर्यः । तस्य रश्मिभि. किरणै. विघूर्णितम् सर्वत्र व्याप्तम् । मेघस्य अर्ण. जलं ।

"वह्नि. शुष्मा कृष्णवर्त्मा शोचिष्केश उपर्बुध." शोचीपि ज्वालाः केशा इव

अस्य। "नित्यं समासेऽनुत्तरपदस्थस्ये"ति पत्वम्। शोचिष्केशस्य रोचि कांति। दिव्यज्योति स्वरूपेण देवास्तत्र समागता इत्यर्थ। "समततस्तु परित. सर्वतो विष्वगित्यपि" इत्यमर.। विषु अञ्चति। क्विन्।

प. २३७ श्लोक ७-८ चतुर्मुखवायुशेषगरुडाद्या. देवता पद्मनाभजयती र्थादय गुरवश्चपा विशेषरूपेण रथोत्सव द्रष्टु मन्निहिता अभवन्नित्याशयः। स्वागतार्थं अर्घ्यपाद्योयनादि षोडशोपचारा आवश्यका खलु। श्रीसुयमीद्रा स्वागत व्याजह्रु यथा "अहो पश्यतु" इति स्फुरद्वागेव गगासदृशत्वेन अर्घ्यम्। स्तुतिमुक्तामणिरेव पाद्योपायन मस्तकावनमनमेव नारिकेलफल समर्पण इत्यादिप्रकारैरुपचारै स्वागतमिति भाव। विष्णु वामननारसि- हवेदव्यासकृष्णादि रूपै सन्निहितोऽपि पुन विशेषाशे न समागत इत्यर्थ गुरुवरप्रवर इति त्वदीय इति श्रीराघवेंद्रगुरून् प्रति सबोधनम्।

प. २३८ श्लोक ११-१२. आचित सपादित कृतमित्यर्थ। श्रीजानि लक्ष्मीपति।

प. २३८ वालखिल्या· सूर्यरथात्पुरतः गच्छत अगुष्ठमात्रपरिमाणा साक्षात् सृष्टिकर्तुर्देहादुत्थिता. षष्ठिसहस्रसख्याका देवताविशेषा। "सूर- सूर्यार्यमादित्यद्वादशात्मदिवाकरा" इत्यमर। सप्तसप्तेरिति विशेषणम्। प्राघूर्णिक अभ्यागत. अतिथि·। वेदव्यासकरुणार्णव एव अभ्यागत इव एषा ते। अथवा वेदव्यासकरुणार्णवस्य अतिथीभूता। वेदव्यासकृपापात्राणि इत्यर्थ।

यात्रिकचेतसा चूलिकाप्राया. विशिष्टभक्तिभावप्रद्योतका इति भाव.। नाटकादिषु चूलिका कचन गूढविषय ससूचयति तथैव मत्रपठन यात्रिकाना भक्तिभावस्य ससूचक इत्याशय·।

"अंतर्जवनिका संस्थै सूचनार्थस्य चूलिका" इति साहित्यदर्पणे। श्रीमन्मध्वतंत्रसत्राणने रक्षणे तनुत्राणा देहरक्षका इव स्थिता.। अतनुत्राणा इति पाठे श्रीमध्वतन्त्रसन्त्राणनमेव अतनुत्राण अनल्पाश्रय सुदृढाश्रयः एषा ते। विद्वद्भ्य श्रीमध्वमतरक्षणमेव महानाश्रय इति भाव। परिमलदि- ग्रथपाठै श्रीमन्मध्वमतसरक्षणमभूदिति भाव। अनेनैव विद्वास आत्मानं ससारान्मोचयितु प्रभवतीति मध्वमतसरक्षण तेषा आश्रय इति निरूपणम्।

आवर्जयन्—आ+वृज् धातोर्णिच्। लड। मन. सतोषमकुर्वन्नित्यर्थ।

प २३९ साक्षीव निरर्गल इति अतिनूतनोपमा साहित्यप्रपचे एव। श्रीमन्मध्वसिद्धाते साक्षी इति स्वरूपेद्रियं सर्वदा नियतयाथार्थ्यग्राही मत्तगजवव्

प्रौढगत्या पुर क्रमति इति प्रतिपादितं शास्त्रेषु ।

सच्छास्त्रोक्तज्ञानपूर्वका दृढविरक्तिनिर्व्याजतादिगुणगणसंपन्ना भक्तिरेव श्रीपरमात्मान प्रसादायार्कपितु शक्नोति इति शास्त्रार्थ. सूचितः अत्र ।

चक्री श्रीकृष्ण.। तस्य भक्तेषु चक्रवर्तिभूता. प्रथमस्थानस्थिता प्रल्हादावतारभूता श्रीगुरुसार्वभौमा । प्रल्हादस्तु महाभागवतः इति वर्णित पुराणेषु ।

प. २४०. श्लोक १४ दोला उपरि मध्यतः पश्चाच्च प्रसरति । तथैव आदिमध्यान्तशून्य इत्युपमा । सृष्ट्यादिक स्वलीलार्थ क्रियमाणा दोला चेष्टामात्रमिति ध्वन्यते । "ॐ लोकवत्तु लीलाकैवल्य ॐ" इति ब्रह्मसूत्रोक्तिः। दोलाया श्रीकृष्णपरमात्मन सन्निधिरपि वर्तते इति सूचितम् ।

श्लोक १६ प्राणेभ्योऽपि प्रेयान् प्रियतर । दोलाया. नीचैरुच्चैर्गमनमनुलक्ष्य जीवराशे स्वस्वकर्मफलानुगुण्येन अधोगत उपरिदशा इति प्रक्रमण भवतीति तत्वविचार प्रतिपादित । लोकेऽपि प्रकृतिरूपा लक्ष्मीरेव दशाभेद जनयति इत्यपि सूचितमत्र ।

प. २४१. श्लोक १८. अद्यते भुज्यते मुक्तैरिति अद्य. मुक्तप्राप्यः इत्यर्थ. । अद्यत्वे मुक्तप्राप्यत्वविषये वेदव्यास-रामकृष्णादिविविधावताररूपाणि ध्यात्वा ।

भूषापोषमित्यव्यय । भूषया पुष्ट यथा स्यात्तथा भूषापोषम् ।

प २४२ प्रद्युम्नमतमत श्रीमन्मध्वसिद्धात. । चूर्णिका इति गद्यशैल्या विशेषप्रभाग. । मुक्तकवृत्तगधि उत्कलिकाप्राय चूर्णकप्रभेदै. चतुर्विध. गद्यसाहित्यप्रकार. इत्येके वदति । छदोमजरीकारास्तु गद्यप्रपचस्य वृत्तकोत्कलिकाप्रायवृत्तगधप्रकारेण विभागत्रय प्रकल्पते । चूणकातु एतद्विभागत्रयलक्षणान्यतरसपन्ना इति मंतव्यम् । एतेषा लक्षणानि तु अधोनिर्दिष्टानि ।

अकठोराक्षर स्वल्पसमास वृत्तक मतम् ।
तत्तु वैदर्भरीतिस्थं गद्य हृद्यतरं भवेत् ॥
भवेदुत्कलिकाप्राय समासाढ्यं दृढाक्षरम् ।
वृत्तैकदेशसम्बन्धाद् वृत्तगधि पुनस्स्मृतम् ॥

चूर्णकाया जटिलपदविश्लेषणेन अर्थस्पष्टीकरण पण्डितेषु एक स्पर्धाप्रकार आसीत् ।

प. २४३ जल्पवितण्डावादकथासु—कथालक्षणे श्रीमदाचार्यैर्निरूपितम् । यथा—

"वादोजल्पो वितण्डेति त्रिविधा विदुषा कथा ।
तत्वनिर्णयमुद्दिश्य केवल गुरुशिष्ययो. ॥

कथाऽन्येपामपि सता वादो वा समिते शुभा ।
ख्यात्याद्यर्थ स्पर्धया वा सता जल्प इतीर्यते ॥
वितण्डा तु सतामन्यैस्तत्त्वमेपु निगूहितम् ।" इति ।

जल्पवितण्डयो क्वचित् वादेऽपि प्राश्निका सति । "प्राश्निका हि वादस्थान कथाविशेपव्यवस्थापन पूर्वोत्तरवादव्यवस्थापन विवदमानयोर्गुणदोपावधारण भग्नप्रतिवोधन लौकिकनिष्पन्नकथाफलप्रतिपादन चेत्यादीनि कर्माणि" इति कथालक्षणटीकाया टीकाकृत्पादा । जल्पवितण्डयोर्भेदस्तु एवप्रकारकः । "स्वपरपक्षसाधनदूपणवान् जल्प । वितण्डा तु प्रतिवादिनः स्वपक्षसाधनेन विना परपक्षप्रतिक्षेपमात्रेण पर्यवस्यतीति" कथालक्षण टीकायाम् । वितण्डाया असत्सु ('येपु') तत्व निगूहित कर्तव्यम् । तत्र तत्वसाधनप्रकाशनयो· प्रसक्तिरेव नास्ति ।

निगूहितसहस्रवदन —प्रवक्तृत्वकलाया शेपादपि अधिक चतुर इति भाव. । निगूहित आच्छादित अधरीकृत इत्यर्थ. सहस्रवदन ऐन स ।

"दृष्ट्वा सर्व देशिक श्रीसुधीन्द्र. प्रागज्ञात कौशल शब्द भाष्ये ।
प्राचीनाख्या ता महाभाष्यपूर्वा प्रादादस्मै पश्यता पण्डितानाम् ॥"
इति श्रीरघवेंद्र विजये ।

प. २४५ "स्वो ज्ञातावात्मनि स्व त्रिष्वात्मीये स्वोऽस्त्रिया धने" इत्यमर । स्वनति स्वन्यते वा अनेन इति स्व । स्वन—शब्दे । निर्गत स्व धन यस्मात् स । धनहीन इत्यर्थ । श्रीरावघेंद्रतीर्थाना पूर्वावतारे स्थितस्य दारिद्र्यस्य वर्णन श्रीराघवेंद्रविजये सुष्ठु कृतमस्ति ।

"तैलाभ्यङ्ग वत्सरस्यैकवार नैतस्यास्ति प्राज्यमाज्य कथ स्यात् ।
अग्निष्टोमे नाधिकारी कथ स्याज्ज्योतिष्टोमे ज्यान्तसस्थाधिकारी ॥
काले काले लभ्यते नास्य भक्त लब्ध चेत्तद्भुज्यते हृत भूमौ ।
पत्राभावादेकदा नार्थितेपि क्षुद्बाधाया शान्तिमेवालभिष्ट" ॥ इति ।
श्रीमद्राघवेंद्रविजये वेंकण्णभट्टस्य उत्तर निर्दिष्ट यथा—

.........."वाला भार्या वालको नोपनीत वालश्चाह नाश्रमे मेस्ति वाञ्छा निर्वन्धश्चेन्निर्गमिष्यामि नूनम् ॥ इति ।

वेंकण्णभट्टेन श्रीमध्वविजयस्य व्याख्या निर्मिता इति परितुष्टमना श्रीमध्वमुनि स्ववेदान्तसाम्राज्ये एव त अभिषिक्तवानिति श्रीगुरुगुणस्तवने वर्णितम् । यथा—

"धीरश्रीराघवेंद्र क्रतनिजयस्रग्धरार्थप्रकाशं ।
दृष्ट्वा सतुष्ट्चेता. दशमतिरचिरादभ्यपिचत् पदे स्वे ॥" इति ।
"दैत्यारि. पुण्डरीकाक्षो गोविन्दो गरुडध्वज " इत्यमर ।

प, २४८ वेदांतसाम्राज्यभिपेकमहासदर्भमारभ्य वेंकण्णाचार्या' श्रीराघवेंद्र तीर्था इति गौरवात् लोकव्यवहारमनुसृत्य च बहुवचने प्रयोग ।

प. २४६ भाविविधि. वायु । स एव श्रीमध्वरूपेण ज्ञानकार्याय अवतीर्ण । तेन बोधित सिद्धांतम् । अहीन विभव यस्या. सा । अभिवृद्धसपद मही इत्यर्थ ।

"अञ्जन कज्जले चाक्तौ सौवीरे च रसाञ्जने ।" इति मेदिनी ।

"अज्ञानांधस्य लोकस्य ज्ञानांजनशलाकया ।
चक्षुरुन्मीलित येन तस्मै पाणिनये नमः ॥ इति शिक्षायां ।

ज्ञानांजनेनअज्ञानमलीमसनि सारण अत्र सूचितं । अन्यत्रापि इदृशप्रयोग दृष्टः ।

"ॐ अर्भकौकस्त्वा त्तद्व्यपदेशान्निचाय्यत्वादेवं व्योमवच्च ॐ" इति ब्रह्म-सूत्रे परमात्मनः अचिंत्यशक्त्या अल्पौकस्थितत्व तथा च अतस्थितत्वरूपेण तस्य उपास्यत्व उक्तमि त्येतदत्र ध्येयम् ।

प्रतिनिष्क्रिया प्रत्युपकार अतिक्रांत' अतिक्रम्य स्थित' आनृण्यभर. यस्य स. । गुरूपदेशादिना शिष्या गुरुषु ऋणभारोपपन्ना. । ऋणभारस्य अतिप्रभूतत्वात् तस्य प्रतिनिष्क्रिया इह जन्मनि जन्मांतरे वा अति दु.साध्या इति भाव. ।

प. २५३ सिर्मलगेनामाग्रहारे—चिम्मलगीति अधुनाविदितस्थले । स्वामिपादा श्रीचरणा इत्यर्थ । तेषा पदतटे पादसन्निधौ ।

प. २५६ शाटीपटी—शाटीवस्त्र । तस्य पट विच्छिद्य कृतः एकदेशभाग । तदेव अथवा तन्निर्मितं आतपत्र छत्रं ।

नितरा समतत. अरक्षदित्यर्थे अरीरक्षदिति विशिष्टरूपप्रयोग. । जरीजागर्तीवत् साधु ।

इति चम्पूभावबोधिन्यां एकादश उल्लासः ।

# द्वादश उल्लासः

श्रीगुरुसार्वभौमसप्तरात्रोत्सवे षष्ठदिनोत्सव.

प. २५७ श्लो. १ स्वामिन् इति श्रीगुरुराज राघवेद्रतीर्थं प्रति सम्बुद्धि.। विश्वा सकला गुणा ज्ञानानन्दादय यस्मिन् स विश्वगुण विष्णुः। विश्वगुण एक केवल "एके मुख्यान्यकेवला" इत्यमर। विश्वगुणैकस्य चिंतने ध्याने रत राघवेद्र। श्रुति श्रवण कर्ण हरति आकर्षति इति श्रुतिहर। त याञ्चारव प्रार्थनाया ध्वनि। श्रुतिहरमित्यनेन याञ्चारवस्य दैन्य सूच्यते। अनारतं सर्वदा। श्राव श्राव श्रुत्वा श्रुत्वा। द्विरुक्ते श्रवणस्य दार्ढ्य वीप्सा च सूच्येते। भवान् मुदा प्रत्येहि। भक्तेभ्य अभीष्टप्रदानेन धैर्योत्साहान् प्रदेहि।

प्रह्लादेन दैत्यबालकेभ्य उपदेशे प्रदीयमाने सति तत्र दैत्यबालकाना सघे स्वयमपि आसम् तथा च सर्वमपि प्रह्लादोपदेश भक्त्या आकर्ण्य पुनीतमानसः अभूवम् इति कल्पयत कविवर्या अधुना विद्यासातीर्थ्य मा विस्मर मा च ससाराद्धरेति श्रीराघवेद्रमुनि प्रार्थयन्ते। गुरो राघवेद्रप्रभो योऽह त्वद्वदनारविंदगलित। तव प्रह्लादस्य इत्यर्थ। वदनारविंदात् नि सृत हरे तत्व आहर अश्रृणवम् तादृश। दैत्यवशजमद दैत्यकुलोत्पन्नाना दैत्यबालकाना सभाया विद्यासातीर्थ्यं विद्यालये समकक्षस्नेहित सहाध्यायिन मा मा विस्मर। अधुनापि प्रसादेन अनुगृहाणेति भाव। "सतीर्थ्यास्त्वेकगुरव" इत्यमर। समाने तीर्थे वसन्तीति सतीर्थ्या। "समानतीर्थे वासी" इति यत्। "तीर्थे ये" इति समानस्य स.।

श्लोक २ प्रह्लादेन साक सहपाठी भूयासम् पूर्वस्मिन् जन्मनि कदाचनेत्यात्मिका कल्पनामेव पुन विशदयन्ति कविवर्या। वय वयस्या. बालविहारकेलिलहरीलास्य त्यक्त्वा भक्त्या त्वया सुगीता हरिकथा श्रोतु त्वा अभितः स्थिता। हरिकथा यथा—आयु स्तोक विष्णो महत् अनल गेयचरित सततगिरा कौमार एव स्थिरा शृणतु विस्मृति मा कुर्वंतु।

वय वयस्या दैत्यवशीयसहपाठिन। बालविहारा केलय. क्रीडा। "द्रवकेलिपरीहासा क्रीडा खेला च नर्म च" इत्यमर। तेषा लहर्य तरङ्गा। तरङ्गवत् स्वेच्छाक्रीडादिकमिति भाव। लास्य नर्तनम्। यद्वा लहरीवत् समुद्रतरङ्गवत् शरीराङ्गहावभावेन स्वेच्छया नृत्यम्। 'ताण्डव नटन नाट्य लास्य नृत्य च नर्तने" इत्यमर। लस श्लेषणक्रीडनयो। ण्यत्। समाहारद्वद्वसमास। बालचेष्टानृत्यादिकं सर्वमपि त्यक्त्वा त्वदाकर्षणेन विहाय। त्वया सुगीतां सुरसं कथिता हरिकथा हरे. महिमान चरित्र च भक्त्या श्रोतु त्वामभित. त्वा सम-

न्ततः। "अभितः परितः समयाहाप्रतियोगप्वपि" इति त्वा इति द्वितीया-प्रयोग । स्थिता । कीदृशी हरिकथा इति प्रश्ने यथा। आयु मनुष्यस्य आयुर्मान अल्पमेव। विस्मृतिं स्वकर्तव्यस्य विस्मरण मा कुर्वतु। कौमारे एव विष्णौ स्थिरा. दृढमानसा· भूत्वा विष्णो महत् अद्भुत अनल्पं अगाढं गेय स्तुत्यं चरित संततगिरा गृणंतु स्तुवंतु। इत्यात्मिका हरिकथामित्यन्वय ।

श्लोक ३. गुरुराजाना पादारविन्दसेवन सर्वगुणेभ्योऽपि अधिक इत्याशयः अभिव्यज्यतेऽत्र। विद्या-गुरुशुश्रूषाचातुर्य-धन । विनयसौशील्यादिगुणा.-शास्त्रासक्ति· इत्यादय. सुगुणा· न विद्यन्ते। "द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थ धनं वसु" इत्यमर·। परतु सर्वदा स्वहितस्य परहितस्य ससाधने रति विद्यते। सर्वदा सांसारिकसुखार्जनकर्मण्येव रतोऽस्मि इति भाव । तथाऽपि तव श्रीराघवेंद्रगुरोः पादाम्बुजयो मृदुरजस सेकः सेचने पादधूलि सेवने चतुर.। तत्र रतः अस्मि इति यावत् । त्वत्पादारविन्दसेवनमात्रे मम मति. । मे सेवा स्वीकुरु इति प्रार्थना।

श्लोक ४. हे सूरिवर पण्डितश्रेष्ठ गुरुराघवेंद्र । ते निर्णेजनाय अभिषेकाय गङ्गाया मङ्गलजल आहृतम्। तन्मृत्तिकया तुलसीमृत्तिकया भूषित । तुलसीमृत्तिका ललाटे धारयन्नित्यर्थः। प्रात.कालीनकृत्यादिक समाप्य अस्मदानीतगङ्गाजलेन स्वाभिषेकं स्वीकृत्य श्रीरामचन्द्रसपर्यां निवर्तयेति श्रीगुरुराजं प्रतिसुप्रभातसेवाङ्गतया प्रार्थना निवेद्यते।

प. २५८. श्लोक ५ शास्त्रपाठनिरतान् त्वत्प्रेरणया शास्त्राध्ययने सदा आसक्तान् शिष्यान् तत्संशयान् शास्त्राध्ययने समागतान् संशयान् निवारयन् इदमित्थमिति उपदिशन्। अपेक्षितप्रदानेन ज्ञानद्वारा भगवत्प्रसाद मोक्षाख्य अन्तिमफल च दापयन् उद्धर। श्रीराघवेंद्रस्वामिना टिप्पणीसाहाय्येन मूलग्रंथार्थज्ञानं। सुलभ भवति। जिज्ञासूना सर्वसंशयनिवारणस्य तत्र कृतत्वादिति विदितमेव शास्त्रेषु गतिमता सर्वेषाम्।

प. २५८. सुप्तोत्थिता । आदौ सुप्ता पश्चादुत्थिता ह्यस्तनीनं ह्यः सवृत्त।

कटिदघ्ने कटिपर्यंत गाढे। रोधसि तीरे। हस्तौ पादौ च हस्तपादमिति समाहारद्वंद्व । अर्चकेभ्य स्वीकृता प्रयाणनिमित्तप्रसादाक्षता यै. ते। अनसि शकटे। सुमनसा देवाना मननेन ध्यानेन गत एन पापं एषा ते। एतावद्दिनानि आराधनामहोत्सवे सतत देवगुरूणा ध्यानसेवादिना अपगतपापा इति भाव.। "क्लीबेऽन· शकटोऽस्त्री स्यात्" इत्यमर । पदं आरोपयन्। शकटे उपविष्टाः। दिनद्वयं सप्तरात्रोत्सवे अवशिष्ट दिनद्वय षष्ठसप्तमदिनोत्सवद्वयमिति भाव.।

श्रीसुज्ञानेन्द्रतीर्था श्रीगुरुराघवेद्रमठपीठपरम्पराया स्वामिन । श्रीमुय-मीन्द्रेभ्य. पूर्व परपराया सप्तमा श्रीराघवेद्रगुरुभ्य. उत्तर परपरायां द्वादश-स्थानमलङ्कुर्वाणा स्वामिपादा । "मुधासारार्थतत्वज्ञं सुरद्रुमसमं सतां । सुरा-विपगुरुप्रख्यं सुज्ञानेन्द्रगुरु भजे" इति तेपा चरमश्लोक. ।

प. २५६. निरुपप्लवम् निरातकम् ।

सक्रदनस्य इद्रस्य नदनाय इद्रांशभूताय अर्जुनाय।

प. २६०. स्वरूपसत्ता प्रवृत्तिसत्ता प्रमितिसत्ता इति सत्तात्रैविध्येऽपि ईश्वराधीन ।

य विश्वस्य चराचरात्मकप्रपञ्चस्य उदय सृष्टि आतनोति । तदनु तद-नतर त्राण रक्षण विधत्ते । सौख्यस्य आप्ति प्राप्ति । इतरस्य सौख्येतरस्य दु खस्य हानिश्च तयो साधन वक्ति । श्रुती व्यञ्जयन् । "च्छदासि जज्ञिरे तस्माद्यज्ञात्सर्वहुत ऋच सामानि जज्ञिरे ।" इति पुरुषसूक्ते । कल्पावसाने स्वाप निद्रा प्रापयति । त रमावल्लभ देव वन्दे । इत्यन्वय ।

प २६८ प्रामाण्यस्वतस्त्वमाक्षिसमर्थनोपन्यासे निरूपिता. विषया एव विद्यन्ते-(१) लक्षणस्वरूपकथन (२) यथार्थ प्रमाणमिति प्रमाणसामान्यलक्षण-निरूपणम् (३) प्रमाणशब्देन यथार्थज्ञानस्य तत्साधनकलापस्य च ग्रहण (४) प्रभाकरभाट्टनैयायिकादीना प्रमाणलक्षण प्रकारस्य निरास. (५) केवलप्रमाणा-नुप्रमाणयो विवरणम् (६) अभावशरकस्य प्रत्येककरणत्वनिरास प्रत्यक्षानुमा-नागमाना अनुप्रमाणत्रैविध्यसमर्थनं (७) प्रामाण्यस्य स्वतस्त्वस्य अप्रामाण्यस्य च परतस्त्वस्य समर्थन (८) साक्षिण स्वत प्रामाण्यग्रहणसमर्थनम् परत अप्रामाण्य ग्रहणसमर्थन च इति ।

प २८०. सर्वऋतूना वर्णनात्मकश्लोका उपनिबद्धा कविसम्मेलनप्रसगेन

श्लोक ६ सुवर्णवत् शोभायमानशरीरै. । कारण्डवाख्यपक्षिविशेषै. । रूपकालकार ।

श्लोक ७ रसालवृक्षाणा आम्रवृक्षाणा सल्लकीनामकवृक्षविशेषाणां च कुञ्जे । "महेरणा कुन्दुरकी सल्लकी ह्लादिनीति च" इत्यमर । सत्कृत्य लक्यते आस्वाद्यते इति सल्लकी । गुञ्जद्भि भ्रमरै चुम्बिते आविष्टे इत्यर्थ ।

श्लोक ८ तथा श्लोक ९ गोवृदाय गोसमूहस्य हितार्थ मंदरधर गोवर्धन-पर्वतधर ।

मल्ली मल्लिकापुष्पं रसालवृक्ष तथा च शुककोकमयूरहसादिपक्षिणः । पुष्पै फलै कलरवै मृदङ्गगाननृत्यै साक त मुरहरं कृष्ण तरसा शीघ्रेण समेत्य

ओपधपतेः चंद्रस्य कुलज चद्रकुलोद्भव तं आनर्चु पूजयामासुः।

श्लोक १०. द्विजगणा पक्षिसघा कलकूजितै. मनोज्ञकूजितैः जयशब्दं व्याजह्रु: उदीरयामासु । वेणु वदने मुखे यस्य स । त श्रीकृष्णं ।

श्लोक ११ सरसीरुहे कमले नीरसे आह्लादहीने सति । जने स्वेदेन आर्द्र-वपुषि सति प्लुष्टे उष्णतया तप्ते सति इत्यर्थः ।

प. २८१, श्लोक १२. स्वेदेन आतपेन च प्रमथिता पीडिता तृषया जलपिपासया आर्तजिह्वा. । नद्य स्याता. शीर्णा । त्यक्तश्चासौ दानिना त्यक्त. सुयाचक दरिद्र इव । यस्य दान प्रदातुमपि दानी न विद्यते तादृशदरिद्रस्य एत्यर्थ ।

श्लोक १३. ग्रीष्मे तापेन प्लुते दग्धे सति । दुःखमनुगच्छति अनुसरतीति दुखानुगं सुख । दुःखान रमागम्यमान सुखं हृद्य मनोज्ञ इति संदर्शयन्निव । ग्रीष्मकाले भूमौ तापेन दग्धेसति । गा पृथिवीम् ।

श्लोक १४ स्तनयित्नुभि गम्भीररव कुर्वाणै वलाहकै । मेघै "अभ्र मेघो वारिवाह स्तनयित्नुर्बलाहक" इत्यमर । स्तनयति स्तनिहृषि···" इतीत्नुच् । स्तनगदी देवशब्दे । नि.सृतै शुण्डाप्रायै. गजशुण्डावत् स्थूल पतद्भि जलासारै ।

वटानां अवटाना च समाहार. वटावटं । तस्मिन् सति । "अवट कूप-विलयोर्गर्ते कुहकजीविनि" इति हैम. । अवट गर्तः । वट क्षुद्रपर्वतः । उभा-वपि जले निमग्नत्वात् सर्वा भू समतला दृश्यते । निर्गत स्व धन यस्मात् स· नि स्व दरिद्र । स्व धन अस्यास्तीति स्वी धनिक । निर्धन धनिकश्च साम्यत्वं प्रापितौ इव आभाति । निदर्शनालङ्कार । "वाक्यार्थयो सदृशयोरैक्यारोपो-निदर्शना । यद्दातु सौम्यता सेय पूर्णेन्दोरलङ्कृता ॥ इति कुवलयानन्दे ।

श्लोक १५ कुचेल. सुदाम कृष्णकृपया महान्तमैश्वर्य प्राप्य सकलत्र· संतोषेण स्मयन्निव ।

श्लोक १६. रोधसो· तीरयो पूरं रोध पूरं जल यस्या सा । धुनी नदी । वर्षै जलासारै शश्वत् एकवार ताडिता. शीर्षका एपा ते । गिरितटा । न शीर्णा । न विच्छिन्ना इत्यर्थ । यथा इति अन्यदुदाहरणं प्रतिपाद्यते । यथा मौनरत मौनोपवासादितपसि रत. ज्ञानी योगी विपद्भि अघृण निर्दय सपा-तित सन् अपि उच्छिन्न ऐश्वर्यशाली भूत्वा विकारशून्यः जाजृम्भीति एधते । जैह्मच कुटिलप्रवृत्ति स्वय शीर्यते विनष्टं भवतीति भाव· । अत्र ज्ञानियोगिन. पर्वतेन सादृश्य । विपद्गणाना वर्षासारै. । शिखरखण्डनाभावस्य योगिन विकारशून्यत्वेन मनोदार्ढ्येन च सादृश्यमिति दृष्टान्तालकार । "चेद्बिम्बप्रति-

बिम्बत्वं दृष्टान्तस्तदलङ्कृतिः । त्वमेव कीर्तिमान् राजन् । विधुरेव हि कान्तिमान्" इति कुवलयानन्दे ।

श्लोक १७ शपाना सौदामिनीना संततिभिः मालाभि. । "शपाशतह्रदा-ह्रदिन्यैरावत्य. क्षणप्रभा । तटित्सौदामिनी विद्युच्चञ्चला चपलापि च ।" इत्य-मरः ।

प २८१ श्लोक१७ यथा उग्रो नृसिंहः घनाघनरवैः उद्भवन् असुरसंहारेण सज्जनाना रक्षणं चकार तथैव श्रीश. वर्षाकाले पर्जन्यवर्षणादिना सज्जनान् रक्षति इति भाव. । वसते कामभोगपरत्व निदाघे विगतकातिमत्व जाड्य च वर्षाकाले पुन· सचेतनत्वमिति नराणा भावविभेदाः ईश्वरेच्छाधीनाः इति इश्वरस्य सर्वोत्तमत्व च सूच्यते ।

प. २८२ श्लोक १८ कदरं गर्तं पिण्डल क्षुद्रपर्वत च धारांबुभिः वर्षाजलैः समानौ कुरुते । भ्रांत सत्य तत्व अजानन् पुरुष गर्तमपि समानभूमि मन्यमान तत्र पद निक्षिपन् पतति । ज्ञानी तु यथार्थ वेत्ति अन्यथाचारात् आत्मान रक्षति । भेदं सत्यं अवेतु जन· । क. गर्त· क मृत्पिण्डप्रदेश इति सत्य जानन्तु इति श्रीहरि कृपया मुदा सतोषेण शरदा शरत्कालेन पङ्कं गर्तपिण्डलाभ्या न्यवारीत् । निवारितमकरोत् । ततश्च वस्तुनिचय याथातथ्यत. स्वस्वरूपेण प्रदर्शयामास । श्रीहरि. स्वावतारैः स्वस्मान्निसृतैं वेदादिभिश्च परमात्मन. सर्वोत्तमत्व परस्पर-भेदस्य सत्यत्वं च तत्वज्ञानरूपेण प्रबोधयति । भ्रान्तश्च जन. तदविज्ञाय वर्षा-कालीनगर्तपर्वतसाम्यवत् भ्रात्या सर्वमपि भेदहीन मन्यते । तत् नैव साधु । शरत्काले यथा उच्चावचस्थानाना अवगति सुष्ठु भूत्वा पूर्वभ्राते निवृत्तिः भवति तथैव ज्ञानी भ्रातिमपवार्य भेदस्य सत्यत्व दृढ जानातु इति तुल्ययोगिता-लङ्कार । "सकृद्धर्मयस्य निर्देशोऽप्रस्तुताना व तुल्ययोगिता" अलङ्काररत्नाकरे । अत्र भ्राते· पङ्कसादृश्य शरत्कालीनेन निर्मलाकाशादिवातावरणेन ज्ञानस्य सादृश्य च सुरुचिर निबद्धे शोभेते ।

श्लोक १९ अभ्र आकाश । मार्गा. पाथजनाय पाथजनाना हिताय स्वच्छा अभूवन्निति भावः ।

काता कमनीया· मनोहरा गभस्तय. किरणा यस्य स । उदग्रेन प्रशस्तेन महसा तेजसा । ज्योत्स्ना व्यतानीत् विस्तारयामास । शुभ्रे आकाशे गच्छन् सप्ताश्व सूर्य कवोष्णकिरण· मन्दोष्णकिरण सन् गगने वाभाति । "भास्व-द्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मय " इत्यमर ।

श्लोक २१ गोत्रा पृथिवी । "गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही" इत्यमर. । दर्य कन्दरा. प्रसुप्ता. अखिलवन्यसत्वा यासु ता. ।

श्लोक २२-२५. अत्र चतुर्षु श्लोकेषु ब्रह्मारुद्रविष्णुषु मध्ये क. सर्वोत्तमः इति निर्धारणे प्रवृत्तकार्यस्य भृगुऋषे. कथा संक्षेपेण निवेद्यते। यागे उद्यतैः मुनिभि. प्रार्थित. भृगुमुनि. प्रथमं चतुर्मुखब्रह्माणं रुद्रं च गत्वा तत्र तावुभावपि प्राकृतिकगुणकलितौ दृष्ट्वा तयो. सर्वोत्तमत्व अननुमोदयन् विष्णोरतिकं प्राप। तत्र श्रीलक्ष्मीदेव्या सह रममाण. श्रीविष्णु आत्मान नालक्ष्यतेति भृगुमुनिः विष्णुं क्रोधेन उरसि स्वपादेन तताड। क्रोधादिप्राकृतिकगुणविदूर. परमात्मा झटिति मुने. कोपं शामयन्निव त शिरसा वदमान. "कोमलपाद उरस्ताडनेन पीडितौ स्यातां। अर्घ्यपाद्यादिभि. आतिथ्यं स्वीक्रियतामि"ति मृदुवचनै साक भृगुऋषे पूजा चकार। अनेन भृगुमुनि श्रीविष्णो· सर्वोत्तमत्व निर्धारितवान्। स्वावासस्थानं विष्णोः उरस्थल भृगुमुनि तताडेति अमर्षाविष्टा लक्ष्मीः लोकविडम्बनाय भाविपद्मावतीपरिणयचारित्र्यानुकूल्याय च कोल्हापुर गतवती इत्यादिका कथाऽत्र अनुसधेया।

श्लोक २२. यान्—गच्छन्। मौनीशः भृगुऋषिः। रोषस्य क्रोधस्य शकल अंशम्। अमर्षवशः क्रोधवश। अथापि वक्षसि मुनिना ताडितोऽपि। स्वय शांतः हरिः। विप्रा. कथ आदरेण विनयभावनया पूजितव्या इति लोकाय संशिक्षयन् वोधयन्। व्रीडानत· आत्मना कृतस्य अलक्षीकरणाख्यापराधस्य व्रीडया लज्जया नत भूत्वा। तत्पादपंकजयो समर्हण पूजामकरोत्।

श्लोक २३. मौनीद्रः भृगु. सदसि देवमुनीनां यज्ञे प्रवृत्ताना सदसि सभाया प्रत्यागत्य हरेः उत्तमत्वं प्राहेत्यर्थः,

श्लोक २४. विप्रताडनस्य परीभावं तिरस्कारं। "अनादर परिभव. परीभावस्तिरस्क्रिया" इत्यमरः। तां अन्वेष्टुमिव भुवि आगतः श्रीशेषशैले वेंकटाचले तिरुपतिक्षेत्रे स्थितः। परीणयमहे विवाहरूपोत्सवे। "कृते वृषाद्रिं वक्ष्यंति त्रेतयामंजनाचलम्। द्वापरे शेषशैलेति कलौ श्रीवेंकटाचलम्। नामानि युगभेदेन शैलस्यास्य भवति हि।" इति भविष्योत्तरपुराणान्तर्गते वेंकटेशमाहात्म्ये।

श्लोक २५. श्री जाया यस्य सः श्रीजानि.। भक्तै· ईड्य· पूज्यः। शारदे शरत्काले परतत्व व्याघोषयत्।

आश्विनमासस्य शुक्लपक्षे एव वेंकटेशकल्याणपुराण कथाश्रवण श्रीमध्वनवरात्रोत्सवनिमित्तेन सकलसच्छास्त्रपारायण अध्यापनादिक प्रचलति। शुक्लपक्षस्य दशम्या तिथौ श्रीमध्वजयन्तीउत्सवः वेंकटेशकल्याणोत्सव तिरुपतिक्षेत्रे वेंकटेश्वरस्य ब्रह्मोत्सव इत्यादय. प्रचलति इति अत्र ध्येयम्।

श्लोक २६. श्लक्ष्णः मनोज्ञ वेपः यस्य सः ।

अमलायां पुलिनभूमौ तोयोत्थितनदीतरे । "तोयोत्थित तत्पुलिन" इत्यमरः । यामुने रोधसि यमुनाया' तटे ।

श्लोक २७ लौकिका जना' एवमुच्चैर्जगुः । नदीशैलादय शरत्कालीनचद्रस्य शुभ्रकिरणै' श्वेतिम्ना धवलिम्ना एकसात् दृष्टा । का वा नदी का भूमि इति विवेचन अशक्यमिवासीत् । विवेक्तु विभाग कर्तु अप्रभवः न समर्था. इति । किंतु चद्राकेन चद्रस्य शशचिह्नेन कलकितानि तत्र । तत्र ईषत्कालिमा आसीदिति अवधृता अवधारणावतः भूत्वा । कर्तरि क्तप्रत्यय । कष्टेन निष्ठां जगति व्यवहारकार्येषु आनुकूल्य प्रापुरित्यर्थ ।

आकाशे दृश्यमान तारकानुद्दिश्य अनेकविधया वितर्का क्रियते ।

श्लोक २८. इद्रः आकाशे सुधया शुभ्रवर्णेन स्फूर्जति शून्याकाराणि विलिखति किं । अथवा सुरासुरै क्षीरसागरे मथ्यमाने सति क्षीरकणा निःसृत्य नीलाकाशे प्रोत्थिता' किं । हरिदश्वस्य सूर्यस्य गमनसमये सप्ताश्वै तस्य सप्तभिः अश्वै खुरन्यासेन उत्सारितधूलिमण्डले । कुतूहलेन उर्ध्वं पश्यत नृणा नराणा निमेषोन्मिषा नेत्रयो. निमेषोन्मेषाः अवरे आकाशे उद्वीक्षायां खचिता. तत्रैव निबद्धाः किं । नराणा नेत्ररश्मयः निमिषानिमेषादिना ताराणां स्फुरणमिव प्रतिभाति । नेत्ररश्मय एव आकाशे सूर्याश्वनि.सारितधूलिपटले उपनिबद्धा इवाभाति ।

श्लोक २९ शुभ्राण्यहानि मेघादिछादनरहितानि सूर्यकिरणै' शोभितानि दिनानि । सतां मनांसि च निर्मलयोगशुद्धत्वात् सुपर्वणा देवाना पर्वणां उत्सवाना निर्वाहाय आचरणाय योग्यानि वर्तते । अस्मिन् ऋतौ नवरात्रिदीपावलीप्रबोधोत्सवतुलसीविवाहवैकुण्ठचतुर्दशीव्यासपौर्णिमादिमहदुत्सवा' चातुर्मास्यव्रत तस्य समाप्तिश्चेति अनेके उत्सवा सपद्यते इत्यत्र ध्येयम् ।

श्लोक ३१ स्वाप उत्थान इत्यादिक हरे लीलारचित लोकविडम्बनार्थं रचित इति भाव ।

श्लोक ३२. सन्यासिन' चातुर्मास्यव्रत समाप्य स्वावसथात् स्वस्वाश्रमात् निर्गता. सीमोल्लङ्घन कृत्वा पुन सञ्चारार्थ प्रवृत्ता इति भाव ।

अविदित अज्ञात यथा स्यात्तथा अन्येभ्य स्वावस्थितिं अप्रकटीकृत्येति भाव' । उपविष्ट ।

श्लोक ३३ हेमंतर्तौ शैत्यं अभिवर्धमान जठराग्नि प्रदीपयति । मह्या पृथिव्या स्वसुखस्य ललितलीलाया लोल आसक्त चित्त यस्य तस्य । मनसिज-

स्य कामस्य वशे वर्तमानस्य प्राणिनः। समुदायार्थे एकवचनम्। सौख्यहेतोः अतितीव्रा जाठराग्निप्रदीप्त्री हिमततिः नावर्धत इति शेषः। अनेन कुमुदवनं अपगता श्रीः कांतिः यस्य तत्। सजातम्। कुमुदानां वनस्य शोभा हिमतति विशिष्टस्य हिमन्तर्तोः शोभापेक्षया न्यूना आसीदिति भावः। एवमेव द्योमणेः सूर्यस्य भा दीप्ति। अस्त सत्त्व बल यस्याः सा। हेमन्तर्तौ सूर्यकिरणाः नून मंदा भासते। सर्वत्र पुष्पोद्यानादिभिः सुमनोहरकान्त्या हेमंततुं. कमलोद्यानशोभामतिशेते इति भाव। शीतसमये बुभुक्षा कामाभिलाषादय. अतितीव्राः भवंतीत्यपि अनुभवसिद्धम्।

श्लोक ३४. वरपति श्रेष्ठभर्तारं लष्यति इच्छंतीति। लष् इच्छायां। तासां कन्यकानां। शुभायः शुभ अयः सुभाग्यं येन सः। "अय. शुभावहो विधि." इत्यमर। एत्यनेन सुखं इत्यय.। इण् गतौ "पुंसि सज्ञाया"मिति घः। यद्वा शुभश्चासौ अयश्च इति कर्मधारयः। शुभसौभाग्यभूत.। अज. जन्मादिप्राकृत-विकाररहितः। हिमशयने हिमपर्वते शयालु. अजः नारायण. श्रीवदर्यां श्रीवदरीक्षेत्रे भाति। तथा च हिमालये एव वनेकुहरेषु विहार कुर्वती पार्वती शंकरस्य भार्या विविधप्रकारकोत्सवविधानैः पूज्यते। अस्मिन्नेव ऋतौ "मौन-गौरीव्रत" इति प्रथित व्रतं वरपति अभिलषद्भिः कन्यकाभिः आचर्यते।

श्लोक ३५. धनुषि इद्धरश्मेः सूर्यस्य गमनेन धनुमर्मासारम्भः भवति।

कृष्णेन 'उच्छ्रितबाहुना' प्रसारितबाहुना। दृढमित्यर्थः निगदित यत् "मासाना मार्गशीर्षोऽहम्" इति। पुष्ये पुष्यमासे भव्यं सौभाग्यं कुशल अपुष्यति सति। पुष्यमासे शुभकार्याणि निषिद्धानीति प्रथा विद्यते। पुष् पुष्टौ पुष्यति दिवा-दिगणधातोः शत्रन्तरूपम्।

श्लोक ३६. तपा तप एव तपा। "निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः" इत्यमरः। ज्येष्ठाषाढमासयो. ग्रीष्मऋतोः तप इति नाम। तपस्यः फाल्गुण-मासः। "तपस्य. फाल्गुने पार्थे तपस्या नियमस्थितौ" इति हैमः। तपसि साधु.। "तत्र" इति यत्। ग्रीष्मऋतुः तथा च शिशिरऋतौ फाल्गुणमासः। द्वावपि तीव्रेण तापेन। तापश्च द्विविध. ग्रीष्मऋतौ निदाघतापेन फाल्गुणमासे हिम-शैत्येन रवे उष्णांशुभिश्च। मही विशोषयतीति महीविशोषी। रविः नितांतं तीक्ष्णा प्रखरा. घृणयः रश्मयः यस्य सः। अवन्यां इह लोके दुस्सत्वाना मूलानि एव दहति। ऋतुद्वयस्य तापः दुष्टानामेव न तु सतां इति भाव.। वसंते वसतर्तौ माकदतरु. अति सुगंधितः आम्रवृक्षः। असौ सहकारोऽतिसौरभः। "कामाङ्गो मधुदूतश्च माकन्द. पिकवल्लभः।" इत्यमर.। असौ निसर्गत्या लक्ष्मी स्वभर्तु विष्णो पूजासभार पूजासामग्रीन् पुष्पफलादीन् आहृत्य पुरा

निरन्तर तुतोष । स्वभर्तुः पूजासामग्रीसभारणे लक्ष्मीदेवी सर्वदा अविच्छिन्न-प्रकारेण सतोषमनुभवतीति पुराणप्रसिद्धमेव । "स्यात्प्रवन्धे चिरातीते निकटागामिकेपुरा" इत्यमर । प्रवन्धे अविच्छेदने क्रियाकरणे । पुर अग्रगमने वाहुलकात् क । पुरा धीयते निरन्तरमपाठीदित्यर्थ. । शिशिरर्ताविव वसन्तर्तोः पूर्वभावितया सर्वत्र पुष्पाणि विकसितानि भवन्ति । निसर्गलक्ष्मी वसन्ताख्यपरमात्मन· पूजार्थं सिद्धता कुर्वतीव आभाति इति उत्प्रेक्षा ।

प २८४ श्लोक ३७ चण्डकिरणानां मालाधर । प्रस्फुरितप्रकाश एव परिधिः मण्डलं यस्य सः । "परिवेषस्तु परिधिरुपसूर्यकमण्डले ।" इत्यमरः । परितः धीयतेऽनेनेति परिधि· । द्रुत प्रयाति । शिशिरर्तौ दिनमानस्य अल्पत्वात् सूर्य एव द्रुत गच्छ.ीवाभाति इति भाव· ।

श्लोक ३९ "अव्दो जीमूतवत्सरौ" इत्यमर· । अव्दपति· अव्दाना जीमूतानां पति इन्द्रः । अभ्र आकाश व्यभ्र विगताः अभ्राः मेघा यस्मात् त । मेघरहित अत एव अभ्रम अभीक्ष्ण स्वरूपपरिवर्तनाख्य भ्रमरहित आतमुत अकरोत् । फाल्गुने आकाशः मेघरहितः स्वच्छ शुभ्र भासते इति हि प्रसिद्धम् जना सभ्रमात् उत्सवसभ्रात् । त्यक्त· कामस्य फल परिणाम-भूतः राग उपलक्षणया रोगद्वेषादि दोषराशिः येभ्य· तानि । तादृशानि चेतासि एषां ते । शुद्धं दोषविदूरं सकलगुणगणपरिपूर्णं आत्मदयित आत्मनः जीवस्य दयित आत्मन· प्रीत्यास्पद परमात्मानं सिषेविरे । तस्य सेवा चक्रुरिति भावः ।

प २८५. श्लोक ४०. फाल्गुणमासस्य पौर्णिमायां कामदहनोत्सव· आचीर्यते। यदा शिव. घोरतपस्यायां रतः तदानी कामः तस्य तपस्याया वाधा कर्तु स्वपुष्पवाणै· प्रहार कृत्वा शिवस्य मनसि व्यग्रता आतनोत् । इद कामस्यैव कृति. इति जानन् शिव. कोपाविष्ट स्वतृतीयाक्ष्णा ललाटस्थितेन अग्निज्वाला विकिरन् काम भस्मसात् चकार । तत रतिदेव्या कामपत्न्या प्रार्थित महादेव· काम पुनरुज्जीवयन् तस्य वास स्थानानि न्ययोजयदिति कथा अत्रानुसधेया । इमामेव कथामनुलक्ष्य कामदहनोत्सवे कामाद्यरिषड्वर्गनिर्मूलनसूचक कामदहन विविधरगक्रीडादिक सम्पद्यते । कामदहनप्रथा दक्षिणभारते प्रचलिता । धूर्जटिः शिवः आत्मनः विनिपातस्य मनःसयमभगरूपविनिपातस्य कारणम् । अतनिष्ट तनु विस्तारे । तनादिगणधातो लुङ् ।

श्लोक ४१. तस्य कामस्य प्रतीक मूर्तिः अधुनाऽपि प्रतिगृह रिपुषट्कस्य जेतृभिः जयशीलैः । कामक्रोधलोभमोहमदमत्सराः षट् रिपव. । जनैः दह्यते ।

वसंततौ. दूतकै सहकारस्य आम्रवृक्षस्य पल्लवैः कोमलपत्रैः वीथयः मार्गाः अलकृताः ।

प २८५. श्लोक ४२. पौगण्डव—पौगण्डं—पंचवर्षादारभ्य षोडशवर्षपर्यंत अवस्था पौगण्डमिति कथ्यते ।

श्लोक ४३. वसंतग्रीष्मवर्षाशरद्हेमन्तशिशिराख्यषड्ऋतवः परमात्मनः विराटदेहस्य विकारा इव लक्ष्यन्ते । परमात्मा नून प्राकृतविकाररहित. तथापि स्वशक्त्या एव स्वातन्त्र्येण स्वविराड्रूपस्य विशेषप्रकारान् षड्ऋतुरूपैः प्रदर्शयतीवाभाति ।

श्लोक ४४. एक एव हरिः । समष्टिः अनेकाशैः संकलित समग्र वस्तु यस्मिन् अंशा. समग्रात् नैव भिन्ना. । व्यष्टि· विभिन्नांशै. संकलित समग्र वस्तु यत्र अशा. समग्रात् विभिन्नाः । समष्टिव्यष्टिरूपैः बहुरूप प्रतिभासते । परमात्मनः कालतः स्थानतो वा विभिन्नता न अस्ति । सर्वस्मिन्नपि नियामकत्वेन तिष्ठन् अचित्यशक्त्या वहूरूप इव प्रतिभासते ।

"ॐ न स्थानतोपि परस्योभयलिङ्ग सर्वत्र हि ॐ" इति ब्रह्मसूत्रस्य सारार्थः अस्मिन् श्लोके निवद्ध. ।

श्लोक ४५. कालमानवोधकविवरण अत्र ज्ञेय यथा—अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तित. ।

| | | |
|---|---|---|
| १ निमेष. | १/२७ विपला | २/१२५ सेकेण्ड । |
| १८ निमेषा | १ काष्ठा (७ विपला ) | २$\frac{२}{५}$ सेकेण्ड । |
| ३० काष्ठा | १ कला (४ पल.) | १ मिनट ३६ सेकेण्ड । |
| ३० कला | १ मुहूर्तः (घटीद्वय) | ४८ मिनट (२$\frac{१}{२}$ घटयः=१ घटा |
| ३० मुहूर्ताः | १ अहोरात्रः (मानुषः) | २४ घण्टा । |
| १५ अहोरात्राः | १ पक्षः ( " ) | १ दिनम् (पैत्र्यम्) |
| २ पक्ष | १ मासः (मानुषः) | १ अहोरात्रः (पैत्र्यः) |
| २ मासौ | १ ऋतु. | |
| १२ मासाः | १ वर्षम् (मानुषम्) | १ आहोरात्र (दिव्य·) |

कालस्य एते प्रभेदा. एकस्यैव कालस्य अंतर्विहीनरूपाणि आतरिक भेदरहितानि । गुणात्मकानि कालनामकपरमात्मनः अनेकगुणरूपाणि ।

प. २८५. श्लोक ५० कल्लोलैः महातरंगैः । "अथोर्मिषु । महत्सूल्लोलकल·

लोलौ" इत्यमर । क जल तस्य लोल उन्माद. । "वा पदान्तस्य" इत्यनुस्वारस्य लकार कल्लन्तेऽनेन नद्य । कल्ल—अव्यक्ते शब्दे च । करिसन्निभै : गजवत् अत्यतं स्थूलै. इति भाव । भल्लूकै हिंस्रपशुविशेषै इव । कल्लोलै इत्यन्वय. । स्वनद्भि उच्चध्वनि कुर्वद्भि । रसद्भि शब्द कुर्वाणै मेघै इव स्थितै कल्लोलै-रित्यन्वयः । अब्धि अद्धा अञ्जसा विरेजे । "तत्त्वे त्वद्धाऽञ्जसा द्वयम्" इत्यमर. । अत सातत्यगमने । अतं सततगमन धयति दधाति वा इत्यद्धा । उपमालकार ।

प २८६ श्लोक ५१ समुद्रात् जलकणा. नि सरति । समुद्रातस्थितात् वडवाग्ने ज्वाला प्रसरति । तथा च माणिक्यानि प्रवालादयश्च नि सरति । एतेषा भिन्नभिन्नरोचिर्भि चित्रविचित्ररगै. निर्मिता कलाकृतिरिवाभाति इति अति सुन्दरकल्पना विशिनष्टि इम श्लोकम् । "चित्र किर्मीरकल्मापशवलैताश्च कर्बुरे" इत्यमरः । प्रोद्यद्भि नि.सरद्भिः हिमशीकरै हिमाम्बुकणै । तुपारै हिमपटलैश्च । अनेन धवलवर्ण सूच्यते । और्वाग्नेः वाडवानलस्य ज्वलन तपन । तस्मात् उज्ज्वलद्भि. नि.सरद्भि. शिखाभि' ज्वालाभि । अनेन रक्तपीतादयः ज्वालावर्णाः सूच्यते । समुद्रस्य उदरात् उत्थितै माणिक्यै प्रवालै रत्नै. । वितान विस्तृत किर्मीर अनेकवर्णरञ्जित चित्र व्यतनोत् सपादयामासेव । उत्प्रेक्षालकार ।

श्लोक ५२ अब्धिकन्या समुद्रात् सुरासुरमथनकाले जाता रमा लक्ष्मी. वितानमध्ये विस्तारिसमुद्राकाशप्रदेशमध्ये फणिशय्याया शेषशय्याया शयान । बहुवर्णै शफरै मीनै. कृत आर्तिदीप' मगलार्तिक्यं यस्य सः । बहुरगीनाः मीना. इतस्तत सचरत विष्णोः मगलार्तिक्य कुर्वतीवाभाति । भ्रमिभि भ्रमण कुर्वद्भि' सुरपूगैः सुरसघैः प्रगीयमान स्तुत्यमान रमण परिणिन्ये । विवाह चकार । समुद्रमध्ये श्रीविष्णुः शेषशयनः स्वप्रियया श्रीलक्ष्म्या भक्त्या सेवमानः नितरा शोभते । देवा' सचरत' समुद्रमध्ये श्रीविष्णु दृष्ट्वा तस्याः गुणगान कुर्वति । मीनादय. स्वसुरुचिरदेहै. रगरजितनेत्रैश्च मगलार्तिक्य कुर्वतीवाभाति इति भाव' । उत्प्रेक्षालकारः ।

श्लोक ५३. निम्नगा नद्य । "स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगाऽऽ-पगा" इत्यमर । निम्नं गम्भीर गच्छतीति निम्नगा । स्वच्छदं स्वातन्त्र्येण स्वनाथ समुद्र मुख्यतया स्वामिन श्रीरमण विष्णु च आप्तु गुणाढ्यं त परि-षेवितु भक्त्या सेवितु च सुमेरुकूटात् धावत्य. शीघ्रगत्या चलत्य ससस्रु प्रोहुः । प्रवहति इति भावः ।

प. २८६ श्लोक ५४ "मुक्तामाणिक्यवैदूर्यगोमेदान् वज्रविद्रुमौ। पद्मरागं मरकत नील चेति यथाक्रम" इति नवरत्नानि। उपलक्षणतया सर्वसपद उत्पत्तिस्थानमिति भाव.। द्रुहिणेन ब्रह्मणा स्वीयचतुर्भिरपि मुखैः उच्चारितैः। शोभन. घोष. एपा तैः श्रुतिमन्त्रै वेदमन्त्रै । विभुः समुद्रान्त. स्थित. विष्णु. सेव्यते।

श्लोक ५५. रघुप राघव श्रीरामचन्द्र. रक्तापाङ्गनिपातनेन यं समुद्र शीर्णगात्र विभिन्न देह व्यधात्। यदा सीता प्रत्यानेतु लङ्का प्रति प्रवृत्तस्य कपिसैन्येन सनाथस्य श्रीरामचद्रस्य समुद्रः उल्लङ्घने मार्गं नाकरोत् तदा क्षुब्ध' श्रीराम. कोपेन चाप प्रयुज्य समुद्र शात कृत्वा भिन्नगात्रमकरोदिति कथाऽत्रानुसधेया। य. समुद्रः त श्रीरामचद्र अलालयत् भक्त्याऽपूजयत्। चिन्वता शोधयता। कपिनायकेन मरुता वाय्ववतारभूतेन हनूमता। कुभोद्भवस्य अगस्त्यऋषे हस्तयो चुल्लके गत.। जलपानार्थ हस्तयो य' आकृतिः अञ्जलिरूपा क्रियते सा चुल्लुकः इति कथ्यते। अगस्त्यमुनि समग्रसमुद्रजलपानार्थ समग्रमपि समुद्रजल स्वहस्तयो अञ्जलौ अगृह्णादिति कथाऽत्र ध्येया ।

श्लोक ५६ तिमि प्रभूतकायः मीनविशेपः। तिमिं गिलति इति तिमिंगिल.। तिमेरपि प्रभूततरकाय. मीनविशेपः। तिमितिमिङ्गिलनक्रादयः जलचरा.। तेपा चक्रक समूह । तस्य क्रकचकर्तरिभिः करपत्रसदृशदलाख्यकर्तरिभिः। "क्र" इति कचति इति क्रकच । कच शब्दे। "कृपाणी कर्तरी समे" इत्यमरः। कृन्तन छेदन। तेन। उपलक्षणतया अनेकहिंस्रजलचरप्राणिना हिंसात्मककृतिभिः उच्छ्रूतं प्रवृद्ध परिपूर्णमित्यर्थः। समुद्र. इति शेप'। अन्यत्र च स एव समुद्र सुरभिधेनो कल्पवृक्षस्य रत्नाना सुधाया. अमृतस्य श्रियः लक्ष्म्या. हस्तिन. ऐरावताख्यगजस्य। शीतलाः गभस्तय' रश्मय यस्य स । तस्य चन्द्रस्य च निधानं वासस्थान उत्पत्तिस्थान वा। समुद्रस्य एकतः हिंस्रजलचराणा हिंस्रकृत्याश्रयत्व अन्यत्र कामधेनुकल्पवृक्षादिसुमगलकरवस्तूना वासस्थानत्व नून विचित्र आपाततः विरोधभावपूर्ण इति प्रतिपाद्य एतद्दृष्टातेन तत्वविशेपौ सूच्येते इति उत्तरपक्तिद्वयेन विशदीकुर्वंति कविवर्या.।

विपयेपु भोगविपयेपु सक्ता मतिः। तया रुद्धैः परमात्मान प्रति गमनात् प्रतिरुद्धै. भावनै. विचारै. तदनु आचारैश्च नर' नरकादिवेदना सदधाति सपादयति। किंतु स एव नर । विमलाभक्ति' मनन भगवन्नाम्नः पुनः पुनः ध्यानं। आदिपदेन श्रवण कीर्तन पादसेवन वदन दास्य इति विविधसेवाप्रकाराः लक्ष्यन्ते। चितन च । एतै' अमितधी अपरिमितज्ञानवान् भूत्वा पर सुख एधयति वर्धयति। नक्रादिकृतनस्य नरकादिदुःखेन साम्यं सुरभिकल्पवृक्षरत्ना-

दीना मननादिप्राप्यामितसुखेन साम्य निर्दिष्टम् । निदर्शनालङ्कार । "वाक्यार्थयो. सदृशयोरैक्यारोपो निदर्शना । यद्दातु. सौम्यता सेय पूर्णेदोरकलङ्कता" इति श्रीमदप्पय्यदीक्षितविरचिते कुवलयानन्दे ।

प २८६ श्लोक ५७ समुद्रः प्रत्यर्पणमनभिलपमाण महान् दानी इति वर्ण्यते। द्युमणिना सूर्येन । नैदाघकालस्थितस्य सूर्यस्य गभस्तिभि रश्मिभि पीत. अपि सुधां अमृत दास्यसि । निदाघकालीनेन उग्रतमेन सूर्येन समुद्रजल वाष्पीकृत्य मेघरूपेण अन्यत्र नीयते इति प्रथितमेव । एव नैदाघसूर्येण शोषितोऽपि सुरासुरै. मथित सागर अमृतमेव प्रददाति । नित्य वाडवाग्निना दग्धवपुरपि अम्लानगात्र अविकृतशरीर. सन् । तथा च सुरासुरै. निस्त्रिंश क्रूरतया अपघृण निर्दयेन च निर्मर्दित मथित' अपि आदरात् सादर सर्वेषा हिताय रत्ननवक दद्या. । ईदृश. दानी अन्य क अस्ति । न कोऽपि इति भाव ।

श्लोक ५८ तुगतरगै. मगलगुणा गगा । हरे विष्णो वामपादस्य अङ्गुष्ठस्य नखरात् निष्क्राता । प्रथम प्रोद्भिन्नवेधोऽण्डतः प्रकर्षेण उद्भिन्नात् विच्छेदीकृतात् ब्रह्माण्डत. ब्रह्माण्डस्य विवरात् । स्वरभसा ब्रह्माण्डमपि उद्भिद्येति भाव । तत । प्रोत्तुगमेर्वग्रत. अत्युन्नतमेरुशिखरात् पात पात पतित्वा पतित्वा । रभसा गति' वहुदूर पतन च सूच्येते । अभीशुवेगेन अतित्वरितगतिना हैम गिरिं हिमवत्पर्वत प्राप । या गङ्गा सा इति सवध. । निर्ह्राद कलकल निर्घोष । "स्वाननिर्घोषनिर्ह्राद नादनिस्स्वाननिस्स्वना" इत्यमरः । भ्रमः अध.स्थजलस्योर्ध्वं नि सरण । निर्झर वारिप्रवाह. । "भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दभ्रमणयोरपि" इति मेदिनी । "वारिप्रवाहो निर्झरो झरः" इत्यमर. ह्रद अगाधजलवत् सर । झरी शिथिलवारिप्रवाहः । गुञ्जन् ध्वनि कुर्वन् निकुञ्जः लतादिभि पिहित स्थानविशेष' । एते सर्वे उदरे मध्ये यस्या' सा गङ्गा । गङ्गाप्रवाहस्य वेगेन अन्ये जलाशयकूपझरनिकुञ्जादय. तत्प्रवाहान्त एव विनिवेशिता ःभूवन्निति गङ्गानद्या गाम्भीर्यं वर्ण्यते । अत्र भागवते कृत गङ्गावर्णन ध्येयम्—"तत्र भगवत साक्षात् यज्ञलिङ्गस्य विष्णोर्विक्रमत वामपादाङ्गुष्ठनखनिर्भिन्ना ऊर्ध्वाण्डकटाहविवरेणान्त प्रविष्टा या बाह्य जलधारा......" इत्यादि ।

श्लोक ५९ गङ्गाप्रवाह अनेकवितर्कं वर्णयन्ति । हृदयकुहरस्य हृदयगुहायां स्थितस्य परमात्मन ईक्षाया साक्षात्कारे मतिमता दत्तबुद्धीना आद्याना पुरातनाना ऋषीणा विद्याना निधान आश्रय स्थान किं । गङ्गाप्रवाहे ऋषिगणस्य सकलविधा विद्या एव रसो भूत्वा प्रवहतीव आभाति । गङ्गनद्यास्तीरे एव ऋषिगणाः सकलविद्यासु प्रावीण्य प्राप्य शिष्येभ्यः उपदिदिशु. किल । शिष्येभ्यः पुनः

शिष्या इति परम्परया विद्याप्रवाह एव प्रवृत्त.। स एव गङ्गानदीप्रवाहरूपेण चिरन्तनं प्रवहति किमिति वितर्कः। अथवा ऋषीणा बहुलतपसा बहुविध तपश्चर्याणा स्यूति. एकत्रीकरण कि इति अन्य वितर्कः। अथवा धृतिमतां हरिपदप्राप्तौ रतानां योगिनां घृणास्रोतःसारः कृपारूपजलप्रवाहस्य सारः मुख्यसारभूत अयं गङ्गाप्रवाहः कि। अथवा सूक्ताना पुरुषसूक्ताम्भ्रणीसूक्तादि वेदवाक्याना। निर्धूतदुरितः ज्ञानप्रसारणेन दूरीकृत दुरित पाप येन स·। प्रवाहः भुवि पतति किं। सूक्ताना अध्ययन ऋषिपरम्परया अविच्छिन्न प्रवाहवत् प्रचलति इति वेदा· अपौरुषेया इति च अनेन ध्वन्यते। प्रवाह इत्यावृत्तिः। एतादृश निर्धूतदुरित गङ्गाप्रवाह भुवि पतति। वितर्कालङ्कारः। "सम्भावित-सम्भाव्यमानापोह. वितर्कः" इति अलङ्काररत्नाकरे।

श्लोक ६०. गङ्गाप्रवाहमेव पुनः वर्णयन्ति। कृपाया सागर इव। दुरित-रूपविपात्मकवृक्षस्य परशुः पापवृक्षकृतने कुशल· खड्ग· इव। नदीप्रवाहः अनेकवृक्षान् पातयति। पापानि एव वृक्षरूपेण पातितानि इति कल्प्यते। गङ्गानदीस्नानेन सकलदुरितनिवृत्तिः भवति इति हि प्रसिद्धम्।

निलीनस्य तत्र तत्र निगूढस्य अज्ञानात्मकान्धकारस्य क्षपणाय विनाशाय। ज्ञानरूपसूर्यस्य किरणा· एव प्रवाहरूपेण प्रसरंति किं। मुनिगणानां मौन।

असप्रज्ञातः स्वस्यैव विस्मरणपूर्वक परमात्मनि एव चित्तप्रवृत्तिमान्। इद्धया श्रेष्ठया श्रुतिमत्या श्रुतिज्ञानेन। वेदज्ञानपूर्वकमित्यर्थ। निदिध्यासः ध्यानयोग। असप्रज्ञातेन इद्धश्रुतिमतिनिदिध्यासेन मह· वर्चः एषा ते। तादृशाना अनवद्योर्ध्वतपसा। अनवद्याना दोषरहिताना श्रेष्ठतपोरताना प्रणिधिः योग. एव प्रवाहरूपेण निःसरति किं। मौनस्य तपसश्च यत् गाम्भीर्यं दुरितनिवृत्तिसामर्थ्यं च तत्सर्व गङ्गा प्रवाहेऽपि दृश्यते इति साम्यम्। उत्प्रेक्षालकार·।

श्लोक ६१ जनिमृतिविशिष्टससाराख्यमुष्या। धातूना तापनाय उप-युज्यमान विशिष्टपात्र मुषीति कथ्यते। तप्त मन एषा ते। ससारे तप्ताना जनाना कृते। तेषा हिताय सुधा अमृत निष्यन्दन्तीव वीचीना तरङ्गाणा निचयैः समूहै विसृतै कलपदध्वनिभि. हरे गाथा चरित गात्री गायन्तीव स्थिता गङ्गा। यथा जननी स्व शिशु स्वोत्सङ्गे परिष्वज्य रमति तथा गङ्गा मा स्वान्त गृहीत्वा रमता क्रीडताम्। मम गङ्गाप्रवाहान्त. स्नानेन स्वमातु· अके रममाणस्य शिशो. सुखमिव अमन्दानन्दः लभेत इति भाव। गङ्गा च मा करैः उद्धृत्य अतटभृगुपातात् तटरहितात् सानोः पतनात् रक्षतु। तटरहितसानोः

पतनं पापकार्यप्रवृत्ते साहश्यम् । मा अधर्माचरणप्रवृत्तेः परावर्तयित्वा सद्धर्माचरणे मन प्रापयतु इति भाव । "भृगु सानौ जमदग्निप्रपातयोः शुक्रे रुद्रे च" इति हैमः ।

श्लोक ६२. या गङ्गा दृष्टा चेत् दर्शनमात्रेण नयनयोः आन्ध्य दोष अधत्वदोष अपहन्त्री निवारयन्ती । बाह्यचक्षुष. अधत्व तथा च आन्तरचक्षुषः अन्धत्वं नाम भगवत्साक्षात्कारे असामर्थ्य दूरीकरोति इति भाव. । सा स्वर्धुनी स्वर्गनदी मुहु. वार वारं स्पृष्टा चेत् भौतिकरोगाना सूति मूलनिदानाना समूहं भृश सम्यक् ध्वम नयती । आमूलाग्र विनाशयती । मज्जनकर्मादीना पोषण तस्य विधि । "भर्मस्यात्काञ्चने भृतौ" इति मेदिनी । नद्या मज्जन स्नानसकल्प मृद्गोमयादि स्थान पुन नद्या मज्जन इत्यादि नदीस्नानागकार्यकलापै मृष्टा सिञ्चिता चेत् अध्यात्मसपद प्रदा । ध्याता चेत् संसृतेः ससारस्य मूलजालस्यैव निदानस्यैव दहना विनाशकर्त्री । श्रीहरे' पद वैकुण्ठं च दात्री । मनोवाक्कायशुद्धीकरणेन भगवतः शुचिज्ञान प्रदाय भगवत्प्रसाद प्रापयित्वा भगवत्सान्निध्य प्रददाति इति अहो माहात्म्य गङ्गाया ।

श्लोक ६३ भगीरथस्य प्रयत्नेन भूमि प्राप्ता भागीरथी सगरवंशजानां सर्वेषा पावनेन ऐश्वर्य प्रददौ इति कथा ध्येया ।

श्लोक ६४ हैमवती हिमवत. कन्या । गिरिजा—पार्वती । पार्वती भारतदेशे निवसतीति भाव' ।

श्लोक ६६ अभ्र आकाशमपि कषद्भि. विदारयद्भिः । कष् घर्षणे अत्युन्नतैरिति यावत् । हरिताना हरितवर्णमणीना हरितवर्णकुशाना च उपलाभाः येषु तैः सानुभि. । भव्यवपु महात्मा हिमालय. विजृम्भते नितरां शोभते ।

प २८८ श्लोक ६७ अद्रिराट् अद्रिषु राजवत् विराजमानः हिमवत्पर्वत. कल्ये प्रात काले बभौ । या गङ्गा चित्रैः प्रवाहझरिभिः जलधाराभि' साक अध धावति प्रवहति सा नूपुरति । हिमवत्पर्वतस्य झण् झण् रवं कुर्वाणाः नूपुरा पादभूषणानि इवाभाति । ऊर्ध्व सानूना अग्रभागे शीर्ष्णि हिमवतः शिरोभागे शुभ्रा धवला हिमतति. हिमसमूह विराजते । मृदुरवे' प्रात कालीनकोमलसूर्यस्य मदै पीतगभस्तिभि पीतवर्णै रश्मिभि । हिरण्यप्रभाछन्न' सुवर्णकान्त्याऽच्छादित सन् । "किरणोस्रमयूखांशुगभस्तिघृणिघृण्णय." इत्यमर. । अनेन वरै किरीटै भूषित पौरटकान्तियुक् । पुरटस्य सुवर्णस्य इयं पौरटा च सा कान्तिश्च । पौरटकात्या सुवर्णवत् शोभन भ्राजमान नृप इव आलक्ष्यः दृश्यमान. अद्रिराट् बभौ ।

प २८८. श्लोक ६८ वनराजिमय्या अरण्य पक्तिसहितायां। प्राचुर्यार्थे मयट्। धरिण्यां मह्या। पृथुस्थूलदेहवान् कुम्भकर्ण. भ्रातु कुबेरस्य हर्म्य उत्तरदिशि स्थित सौध द्रष्टु व्रजन् मार्गे श्रान्त स्वप्नहृत. निद्रया पराभूत. इति किं। वितर्कालकार।

श्लोक ६९ हिमवान् उग्रनिग्रहतर.सारैः. सूरिभि ऋषिपण्डितैः सेव्य। वैहायसैः आकाशे स्थितैः किन्नरादिभि. साहसै स्थैर्येण गेय स्तुत्यः। हिमानीभरै हितसंहतिपूर्णै. छन्नैः. आछादन कुर्वद्भि हिमांशुवत् चन्द्रवत् धवलै सानुगतै अनेकसख्याकसानुभिः शिखरै. भव्य. अतिसुन्दर। एतादृश हिमवन्त अनल्पविभव अतिप्रभूतैश्वर्यमत साहस्रजिह्व सहस्रजिह्वावान् अत एव वाक्पाटववान् अहिः अपि शेषोऽपि स्तोतु वर्णयितु न प्रभवति न समर्थो भवति। अहो भव्यता हिमवत्पर्वतस्य। अतिशयोक्त्यलकार। "रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः। पश्य नीलोत्पलद्वन्द्वान्निः सरति शिता शरा"। इति कुवलयानन्दे।

श्लोक ७०. विशालानगरी हिमालये नितरां शोभते। देवै. ऋषिगणैः मुनिभि. सश्लाघ्या विशालानगरी। स्फुरदमलदेशा स्फुरन् शोभायमान. अमल. पवित्र : देश यस्या सा। विशालायां कले. न स्थान इत्यभिप्रायेण कलिं निर्जित्य अस्ति इति वर्णनम्। कुरुकुले जाताः भूपा. धर्मराजभीमसेनादयः।

श्लोक ७१. बदर्या श्री नारायणस्य सान्निध्येन अकिता अलकनदा। पुरत. पञ्चभिः पुण्यै निर्झरैः नदीभि. सगता। विष्णुगगया साक विष्णुप्रयागे, पिण्डाराख्य नद्या कर्णप्रयागे मदाकिन्या साक रुद्रप्रयागे नदाकिन्या साक नदप्रयागे भागीरथ्या साक देवप्रयागे एवं पञ्चनदीभि. साक सगता। शोभते।

श्लोक ७२ हिमालये अनेके हिंस्रपशव अनेके अहिंस्रस्वभावाः ऋषिमुनिसाधव विना भीतिं प्रवर्तते इति भाव।

श्लोक ७३. महान्त सिद्धाः साधव एव भिन्न वपु. देह। सामान्यधर्मानुलक्षणेन एकवचनम्। समाश्रित्य वृक्षा. लता: गुल्माः बालवृक्षसघा तृणादय. कक्षा. शुष्कतृणा अभवन्। एव केन कारणेन कृतवंत. इति प्रश्ने कविकर्याः तर्कयंति। अय मे इति शेष.। अय मे तर्क. यत् उदग्रसत्वाः सिद्धा हरिं सेवितु ध्यान गताः तत्र हि हिमालये एव नित्य वसतीति नित्यवासा बभूवुरित्यर्थः। हिमालये ध्यानयोगादे. महदानुकूल्यस्य सत्त्वात् तत्रैव नित्यं ध्यान कुर्वत. सदैव वासार्थ लतावृक्षादिरूपाणि दधु. इति कल्प्यते। रूपक उत्प्रेक्षालकारश्च।

प० २८८ सुषमाविशेषं कांतिविशेषम्। "सुषमा परमा शोभा शोभाकान्तिर्द्युतिश्छवि" इत्यमर।

इति चम्पूभावबोधिन्यां द्वादश उल्लास.।

## त्रयोदश उल्लासः

प० १८६ आवर्तयंतः—पुन पुन· विचारयन्तः।

श्लोक १ तारा आकाशमार्गे बहुकालात् अल्पीभूता.।

आलोकरावैः जयजयकारशब्दैः। श्लक्ष्णेक्षणैः मनोज्ञैः कृपापूर्णैः ईक्षणैः दृष्टिभि. वीक्षस्व पश्य अस्मानित्यर्थः।

श्लोक २ शङ्कुकर्णरूपे चतुर्मुखब्रह्मण· तुलसीपुष्पाहरणाख्यसेवा कुर्वति स्म श्रीराघवेन्द्रमुनय इति कथा अत्रानुसंधेया। प्रह्लादावतारे दैत्यबालकेभ्यः उपदिदिशु·। मध्वदेशिकस्य मध्वगुरो मत। "गुरौ देश्ये च देशिकः" इत्यमर.।

श्लोक.३ राघवेन्द्रमुनय स्वोपास्यदेवताभूत हयग्रीव सदा समाधौ ध्यायन्ति। हे मुनिश्रेष्ठ राघवेन्द्र हयग्रीवमन्त्रस्य जप कुर्वन् रात्रौ जागरितः एव सन् बहि स्ववृन्दावनात् बहि स्थित जगत् नाद्दतं किं आदरेण न दृष्ट किं। दिवाऽपि समया निकषा समीपत एव वर्तते। अह्न. प्रारभः आसन्नप्राय एव। "समयान्तिकमध्ययो" रित्यमर। श्रीहरि. नृसिंह प्रह्लादाय एव वरमदात् "त्वद्भक्ताः मामनुव्रता" इति। मा उन्मिषन् नेत्रे उन्मीलयन् मा दयया वीक्षस्व। नो चेत् न वीक्षसि चेत् अस्मभ्य कः आश्रय वद। त्वा विना अस्माक न कोऽपि अन्य. रक्षक इति भाव।

प २६० श्लोक ४ तुगा. उन्नताः तरङ्गा· यस्या सा। तुङ्गा स्वच्छोदपूरेण स्वच्छजलपूरणेन प्रवहति। तव हृत्पूर पूर्णहृदयेन मृदुलैः कर्णमधुरैः· स्वानैः कलकलनादैः. स्वागत आकरोति उदीरयति। "स्वाननिर्घोषनिर्ह्रादनादनिस्स्वाननि स्वना" इत्यमर। हे गुरो तव पादमूले स्थितेन रजसा धूल्या सिक्त उत्तमाग शिर यस्य सः। तस्य मे याञ्चा "प्रभो प्रभातसमयः समागत.। उत्थाय स्नानार्थ तुङ्गातीर उपगच्छ अस्माश्च उद्धर" इत्यात्मिका प्रार्थना धारय स्वीकुरु। सुधासारज श्रीमट्टीकाकृत्पादैः विरचितस्य सुधाग्रथस्य सारात् मुख्यार्थ लक्ष्यीकृत्य जात गध परिमल स्वेन रचित परिमलाख्यग्रथ भावदीपस्य कलया प्रभया साक सत्तत्व श्रीवेदव्यासससम्मत तत्व बोधय उपदिश। श्रीमट्टीकाकृत्पादाना सुधाग्रथस्य त्वयैव विर-

चितस्य सुधाग्रंथटिप्पणीभूतस्य परिमलाख्यग्रथस्य तथा च श्रीमट्टीकाकृत्पादाना तत्वप्रकाशिकाग्रथस्य टिप्पणीभूतस्य तवैव भावदीपाख्यग्रथस्य च सारं अस्मासु अनुकम्पया उपदिश इति प्रार्थना ।

प २६० श्लोक ५ पुरा प्रह्लादावतारकाले शिशुसुलभलीलां बालसहजां क्रीडां विहरत क्रीडतः अपि ते नृसिंहध्याने असुलभा अन्यै सुलभेन अशक्या सततरति. आसीत् । अधुना सन्यासाश्रमे स्थितस्य ते परमात्मध्याने रति· वर्तते इति किमु वक्तव्यमिति भावः । नूनं तव निद्रा एव नास्ति । अस्माक प्रबोधनप्रयत्नः एव न योग्यः भावः ।

श्लोक ६. स्तोक ईषत् । शुभगिरां शुभवचनेन विरहस्य त्वत्तः वियोगस्य रात्रौ अनुभूतस्य तव विरहस्य शांति शमन कुरु । अस्माक अनुग्रहवचनमुदीरयन् अस्मत्सनाथत्व प्रदर्शय । इति दीनप्रार्थना श्रीरघवेन्द्रयतये ।

प २६० पालयति—निरीक्षते ।

प० २६१ सूचीकटाहन्याय —पूर्वमेव ध्येय. विशदीकृत. ।

प० २१३ पूतिकूष्माण्डायते । कूष्माण्डः सुष्ठु अस्ति चेत् शाकादिकृते उपयोक्तु शक्यते । चिर अतिपक्व. भूत्वा विगलित पूतीभूत चेत. दुर्गंधनिमित्तेन अस्वीकार्यो भवेत् । तथैव अपरीक्षित निर्दोपानुमानेन आगमेन वा प्रतिरुद्धं प्रत्यक्षं अस्वीकार्यं भवेदिति भाव. ।

प्रमाणानां बलाबलविवेकोपन्यासे अधोनिर्दिष्टा विपया. विवेच्यन्ते ।

(१) उपजीव्योपजीवकयोः मध्ये बलाबलत्वचर्चा । (२) बलवत्वस्य बहुत्वात्स्वभावतः वा इति । बहुत्व नानुवादकत्वप्रापक प्रमाणस्य किन्तु दार्ढ्यहेतुभूतम् इति चर्चा । (३) प्रत्यक्षागम,नुमानाख्येपु त्रिपु प्रमाणेषु मध्ये अनुमानस्य प्रत्यक्षागमोपजीवकत्वात् तदितरोभयापेक्षया दौर्बल्यम् (४) निदोपानुमानेन आगमने वा बाधितस्य अपरीक्षितस्य प्रत्यक्षस्य पूतिकूष्माण्डवत् अग्राह्यत्वकथन । तथा च निर्दोपप्रत्यक्षस्य प्राबल्यकथनम् । (५) जगत्सत्यताग्राहिप्रत्यक्षस्य प्राबल्यविवरणम् । साक्षिण. नियतयाथार्थ्य कालत्रयाबाध्यत्व अधिकृत्य चर्चा । (६) लौकिकविपये निर्दोपप्रत्यक्षस्य प्राबल्येऽपि अलौकिकविपये आगमस्य प्राबल्यकथनम् ।

७. तात्पर्यविगतौ अर्थनिर्णये च रूढियोग योगरूढि· रूढोपचार रूढलक्षणोपचार. लक्षणा महायोग विद्वद्रूढि· इत्यादीना चर्चा । श्रुतिलिंगसमाख्यादीनां उपक्रमोपसहारादीना सावकाशत्वनिरवकाशत्वयो उपजीवकत्वोपजीव्यत्व सावकाशत्वनिरवकाशत्वादीना चर्चा ।

(८) सावकाशनिरवकाशयो निरवकाशस्य सर्वथा प्राबल्यसमर्थनम् (१०) तत्वमसीति आगमवाक्यस्य उपजीव्यप्रत्यक्षविरोधससर्थनम् तेन सादृश्ययुक्त्या तस्य जीवभेदकथने तात्पर्यस्य विवरणम् । (११) श्रुतौ भेदपरवाक्याना निरवकाशत्वस्य अभेदपरवाक्याना सावकाशत्वस्य च समर्थनम् ।

प० ३०० श्लोक ७. शुद्धसत्वात् स्रष्टु विष्णुत आद्या सृष्टि. प्रकृतिगुणेभ्य. प्रकृतिरूपोपादानकारणेन सत्वरजस्तमोरूपप्राकृतिकगुणेभ्य· चिता सपादिता। सृष्टिक्रम वर्ण्यते। शुद्धसत्वात् सत्वगुणात् ब्रह्मा आद्य वायु. मुख्यप्राणः तत· रजसि रजोगुण उपादानीकृत्य अमी रुद्रादारभ्य अन्ये देवा. । त्र्यैविध्यात् तामसात् त्रिविधकरणानि तन्मात्राणि इद्रियविपयाणि च। अधिक भागवतादि-ग्रथेपु अवगन्तव्यम्।

श्लोक ८. विष्वैक हस्तांकित· केवल विष्णोः हस्ताभ्या अकित विष्णुमात्रेण कृत· सर्ग· । प्रत्न· पुरातनः। "पुराणे प्रतनप्रत्नपुरातनचिरतनाः" इत्यमरः। भगवदनुग्रहणैव सर्वं जगत् प्रचलतीति वर्ण्यते ।

श्लोक ९ तारवत् शुद्धमौक्तिवत् चरा आचरन्त । शुद्धमौक्तिकवत् प्रस्फुरंत्यः शोभायमाना. तारा नक्षत्राणि स्फुरति प्रकाशते। पडृतव आरात् सम्यक् स्वकार्येपु वर्षाहिमप्रपातपल्लवपुष्पदिवसनादिकार्येपु रता । समग्रा सर्वे वाराः दिवसा सोमवारमगलवारादय तिथिव्रातै प्रतिपदादिभिः अनुद्रुताः साक अनुसरंत वर्तते इति शेप । कालचक्रपरिभ्रमण श्रीशानुग्रहेणैव इति भाव । इद सर्वं जगत् श्रीशस्य विष्णो प्रशस्तौ प्रशमने सेवायामेव स्थितम् उद्यतमिति भाव ।

श्लोक १० विष्णु सुमृष्ट स्वान्न शोभनमन्न बहुप्रकारेण प्रदाय जीवान् जीवयति। मही सस्याढ्या भवति। जलदा मेघा तृष्णाबुभुक्षाहर प्रशमन शातिद जल प्रददति। नद्य सुमधुरस्वादै रुचिकरै पापक्षालकै तृप्तिदै· रसैः जलै स्वकार्यं कुर्वंति। एव सर्वः परमात्मसकल्पानुगुण स्वीयगुणानुदानविधया विष्णुं पर सेवते ।

प० ३०१ श्लोक ११ यस्य वशात् चेष्टा जगद्व्यापारा· इद्रियव्यापाराश्च प्रवर्तते त पूर्णं प्रभु हरिं अह नौमि ।

प० ३०१ क्रोडदष्ट्रायाः सूकरस्य दष्ट्राया अग्रे स्थिताया भूमे जाता तरङ्गिणी तरङ्गवती नदी तुङ्गा। वराहावतारे वराहस्य दष्ट्रायां भूमि गृहीता हिरण्याक्षवधानतर समुद्रात् वहि. आनीय रक्षिता इति कथाऽत्र ध्येया । अलघु

अनल्प' प्रभूतकांतिसमूहः । चतुर्मुख एव प्रमुख. एषा ते लेखा. देवा । निरपह्नव निगूहन विना । भक्त्युद्रेकं अल प्रकटीकृत्येति भावः । निष्प्रत्यूह— निर्विघ्नम् । "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमर । अपवर्गपद मोक्षस्थान ।

प० ३०३ श्रीमध्वाचार्याणा सप्तत्रिंशद्ग्रथा. यथा—

(१) सूत्रप्रस्थाने— १. ब्रह्मसूत्रभाष्यम् ।
२. अनुव्याख्यानम् ।
३. अणुभाष्यम् ।
४. न्यायविवरणम् ।

(२) ऋक्प्रस्थाने—
५. ऋग्भाष्य ।
६-१५. दशोपनिषदा भाष्याणि ।

(३) गीताप्रस्थाने
१६ महाभारततात्पर्यनिर्णयः ।
१७. यमकभारतम् ।
१८. गीताभाष्यम्
१९. गीतातात्पर्यनिर्णयः ।
२०. भागवततात्पर्यम् ।

(४) प्रकरणग्रथाः
२१. मायावादखण्डनम् ।
२३. उपाधिखण्डनम् ।
२४. तत्वसंख्यानम् ।
२५. तत्वविवेकः ।
२६. तत्वोद्योत. ।
२७. विष्णुतत्वनिर्णयः ।
२८ कर्मनिर्णयः ।
२९. कथालक्षणम् ।
३०. प्रमाणलक्षणम् ।

(५) स्तोत्रग्रथा.—
३१ द्वादशस्तोत्रम् ।
३२. जयन्तीनिर्णयः ।

३३. कृष्णामृतमहार्णव. ।
३४ नरसिंहनखस्तोत्रम् ।
३५. सदाचारस्मृतिः ।
३६ तन्त्रसारसग्रह ।
३७ यतिप्रणवकल्पः ।

प्राय. कन्दुकस्तोत्राख्यस्तुतिश्लोकोऽपि एकग्रथत्वेन कैश्चन परिगण्यते ।

पृ० ३०८ गलग्राह् गले कण्ठे गृहीत्वा निष्करुणमिति भाव.। व्यासकूट ज्ञानकार्य सूचक । दासकूट भक्तिमार्गस्य द्योतक । उभावपि श्रीराघवेन्द्रगुरुसार्वभौमै सद्ग्रथरचनादिना पदसुलादिरचनया च पोषितौ इति भावः ।

**इति चम्पूभाव बोधिन्या त्रयोदशः उल्लासः ।**

# चतुर्दशः उल्लासः

अस्मिन् उल्लासे ग्रंथकर्तृभिः सपरिवारं तथा च अन्ययात्रिभिश्च साकं श्री-पञ्चमुखीप्राणदेवदर्शनार्थं गाणधाळक्षेत्रगमनं ततः श्रीगुरुपादमूले चम्पूग्रन्थसमर्पण च उपवर्ण्येते ।

पृ० ३०९ तरीयंत्रेण नावमुखेन ।

अस्मत्प्रपितामहाः—ग्रन्थकर्तृणां प्रपितामहाः ।

अनुतुङ्गातट तुङ्गानद्याः तटस्य समीपे ।

प्रत्यन्तपर्वतेषु महाद्रीणा समीपे स्थितेषु अनुच्चतरपर्वतेषु "पादा. प्रत्यन्त-पर्वता." इत्यमरः ।

अस्मदाचार्यैः उपश्लोकितः । श्लोकेन स्तुतः । श्लोक सघाते भ्वादिगणात्मने-पदधातो. उपोपसर्गपूर्वकस्य कर्मणि क्तान्तः ।

पृ० ३१० पञ्चमुखप्राणदेवस्य पञ्चमुखानि अत्र वर्ण्यते । ससारवार्धौ पतिताना उद्धरणाय ससारान्निर्मोचनाय कृतः अवतार. यस्य सः ।

दोःसाध्ये स्ववाहुवलेन आसादयितु शक्ये राज्यधनस्त्रीसपदादौ । राज-धनयोषित् इति समाहारार्थे एकवचनं । दोःसाध्यराज्यधनयोषिति दभ्रा अल्पा वुद्धिः आसक्तिः यस्य सः तादृश । पाठान्तरं तु राज्यधनयोषिददभ्रबुद्धेः राज्य-धनस्त्र्यादिषु अदभ्रा अनल्पा वुद्धिः मतिः यस्य सः । तस्य राज्यनादिषु पूर्णतया आसक्तस्य पुरुषस्य दुस्साध्य दुःखेन आप्तुं शक्य हे पञ्चाननेश । यो अविरक्तः राज्यधनादिष्वैव आसक्तः आस्ते तेन पञ्चाननस्य प्राणदेवस्य अनुग्रहः नैव लब्धु शक्यः इति भावः । मम करयो अवलम्व आश्रयं देहि । मा सकलापद्भ्यः परित्रायस्व उद्धरेति भावः ।

श्लोक २ आप्रातः प्रातःकालादारभ्य कुत्सितानां नाथानां स्वामिनां अल्पयो-ग्याना जनानामिति यावत् । निकेतनानां गृहाणां अलिषु पंक्तिषु संचारकृत्ये पटुपादयुगस्य भिक्षाप्राप्त्यै मधुकरीवृत्तिं गृहीत्वा संचरत. मे । मायाः लक्ष्मी-देव्या. नाथस्य श्रीविष्णोः सेविना सेवायां रतानां भक्तानां जनानां संगमः तैः मेलनरूपं निष्कृत प्रायश्चित्तमपि नो नैव प्राप्तम् । "इन्दिरा लोकमाता मा क्षीरोदतनया रमा" इत्यमरः । प्रातःकालादारभ्य कुत्सितजनानामाश्रयणे

र्ति कृत्वा अपराध कुर्वतः मे एतदपराधोपशमनाय विष्णुभक्तसेवारूपप्राय॰ श्चित्तस्यावकाशो नैव लब्धः । मन्दभाग्योऽहमिति भावः । अतः त्व करावलम्बन दत्वा उद्धरेति प्रार्थना ।

श्लोक ३ अज्ञानरूपगाढाध-कारेण अतिभयप्रदाया । षड्वर्गवैरिणा काम-क्रोधलोभमोहमदमत्सराख्याना षड्वैरिणां सुखकराया उत्तेजनकारकाया ससाराख्यगुहायां कर्मानिलेन प्रारब्धकर्माख्यवातेन विनिवेशितस्य प्रवेशितस्य देहस्य धारणकर्तुः मे कराश्रय देहि । कर्मबंधमपहाय ससारान्मोचयेति भावः ।

(४) सच्छास्त्रसारे परिमज्जनेन । सच्छास्त्राणा निरन्तरमालोडनेन शुद्धचित्ता । त्वत्पादपद्मयोः परिचिंतनेन ध्यानेन प्राप्येन आनन्देन पूर्णाः मज्जनाः विषयरागैः दूषितचित्त मा नो नैव पश्यति । अतः अशरणस्य मे त्वमेव शरण देहि ।

श्लोक ५ अह पञ्चेन्द्रियैः अर्जितं महत् अखिल पापकर्म इह भोक्तु न शक्त । दीनजने दयालो पञ्चाननेश अत्यंतदुष्टमनसः दृढं नष्टा दृष्टि ज्ञानदृष्टिः यस्य सः तस्य मे करावलम्ब देहि ।

श्लोक ६ अखिलेष्टना प्रदाता भगवान् संतुष्टि प्राप्नोति । अस्मभ्यमपि अखिलेष्टानि प्रददातीति भावः । "य यथा यथा उपासते तत्तदेव भवति" इति नियम । अखिलेष्टसिद्धि भविता इति भावः ।

प० ३११ चम्पूग्रथनिर्मातारः कविवरेण्याः अधुना श्रीमुयमीन्द्रगुरुद्वारा श्रीगुरुराजेभ्य. इमं अमोघ ललितपदालङ्कारादिभिः सुमनोहर गद्यपद्यनाटकमयं. महाकाव्यलक्षणलक्षित चम्पूप्रबध समर्पयितुकामा. अस्मिन् ग्रथे उपवर्णितान् विषयविशेषान् एकत्र क्रोडीकुर्वंति गुरुजनचित्तावगाहनाय ।

ऐतिहासिकप्रमाणानुबद्ध । चम्पूप्रबधरचयितार कविवर्या समग्रभारत-देशे प्रथितयशसः इतिहासशास्त्रज्ञा ये आत्मन अनेकापूर्वंमशोधनैः इतिहास-शास्त्रस्यैव अमिता प्रगति साधितवन्तः । अनितरसाधारणान् शिलालेखान् ताडपत्रग्रथान् असख्यानि ऐतिहासिककथासूचकवस्तूनि च सगृह्य द्विशताधिक ग्रथविशेषान् सशोधनलेखाञ्च विरचय्य इतिहासशास्त्रज्ञाना पक्तौ अग्रेसरत्वं प्राप्ता विद्वद्भि विद्वत्सभासु विद्याभूषणमहामहिमोपाध्यायादिविरुदै पर समानिता राराजन्ते । एतादृशैः ग्रथकर्तृभिः अत्र उपनिबद्धा. विषया ऐतिहा-सिकसामग्रीरूपेण परीक्ष्य याथातथ्येन निर्णीता एव इति निश्चप्रचमवगन्त-व्यमिति भाव. ।

प ३१२ विवित्सूनां वेत्तु ज्ञातुमिच्छूनां जनानाम् । वैष्णवं यश. विष्णुभक्तानां यश' कीर्ति. तस्य श्रवणं प्रसरण च विष्णूद्रेकाय विष्णोः सर्वोत्तमत्वद्योतनायैव प्रवर्तते न केवल विष्णुभक्ताना महात्म्यप्रदर्शनाय इति नियमः। पिपठिपूणा पठितुमिच्छूना ।

प० ३१३ मनः प्रावण्यं मनस. नम्रतां शुद्धि प्रगुणत्वं वा । "प्रवणः क्रमनिम्नोर्व्यां प्रह्वे च स्याच्चतुष्पथे । आयत्ते च तथा क्षीणे प्रगुणे समुदाहृतः" इति धरणिः ।

भक्त्या समर्पित उपायन दिव्यदृष्ट्याऽवलोकयन्त' अस्य । चम्पूप्रबधस्य समापनकाले श्रीसुयमीद्रंतीर्थाः भौतिकशरीरेण नेहावसन् इत्यनेन सूच्यते । पर कविवर्याणां महती सिद्धि कृपापूर्णया दिव्यदृष्ट्या अवलोक्य श्रीसुयमीन्द्रतीर्था चम्पूग्रथ स्वीकृत्य श्रीगुरुसार्वभौमेभ्मः तद्द्वारा श्रीमुख्याप्राणान्तर्गत मूलरामचन्द्राय समर्प्य सपरिवारेभ्य कविवर्येभ्य अनुग्रहविशेष वितन्वीरन्निति सभक्तिक सप्रार्थ्य चम्पूप्रबधस्य निर्विघ्नपरिसमाप्ति. संपादयन्ति । इति शम् ।

मङ्गल सर्वकार्याणां मङ्गलायतनो हरिः ।
सन्मङ्गल प्रदायाशु त्रायता मत्कुलालयम् ॥

इति चम्पूभाव बोधिन्यां चतुर्दश उल्लासः ।

चम्पूभावबोधिनी समाप्ता ।

श्रीकृष्णार्पणमस्तु ।

## श्लोकाक्षरानुक्रमणिका
### (उल्लासक्रमतः)

## क

द

| | | | | |
|---|---|---|---|---|
| १६९ | दैत्यप्रासादतूणातट | ६/१८ | स्रग्धरा | १४७ |
| १७० | दैत्य प्रह्लादमाराद् | ६/२० | स्रग्धरा | १४८ |
| १७१ | दशप्रकरणीटीका | १०/३२ | अनुष्टुभ् | १८९ |
| १७२. | दृप्तो य पृथुमस्तकेन | १०/३५ | शार्दूल | १९१ |
| १७३. | दध्यङ्मुनि सुरकृते | १०/५३ | वसन्त | २०४ |
| १७४ | देवी श्रीरथ | १२/२४ | शार्दूल | २८२ |

ध

| | | | | |
|---|---|---|---|---|
| १७५ | धन्योऽस्मि वरदेश त्व | ४/१५ | अनुष्टुभ् | ३६ |
| १७६ | धन्योऽह गुरुपादसग | ६/३८ | शार्दूल | ६५ |
| १७७ | धन्योऽस्मि कृतकृत्योऽस्मि | ७/२१ | अनुष्टुभ् | ७७ |
| १७८ | धान्यराशीरथ | ७/४० | रथोद्धता | ८२ |
| १७९. | धन्याऽह तरियन्त्रवाहनिरत | ८/४३ | शार्दूल | १२५ |
| १८०. | धन्योऽस्मि कृतकृत्योऽस्मि | ९/१४ | अनुष्टुभ् | १४२ |
| १८१ | धन्या भारतभूमि | ९/१५ | शार्दूल | १४६ |
| १८२. | धन्योऽह वरयोगिराजगुणा | १०/४२ | शार्दूल | १९२ |
| १८३. | धन्योऽह यदनर्घ्यवाक्य | १०/४६ | शार्दूल | १९५ |
| १८४. | धन्योऽस्मि वैष्णवगुरु | १०/५८ | वसन्त | २११ |
| १८५ | धन्योऽस्मि भोगु रुवर | ११/११ | वसन्त | २३८ |
| १८६ | धन्यो गुरु राघवेद्र | ११/१८ | पालिनी | २४१ |

न

| | | | | |
|---|---|---|---|---|
| १८७ | न्यायामृतचन्द्रिका | १/२३ | अनु | ३ |
| १८८ | ननु गुरु वचनं तत् | १/४७ | मालिनी | ६ |
| १८९. | नानावतारभृदनतगुणैक | २/८ | वसन्त | १४ |
| १९० | न्यग्रोधोदग्रमाकद | ३/१५ | अनुष्टुभ् | २२ |
| १९१ | नि शकमल्ल | ३/३८ | अनुष्टुभ् | २७ |
| १९२ | नमस्ते देवेश | ४/२२ | शिखरिणी | ३९ |
| १९३ | नासीत्सुराणामसुर | ३/४३ | उद्रवज्रा | २७ |
| १९४ | निद्राऽऽह्वा सा | ५/२१ | अनुष्टुभ् | ५० |
| १९५ | न जानीमो वीर्य | ६/३३ | शिखरिणी | ६४ |
| १९६ | निपीदति चिर गुरुरसौ | ६/४१ | अनुष्टुभ् | ६७ |
| १९७ | नद्य सुभगावगाहा. | ८/८ | गाथा | १०६ |

| | | | |
|---|---|---|---|
| २२८. प्राणा न याति मम | १०/४८ | वसत | २०१ |
| २२९ पापापनेदनपटुर्ननु | १०/६१ | वसत | २१२ |
| २ ३० पैत्री वाचमवेक्ष्य | १०/७४ | शार्दूल | २१४ |
| २३१. प्रह्लादध्रुव नारदेन्द्र | १२/५१ | उपजाति | २८६ |
| २३२ पश्याभ्युद्घवपुर्जटाधरमम् | ११/१० | शार्दूल | २३८ |
| २३३ प्रह्लादोऽभूद्रक्षित | ११/२४ | शालिनी | २५५ |
| २३४ प्राणप्रेयान् राघवेन्द्रो | ११/१६ | शालिनी | २४० |
| २३५. प्रोद्यद्भिर्हिमशीकरैं | १२/५१ | उपजाति | २८६ |
| फ | | | |
| २३६ फाल्गुणेऽब्दपति | १२/३९ | रथोद्धता | २८४ |
| २३७ फणिशय्याशयन | १२/५२ | | २८६ |
| ब | | | |
| २३८. बोधिबोध्य | १/५१ | जाति | १० |
| २३० बाभाति न्यायामृतमत्युदार | ३/२४ | इंद्रवज्रा | २४ |
| २४०. बौद्धचार्वाक शैवाद्यैः | ३/३४ | अनुष्टुभ् | २६ |
| २४१. ब्रह्माद्यैः पुरुहूतधूर्जटि | ४/६ | शार्दूल | ३३ |
| २४२ बल्यध्वरे बटुवपुर्वर | ६/२६ | वसत. | ६१ |
| २४३. बीज यथाङ्कुरसुपुत्र | ६/२९ | वसत | ६३ |
| २४४ बलित्थादिमन्युसूक्तैर्वा | ८/३ | अनुष्टुम् | १०४ |
| २४५ ब्रह्मादय सुरगणा | ८/४८ | वसत | १२६ |
| २४६. ब्रह्माक सभववच. सुधया | ९/१ | वसत | १२८ |
| २४७ बुध्यस्व निर्जित कले | ९/४ | वसत | १२८ |
| २४८ बल्यध्वरे बटुवपुर्हरि | १०/७० | वसत | २१४ |
| २४९. बाल्ये नर्तननीतिनिपुण | १०/८३ | शार्दूल | २१८ |
| २५० बादरायणसुसूत्र भावदीप | ११/४ | रथोद्धता | २२१ |
| २५१. ब्रह्माण परिपेवितु | १३/२ | शार्दूल | २८६ |
| भ | | | |
| २५२. भूयोवार्धिस्नान | १/४२ | शालिनी | ५ |
| २५३ भगवन्नयमग्रणीर्बुधाना | १/४४ | उपजाति | ७ |
| २५४ भुवनेन्द्र गुरो | १/५० | अनु | १० |
| २५५ भिक्षासुतुष्टो | ३/१४ | इद्रवज्रा | २२ |
| २५६. भञ्जयन्निक्षुकण्डम् | ३/२१ | स्रग्विणी | २४ |

म

| | | | |
|---|---|---|---|
| २८६. मन्त्रसिद्धिमधिगम्य | ११/५ | रथोद्धता | २२२ |
| २८७. मदानिला सान्द्रपयोधरा | १२/२१ | इंद्रवज्रा | २८२ |
| २८८. माघे मासि दयाघनो | १२/३८ | शार्दूल | २८४ |
| २८९ महानुभावोऽयमथाद्रिराज. | १२/६६ | उपेंद्र | २८७ |
| २९०. मधुकुसुमसुगंधैः | १२/६ | मालिनी | २८० |
| | य | | |
| २९१. यस्यापागलवक्षेपात् | १/२ | अनुष्टुम् | १ |
| २९२. यर्गोलाद्रिगुहासु | १/१७ | शार्दूल | ३ |
| २९३ योऽभूद्गर्भे | १/३२ | शालिनी | ४ |
| २९४. यत प्रवृत्तिर्भूताना | २/४ | अनु | १४ |
| २९५. य· कच्छपे | २/५ | वसत | १४ |
| २९६. येन ध्रुवो | २/६ | वसत | १५ |
| २९७. यत्पादावुजसंगता | २/९ | शार्दूल | १५ |
| २९८. यस्यातेवासिवर्गे | ३/२२ | स्रग्धरा | २४ |
| २९९. यच्चद्रिका | ३/२३ | इद्रवज्रा | २४ |
| ३००. यत्तर्कताण्डव | ३/२५ | अनुष्टुम् | २४ |
| ३०१. येन श्रीमनवेऽनघं | ४/१९ | शार्दूल | ३९ |
| ३०२ यथा नाग्निर्दग्धु | ५/६ | शिखरिणी | ४४ |
| ३०३. यत्याश्रमाचारपरिचयाय | ५/१३ | उपजाति | ४७ |
| ३०४. यथा राहुग्रासात् | ३/३७ | शिखरिणी | २७ |
| ३०५. यद्दच्छया वेंकटनाथविप्रः | ५/१४ | उपजाति | ४७ |
| ३०६. यदा निद्रादूतीविरह | ५/२० | शिखरिणी | ५० |
| ३०७. यत्सपर्कात्प्रिया आसन् | ६/२८ | अनुष्टुम् | ६३ |
| ३०८ यन्नामग्रहणं सुपापदलन | ६/४० | शार्दूल | ६६ |
| ३०९ य प्राक् सन्यसनात्सुधीद्र | ७/१७ | शार्दूल | ७७ |
| ३१०. य. प्रेम्मा जगतीतले | ७/२९ | शार्दूल | ७९ |
| ३११. य ब्रह्माकमथादिदेश | ७/३० | शार्दूल | ७९ |
| ३१२. या दिव्यज्ञानदात्री | ७/३४ | स्रग्धरा | ८० |
| ३१३. यत्कटाक्षवलतश्च सा | ७/३८ | रथोद्धता | ८१ |
| ३१४. यन्मन्त्रतन्त्रनिपुणो | ८/३ | वसत | ९० |
| ३१५. यस्त्रेतायुगजन्मना | ८/६ | शार्दूल | १०५ |

# शुद्धाशुद्धपत्रिका

| पत्रं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२ | २६ | तलामलाकायितं | तलामलकायितं |
| ,, | २७ | शापैर्दैत्यभावं | शापाद्दैत्यभावं |
| १६ | १ | आकाशमंडवं | आकाशमंडलं |
| ,, | ३० | पिशुन र्वचो | पिशुनैर्वचो |
| १७ | १ | व्रह्म | व्रह्मा |
| १८ | ३ | पसाराशी | संसाराशी |
| ,, | १९ | नुर्हरि | नृर्हरि |
| १९ | २५ | भारवत्कर्णिकावत् | भास्वत्कर्णिकावत् |
| २० | २ | शिखिर | शिखर |
| २७ | १५ | यौ | यो |
| ,, | | श्लोकसख्या ४० ४१ ४२ ४३ ४४ ४५ ४६ | ३९ ४० ४१ ४२ ४३ ४४ ४५ |
| २८ | ७ | सपाद्याथ | सपाठ्याथ |
| ३० | २३ | भगवद्राद्धात | भगवद्राद्धात |
| ३२ | २७ | सतुस्टा | सतुष्टा |
| ,, | ३० | अनुसधाना | अनुसंदधाना |
| ३३ | ११ | द्वैमात्र | द्वैभ्रात्रं |
| ३४ | १६ | शिलाफलव | शिलाफलक |
| ,, | १९ | कर्प्बु र | कर्बुर |
| ३५ | २६ | जिण्णुलेख | जिष्णुलेख |
| ३७ | ४ | समापायितु | समापयितु |
| ३९ | २० | कुवन् | कुर्वन् |
| ४० | ८ | पुत्रकाभ्यया | पुत्रकाम्यया |
| ;, | १८ | हैभाद्रि | हैमाद्रि |
| ४४ | ५ | मनावृत्ति. | मनोवृत्ति. |
| ४८ | २० | कल्पयादप | कल्पपादप |
| ५० | १७ | धौतोचरीयमयी | धौतोत्तरीयमयी |

| | | | |
|---|---|---|---|
| ,, | ,, | सुप्वाप | सुष्वाप |
| ५१ | २७ | सर्मधताम् | समेधताम् |
| ५४ | २ | तस्मारणाय | तत्स्मारणाय |
| ५६ | १२ | आदत व्यमिति | आदर्तव्यमिति |
| ५८ | ७५ | न्यायोजयत् | न्ययोजयत् |
| ६० | २३ | कारुघ्यमूर्तिः | कारुण्यमूर्तिः |
| ६२ | ६ | व्रसयांचक्रतुः | वासयांचक्रतु. |
| ६४ | २५ | विस्तरय | विस्तारय |
| ,, | २७ | यामस्म | यामस्त |
| ६८ | १२ | सदमि | सदसि |
| ,, | १५ | ऽम्यधिका | ऽभ्यधिका |
| ७१ | १४ | ···वृत्ति | ···वृत्तिः |
| ,, | १७ | मुरारे | मुरारेः |
| ,, | २७ | गुरुन्नत्वा | गुरून्नत्वा |
| ७४ | १७ | प्रत्यच्यै | प्रत्यर्च्य |
| ७५ | १ | विशेपा प्रकाशादिवत्' | विशेपात्प्रकाशादिवत्' |
| ७६ | २६ | गलावलंविभि. | गलावलंविनीभि. |
| ७७ | ७ | ऽनन्यद्यीः | ऽनन्यधीः |
| ७७ | १५ | विष्णुंज्ञैणव | विष्णुत्वैणव |
| ७९ | ८ | व्रह्माणमथादिदेश | यो व्रह्माणमथादिदेश |
| ८१ | ५ | आराघना | आराधना |
| ,, | ६ | सज्जीकृताम् | सज्जीकृतम |
| ८३ | १४ | सामायवंश्च | सामाथर्वंश्च |
| ८४ | ७ | वसिप्टादि | वसिष्ठादि |
| ,, | १२ | सूत्रमाप्ये | सूत्रभाप्ये |
| ८६ | १२ | विधटयतीति | विघटयतीति |
| ९१ | ५ | गायती | गायंतो |
| ,, | १७ | ···कर्माख्यं संस्कारः | ···कर्माख्यसंस्कारः |
| ९३ | १३ | तत्तर्दगप्रदेशेपु | तत्तदंगप्रदेशेपु |
| ,, | २२ | अभिवादनाश्यर्थनादिकं | अभिवादनाभ्यर्थनादिक |
| ,, | ,, | कर्तकामाः | कर्तुकामा. |

